॥ श्रीः ॥

# वीरसिंहावलोकः ।



श्रीमत्तोमरवंशावतंसेन–वीरसिंहेन संकलितः ।

( ज्योतिश्शास्त्र कर्मविपाक-वैद्यशास्त्रेषूक्तं
सकलामयानां सनिदानं चिकित्सितम् )

स च

श्रीकृष्णदासात्मज–गङ्गाविष्णुना
स्वकीये " लक्ष्मीवेंकटेश्वर " मुद्रणालये
मुद्रयित्वा प्रकाशितः ।

शकाब्दाः १८४६, संवत् १९८१

कल्याण–मुंबई.

श्रीमते वेंकटेश्वराय नमः

# विद्वदभ्यर्थना

अन्यानि शास्त्राणि विनोदमात्रं
प्राप्तेषु कालेषु न तेश्च किंचित् ।
चिकित्सितज्योतिषमन्त्रवादाः
पदेपदे प्रत्ययमावहन्ति ॥

सकलसज्जननिवहानां पुरत समुल्लसतु मे विज्ञापनाञ्जलि —

भो विद्वद्वर्या । अयं च ज्योतिश्शास्त्र-धर्मशास्त्र-वैद्यशास्त्रानुशासितः वीरसिंहावलोकोनामग्रन्थ श्रीमत्तोमरवंशावतसभूतेन नरसिंहेन श्रीवीरसिंहेन महीभुजा प्राणायि । येन पुरुषार्थचतुष्टयसाधनीभूतमानुषशरीराणां व्याध्युपसृष्टा सिद्धिप्रत्यूहभूता दोषा अपाक्रियन्ते । अयं च तोमरवंश अनेन काश्मीरदेशेषु तद्राजनामाऽभिधनेत्यनुमीयते । एतद्वंशसमुत्थेन केनचिद्राज्ञा कश्चिदालङ्कारिकग्रन्थ' प्रणीतोऽस्तीति केषाचिन्मुखाच्छ्रूयतएव । एतावता विद्यालङ्कृते तोमरवंशे विकासमापन्नोऽयं वीरसिंह कस्मिन्काले अभवदित्येतन्न निश्चेतुं शक्यते । ( परंतु निर्णयकमलाकरादि ग्रन्थेष्वेतदुक्तधर्मशास्त्रानुसारिवचनानि समुपलभ्यन्ते । निर्णयकमलाकरग्रन्थकालस्तु— •

वसुऋतुऋतुभूमिमिते गतेऽब्दे
नरपतिविक्रमतोऽथ याति रौद्रे ।
तपसि शिवतिथौ समापितोऽयं
रघुपतिपादसरोरुहेऽपितश्च ॥

इति तद्ग्रन्थसमाप्तेरेतत्कालादप्य पूर्वैरव लभ्यते । किंच योगतरङ्गिण्यां चिकित्साप्रकरणे बहुषु स्थलेषु गृहीत अत्रत्यवचनानामुल्लेखोस्ति । परं च कोऽपि वर्वीरनामकसाधुशालीनस्तच्छत्रच्छत्रदण्डायमानो वीरसिंहो नाम महीपतिरासीदित्येव तदात्यायिकालोऽनसीयते । अस्य कालस्तु १०७०

तमशालिवाहनशकत १३७० तमशकपर्यन्तमासीदिति तच्छिष्यपरम्परातो ज्ञायते । स एवायमित्यपि गुरुशिष्ययोर्वा नहि निर्णेतुं शक्यते देशभेदात् ) आस्तांतावत् । अनेन चात्र ग्रन्थे न किञ्चिदपि निजकपोलकल्पितं दृश्यते यत चरक-सुश्रुत-वाग्भटवृद्धसंग्रहसारसंग्रहप्रभृतिग्रन्थेभ्य प्रमेयवचनानि संगृह्योपनिबद्धोयम् । अयं च प्रथम शिलायन्त्रे एकस्मात्क्वचिज्जीर्णपुस्तकादस शुद्धं मुद्रित आसीत् । तत्र च कतिचन विषया व्यस्तान्यस्ता आसन् । सुतरामशुद्धाश्च । तेन च सहृदयहृदयैरनुभोग्यमान सन्ताप ममनरोऽस्य तदव-स्थांपरिहर्तुमुद्यमेन संपाद्य त्रीणि जीर्णपुस्तकानि तदाधारतया एव तत्र शास्त्रिभिस्संशोध्य स्वकीये "लक्ष्मीवेङ्कटेश्वराख्य" मुद्रणयन्त्रे मुद्राप्य प्रकाशमानीतं सतामानन्दयुं संविधात्तातमाम् ॥ अत्राप्यशुद्धं यदि तदिदं विद्वद्भि-स्संशोध्य प्रमाणसाहाय्येन बोधनीयस्तदाहमिति प्रार्थये । इति शम् ॥

गङ्गाविष्णु श्रीकृष्णदास,
" लक्ष्मीवेङ्कटेश्वर " छापखाना,
कल्याण-मुंबई.

श्री. ।

अथ

# वीरसिंहावलोकस्थविषयानुक्रमणिका ।



| विषय | पृष्ठाङ्क |
|---|---|

इति वीरसिंहावलोकस्थविषयानुक्रमणिका।

---

पुस्तक मिलनेका ठिकाना–

गंगाविष्णु श्रीकृष्णदास,

"लक्ष्मीवेङ्कटेश्वर" स्टीम् यन्त्रालय

कल्याण–मुंबई.

श्रीः ।

# वीरसिंहावलोकः ।



यच्चक्षुर्भुवनस्य दिव्यममलं धाम श्रुतीनां परं
यद्ब्रह्मैकनिकेतनं च पयसां बीजं यदेकं मतम् ।
सत्रेष्वग्निहुतस्य वेदविदितं स्थानं च यत्सर्वदा
तद्वः पातु सनातनं हरिमहस्तत्त्वप्रबोधोदयम्॥ १ ॥

दैवज्ञागमधर्मशास्त्रनिगमायुर्वेददुग्धोदधी-
नामथ्य स्फुरदात्मबुद्धिगिरिणा विश्वोपकारोज्ज्वलम् ।
आलोकामृतमातनोति विबुधैरासेव्यमत्यद्भुतं
श्रीमत्तोमरदेववर्मतनयः श्रीवीरसिंहो नृपः ॥ २ ॥

इह खलु पुरुषार्थचतुष्टयाय धीमतां प्रवृत्तिः । तत्राद्यो धर्मः । स शरीरमन्तरेण न संभवति । तच्च रोगरहितं धर्मकर्मक्षमं भवति । तत्स्वरूपनिरूपणाय तद्दोषप्रतीकाराय च रोगाः परिगण्यन्ते । ते च पूर्वाचार्योक्ताः—

ज्वरोऽतिसारो ग्रहणी चार्शोऽजीर्णं विषूचिका ।
सालसा च विलंबी च कृमिरुक्पाण्डुकामलाः ॥
हलीमकं रक्तपित्तं राजयक्ष्मा क्षतक्षयः ।
कासो हिक्का तथा श्वासः स्वरभेदस्त्वरोचकः ॥
छर्दिस्तृष्णा च मूर्च्छा च रोगाः पानात्ययादयः ।
दाहाख्यस्त्वपरोन्मादोऽपस्मारोऽथानिलामयः ॥
... ... ... ... ...ातो... शूलकः ।

पक्तिजं शूलमानाहमुदावर्तोऽथ गुल्मरुक् ॥
हृद्रोगो मूत्रकृच्छ्रं च मूत्राघातस्तथाश्मरी ।
प्रमेहो मधुमेहश्च पिटिकाश्च प्रमेहजाः ॥
मेदो दोषोदरः शोथो वृद्धिश्च गलगंडक॰ ।
गंडमालापचीग्रंथिरर्बुदं श्लीपदं तथा ॥
विद्रधिर्व्रणशोथश्च द्वौ व्रणौ भग्ननाडिकौ ।
भगंदरोपदंशौ च शूकदोषस्त्वगामयः ॥
शीतपित्तमुदर्दश्च कोठश्चैवाम्लपित्तकम् ।
विसर्पाश्च सविस्फोटाः सरोमंत्यो मसूरिकाः ॥
क्षुद्रास्यकर्णनासाक्षिशिरःस्त्रीबालकामया॰ ।
विषं चेत्ययमुद्देश॰ संग्रहेऽस्मिन्प्रकीर्तित॰ ॥

अथ क्रमप्राप्तस्य ज्वरस्य ज्योतिःशास्त्राभिप्रायेणोत्पत्तिप्रकारमाह यथोक्तं जातके-

नीचस्थितस्य भानोर्दशाक्षिनाशं ज्वरं शिरोरोगम्
बंधनमत्यध्वरुज कुष्ठस्य च दर्शनं चिह्नम् ॥

जनयतीति शेष॰ । क्षीणेंदुदशायामप्येवम् । अन्यच्च सारावल्याम्-

सुहृद्बंधुसमायोगो भूनिमित्ते कलिर्भवेत् ॥
देहपीडा ज्वरो व्याधिः शिखिमध्यगते बुधे ॥

शनेरंतर्गते तमस्यप्येवम् । तत्तद्ग्रहवैकृतनिराकृतये जपहोमादिकं कुर्यात् । यथाह हारीतः-

जन्मांतरकृतं पापं व्याधिरूपेण बाधते ।
तच्छांतिरौषधैर्दानैर्जपहोमसुरार्चनैः ॥ इति ॥

तत्र नीचगे रवौ तद्बाधोपशांतये आकृष्णेनेति जपः आर्कीभिः समिद्भिर्जुहुयात् धेनुं दद्यात् ।

मनःशिलैलासुरदारुकुंकुमैरुशीरयष्टीमधुपद्मकान्वितैः ।
सताम्रपुष्पैर्विषमास्थिते रवौ शुभावहं स्नानमुदाहृतं बुधैः॥

विद्रुमं च धार्यम् । क्षीणेंदुदशाजनितबाधोपशांतये यथा इमंदेवेति जपः । पालाशीभिः समिद्भिर्जुहुयात शंखं दद्यात् ।

पंचगव्यगजदानविमिश्रैः शंखशुक्तिकुमुदस्फटिकैश्च ।
शीतरश्मिकृतवैकृते हितं स्नानमेतदुदितं नृपतीनाम्॥

रौप्यं मुक्ताफलं च धार्यम् । केतुदशांतर्गतबुधजनित-दुरितक्षयाय उद्बुध्यस्वेति मंत्रजप । अपामार्गसमिद्भि-र्जुहुयात हेम दद्यात् ।

गोमयाक्षतफलैः सरोचनैः क्षौद्रशुक्तिभवमूलहेमभिः ।
स्नानमुक्तमिदमत्र भूभृतां बोधनाशुभविनाशनं बुधैः॥

हेम धार्यम् । शनैश्चरांतर्गतराहुजनितदुरितोपशमाय कयानश्चित्र इति मंत्रेण जपः । दूर्वासमिद्भिर्होमः आय-सं च दद्यात् ।

असितातिलांजनलोध्रबलाभिः
शतकुसुमाघनलाजयुताभिः ।

रवितनये कथितं विषमस्थे
दुरितह्रदाप्लवनं मुनिमुख्यैः ॥

राजावर्त्तपरिधानं च । अथ कर्मविपाकाभिप्रायेण ज्वरस्य हेतुमाह तत्प्रतीकारं च यथाह गार्ग्यः—

ये पुनः पूर्वजन्मानि क्रूराः पिशुनचेतसस्तेऽन्यजन्मनि संततज्वरवंतः स्यु । तच्छमनार्थं जातवेदसमष्टोत्तरशतयुतं कल्पम् । सहस्रकलशाभिषेकं महादेवस्य कुर्यात् ब्राह्मणभोजनं च कारयेत् । अन्यच्च—

ये पुन. क्रूरकर्माण' पापा पिशुनचेतस ।
ते भवेयु सदाशीतज्वरवंतश्च तत्परा' ॥
शांतयेऽयुतसंख्याकं कुर्यात्तु प्रयतो जपम् ॥
जातवेदसमन्त्रेण ब्राह्मणान्भोजयेत्तत ॥
सुरामासोपहाराद्यै कल्पं तत्र प्रशस्यते ॥

सहस्रकलशस्नानशतभोजनमेव च । इति । तत्र ब्राह्मणभोजनं गुरुलघुभावेन द्रष्टव्य अशक्तापेक्षया वा वित्तशाठ्यं न कुर्वीतेतिवचनात् । इति संततज्वरम् । संनिपातज्वरमनुक्त्वा संततज्वरप्रतीकारस्य यत्कथनं तदार्षवचनानुरोधात् । शुभकार्यसंततसंकोचन. उष्णज्वरवान्भवति महादेवस्य सहस्रकलशाभिषेकमाचरेत् शक्त्या ब्राह्मणभोजनम् । तथा चोक्त महेश्वरतंत्रे 'उष्णज्वरे महेशस्य प्रकुर्यादभिषेचनम् ' इति । शीतज्वरे विष्णो सर्वमेतत्कार्यम् ।

शीतज्वरे तथा कुर्यादभिषेकं हरेर्बुधः' इति वचनात् ।
गदाही ज्वरवानिति ।

नवकुंभं समानीय मृन्मयं चाव्रणं दृढम् ।
लोहितं कर्णरहितं स्थापयेत्तंडुलोपरि ॥
तंडुलानां परीमाणं द्रोणपंचकमिष्यते ।
विशुद्धास्तंडुला ग्राह्याः श्वेतवस्त्रेण वेष्टयेत् ॥
मधुनाप्यथवाज्येन गुडशर्करयापि च ।
तिलैः प्रपूरयेदद्भिर्यथा विभवतो नरः ॥
श्वेतपुष्पैरर्चयेत्तं गंधधूपैस्तथापरैः ।
होमश्च पूर्ववत्कार्यः समिदाज्यचरूत्कटः ॥
सुवर्णं च यथाशक्त्या ब्राह्मणाय निवेदयेत् ।
तस्मै व्रतवते वृत्तश्रुतशीलाय सत्कृतम् ॥
मंत्रेणानेन विधिवत्पूजयित्वा ज्वरी नरः ।
महेश देवदेवेश देवदेव परात्पर ॥
कुंभेनानेन दत्तेन ज्वरः क्षिप्रं विनश्यतु ।
एकांतरं संनिपातं तृतीयं च चतुर्थकम् ॥
पाक्षिकं मासिकं वापि सांवत्सरिकमेव च ।
नाशयेतां मम क्षिप्रं वासुदेवमहेश्वरौ ॥

अचीर्णप्रायश्चित्तो न दानाद्यधिकारीत्याशंक्याह ।
अत्रोक्तमेव जपहोमादिकं प्रायश्चित्तं वेदितव्यम् ॥
इति सर्वज्वरहर कुंभदानविधि ॥

कर्मविपाकोक्तं ज्वरमताकाम्मुक्त्वा भिषक्शास्त्रमतिपादितं सनिदानं ज्वरचिकित्सितमाह-

रोगमादौ परीक्षेत ततोऽनंतरमौषधम् ।
ततः कर्म भिषक्पश्चाज्ज्ञानपूर्वं समाचरेत् ॥

तथा च सुश्रुताचार्यः-

यस्तु रोगविशेषज्ञः कर्मभैषज्यकोविदः ।
देशकालप्रमाणज्ञस्तस्य सिद्धिरसंशया ॥
आदावंते रुजां ज्ञाने प्रयतेत चिकित्सकः ।
साध्यासाध्यविभावज्ञस्ततः कुर्याच्चिकित्सितम् ॥
नास्ति रोगो विना दोषैर्यस्मात्तस्माद्विचक्षणः ।
अनुक्तमपि दोषाणां लिंगैर्व्याधिमुपाचरेत् ॥
विकारनाम्ना कुशलो नैव ह्रीयात्कदाचन ।
न हि सर्वविकाराणां नामतोऽस्ति ध्रुवा स्थितिः ॥
दर्शनस्पर्शनप्रश्नैर्व्याधेर्ज्ञानं त्रिधा मतम् ।
आयुरादिदृशा स्पर्शाच्छीतादिप्रश्नतोऽपरम् ॥
कृच्छ्रोपायः सुखोपायस्त्रिविधः साध्य उच्यते ।
असाध्यो द्विविधो ज्ञेयो याप्यो यश्चाप्रतिक्रियः ॥
याप्याः कश्चित्प्रकृत्यैव साध्या याप्या उपेक्षिताः ।
स्वभावाद्व्याधयोऽसाध्याः केचित्केचिदुपेक्षिताः ॥
साध्या याप्यत्वमायाति याप्याश्चासाध्यतां तथा ।
घ्नंति प्राणानसाध्याश्च नराणामक्रियावताम् ॥

जातमात्रश्चिकित्स्यस्तु नोपेक्ष्योऽल्पतया गदः ।
वह्निशत्रुविषैस्तुल्यः स्वल्पोऽपि विकरोत्यसौ ॥
निवृत्तोऽपि पुनर्व्याधिः स्वल्पेनायाति हेतुना ।
दोषैर्मार्गीकृते देहे खेषु सूक्ष्म इवानलः ॥
व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः ।
एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः ॥
याभिः क्रियाभिर्जायंते शरीरे धातवः समाः ।
या चिकित्सा विकाराणां कर्म तद्भिषजां मतम् ॥
उत्पद्यते हि सावस्था देशकालबलं प्रति ।
यस्यां कार्यमकार्यं स्यात्कर्म कार्यविवर्जितम् ॥

यथाह त्रिशठाचार्यः—

यद्रूपय शिखिसमीरवियद्भिरेभि—
र्भूतैर्गुणैरपि च सत्त्वरजस्तमोभिः ।
त्वग्दोषधातुमलमर्मशिरादिभिश्च
व्याप्तं वपुस्तनुभृतामिदमत्र रोगाः ॥
ते वातपित्तकफजास्त्रिविधा द्विधा वा
काये मनस्यपि च संत्यपरे नराणाम् ।
साध्याश्च ते क्वचिदपि प्रभवंति याप्याः
केचित्क्वचित्पुनरसाध्यतमा प्रदिष्टाः ॥
एकैकदोषजनिता निरुपद्रवाश्च
दीप्तानलस्य च सदात्मवतश्च जंतोः ।
वित्तान्वितस्य च रुजः सदुपक्रमेण

साध्या भवति भिषजामचिरोद्गताश्च ॥
ये यावदेव भिषजामगदप्रयोगा-
स्तावत्प्रशांतिमुपयांत्यगदैर्विना ये ।
प्रादुर्भवंति च पुनः सहसा हि दोषा-
स्तादृग्विधाः स्युरिति याप्यतमा गदास्ते ॥
ये कर्मजाऽसह भवंति शरीरिणां ये
य च त्रिदोषजनिताश्चिरकालजा ये ।
सोपद्रवाश्च्युतधनस्य च ते गताग्रे
रुग्रा गदा गदवतामगदैर्न गम्याः ॥
कर्मप्रकोपेण कदाचिदेके दोषप्रकोपेण भवंति चान्ये ।
तथापरे प्राणिषु कर्मदोषप्रकोपजाः कायमनोविकाराः ॥
जठरगुदजोन्मादापस्मत्यसृगुत्स्रुतिपंगुता-
श्रुतिविकलतावाग्वैकल्यप्रमेहभगंदरा ।
प्रदरपवनव्याधिश्चित्रक्षयक्षणदांधता-
तिमिरवदनघ्राणाशांसि श्वयथुविपचीव्रणा ॥
वल्मीककाकिणिकशंसकपुंडरीक-
रक्तार्बुदव्रणविसर्पवपुःप्रकंपाः ।
पक्षाभिघातनलगंडगलग्रहाश्च
दंडापतानकसमीरणशोणिताद्याः ॥
दंतामयाः स्युरपरद्रविणापहार-
गुर्वङ्गनागमनविप्रवधादिभिर्ये ।
दुष्कर्मभिस्तनुभृतामिह कमजास्ते

नोपक्रमेण भिषजामुपयांति सिद्धिम् ॥
दानैर्दयाभिरपि च द्विजदेवतागो-
गुर्वर्चनप्रणतिभिश्च जपैस्तपोभिः ।
इत्युक्तपुण्यनिचयैरपचीयमानाः
प्राक्पापजा यदि रुजः प्रशमं प्रयांति ॥
स्वहेतुदुष्टैरनिलादिदोषैरुपस्तुते स्वेषु परिस्खलाद्भिः ।
भवंति ये प्राणभृतां विकारास्ते दोषजा भेषजसिद्धिसाध्याः ॥
दानादिभिः कर्मभिरौषधीभिः कर्मक्षये दोषपरिक्षये च ।
सिध्यंति ये यत्नवतां कथंचित्ते कर्मदोषप्रभवा विकाराः ॥
दोषप्रदेशबलकालविकारसत्त्व-
सात्म्यौषधानलवयःप्रकृतीः परीक्ष्य ।
नानाप्रकारपवनादिगदातुराणा-
मुक्तं चिकित्सितमिदं तनु कर्मजानाम् ॥
वातादयः पूर्वमुदाहृता ये
दोषाः शरीरेषु शरीरिणां हि ।
वातस्त्वधस्ताद्वपुषश्च मध्ये
पित्तं कफश्चोर्ध्वमिति स्थितास्ते ॥
रसश्च रक्तं पिशितं च मेदस्त्वस्थीनि मज्जात्वथ शुक्रमेते ।
स्युर्धातवः सप्त मलास्तथैव विण्मूत्रमुख्या मुनिभिःप्रदिष्टाः
दोषेषु धातुषु मलेषु समेषु सत्सु
सात्म्यं भवेदिह नृणामसमेष्वसात्म्यम् ।
यस्मादतस्समतया प्रयतेत तेषा-

मेताश्चिकित्सितरहस्यमुदाहरन्ति ॥
नाभेरध प्रसृतयो दश यांत्यधस्ता-
दूर्ध्वंगता प्रसृतयो दश तद्वदेव ।
द्वेद्वे शिरे प्रवितते प्रसृते च तिर्यग्-
युक्ता चतुर्भिरिति विंशतिरत्र काये ॥

द्वादशभिर्द्विगुणाभिरमूभिर्व्याप्तमिदं नृशरीरमशेषम् ।
आभिरमी कफपित्तसमीरा स्वेवपुपि प्रसरन्ति शिराभिः ॥

आसां च सूक्ष्मसुपिराणि शतानि सप्त
युक्तानि तैरसकृदन्नरसैर्वहद्भि ।
आप्यायते वपुरिदं हि नृणामनीपा-
मंभ स्रवद्भिरिव सिंधुशतैः समुद्र ॥
आपादत प्रभृतिगात्रमशेषमपा-
मामस्तकादपि च नाभिभुवस्तनेन ।
एतन्मृदंग इव चर्मचयेन नद्धं
सम्यङ्नृणामिति शिराशतसप्तकेन
तेनानुगम्य च पुरैतदनेन दोषा
कुर्वन्ति कायकुपिता पवनादयोऽमी ।
रोगानशेषवपुषि त्वथवार्धकाये
शाखासु चाकवदथावयवान्तरेषु ॥
भूतानि कर्माणि च दोषधातु-
मलास्तथा सप्तशिराशतानि ।

प्रोक्तानि कर्माणि च हृद्गुदं च
नाभिस्त्विति त्रीण्यपरैः किमुक्तैः ॥
गुणत्रयं सत्त्वरजस्तमांसि हृदि स्थितान्यत्र मनोविकाराः।
नाभिप्रदेशाच्च शिरा प्रवृत्ता गुदे प्रधानांत्रमसुत्रबद्धम् ॥
अतःप्रधानानि भवंत्यमूनि हृन्नाभिप्राप्तानिनृणाममीपाम्।
एतन्मयं प्रोक्तमिदं शरीरमिति प्रकाशीकृतमल्पमात्रम् ॥

वातस्य पित्तस्य कफस्य वापि
विकारिणां कायवतां हि काये ।
प्रकोपहेतु कुपितस्य लिंगं
चिकित्सितं चेति निरूपणीयम् ॥

रूक्षैस्तिक्तैः कषायैः कटुभिरनशनैर्वेगसंधारणैश्च
व्यायामैश्च व्यवायैः प्रतरणबलवद्विग्रहैर्जागरैश्च ।
श्यामानीवारकंगुप्रभृतिभिरशनैरुद्धसाद्भि पयोदै-
रन्ते जीर्णे च जंतोरभिभवति तनौ मारुतस्य प्रकोपः॥

कट्वम्लोष्णविदाहितीक्ष्णलवणक्रोधोपवासातप-
स्त्रीसंपर्कतिलातसीदधिसुराशुक्तारनालादिभिः ।
भुक्ते जीर्यति भोजने च शरदि ग्रीष्मे सति प्राणिनां
मध्याह्ने च तथार्धरात्रिसमये पित्तप्रकोपो भवेत् ॥

गुरुमधुरातिशीतदधिदुग्धनवान्नपय-
स्तिलविकृतीक्षुभक्ष्यलवणातिदिवाशयनैः ।
समविषमाशनाध शयनपायसपिष्टकृते-
रपि च कफः प्रकुप्यति मधौ दिवादिषु च ॥

इति प्रकोपकारणैः प्रकोपमेत्य सर्वगाः ॥
समीरणादयस्तनौ रुजः सृजन्ति जन्तुषु ॥
वातपित्तकफकोपकारणं सूचितं यदिह सूत्रसङ्ग्रहे ।
प्रोच्यते तदिह साम्प्रतं मया रुक्परीक्षणमनेन कारयेत् ॥
दृशि-शिरसि च शङ्खे श्रोत्रनेत्रान्तरेषु
भुवि हृदि हनुमन्यास्कन्धमूर्द्धाङ्घ्रिसन्धौ ।
रुगातिनिशि दिवात्मा स्यादकस्मात्प्रशान्ता
भवति हि भुजजङ्घास्तब्धसङ्कोचता च ॥
कटिविटपयकृत्सु क्लोम्नि च प्लीह्नि पृष्ठे
जठरवृषणवक्षःकुक्षिकक्षान्तरेषु ।
प्रसरति गुरुशूलं नाभिवस्तिस्तनेषु
त्रिकवलिगुदगुह्योपान्तपक्षद्वयेषु ॥
वदनविरसता स्याद्वर्चसः कर्कशत्वं
भवति वपुषि कार्श्यं रात्रिनिद्रानिवृत्तिः ।
त्वचि च परुषता स्यात्स्याच्च वैषम्यमग्ने-
रिति पवनविकारे लक्षणं प्रोक्तमेतत् ॥
भ्रममदमुखशोषस्वेदसन्तापमूर्च्छा
मुखनयनमलत्वङ्मूत्रविट्पीतता च ।
प्रलपनमतिसारश्चारुचिश्च ज्वरश्च
तृडतिशिशिरतेच्छा पित्तरोगस्य लिङ्गम् ॥
अंगस्य गौरवमपाटवमन्तरग-
ह्वरक्लेशता च हृदयस्य मुखप्रसेकाः ।

आलस्यमास्यमधुरत्वमकाण्डकण्डू-
रापीतता नयनयोरतिरोमहर्ष॰ ॥
प्रज्ञाप्लुतिर्वमथुपीनसकासनिद्रा
तन्द्रादयश्चुलुचुलायनमुल्बणं च।
स्यादोष्ठकण्ठरसनारदमूलतालु-
घ्राणेक्षणश्रवणशष्कुलिकान्तरेषु ॥
श्लेष्मोद्भवे भवति लिंगमिदं विकारे
संसर्गजेषु च गदेषु भवेद्द्विदोषम्।
जन्तोरिदं पवनपित्तकफप्रकोपे
लिंगं त्रिदोषजरुजि प्रविभज्य योज्यम् ॥
तत्र तावदनिलस्समभ्येति
स्नेहवस्तिपरिषेकनिरूहै॰ ॥
भुक्तमात्रवलदेन नराणा
मोदनेन मृदुमांसरसेन ॥
द्राक्षया त्रिफलया त्रिवृता च
स्रंसनेन रुधिरस्रुतिभिश्च।
सर्पिषा च पयसा सितया च
स्वादुना भवति पित्तनिवृतिः ॥
लंघनेन वमनेन यवान्नप्राशनेन शिरसश्च विरेकै॰।
कट्फलादिकवलैरहिमाभिश्चाद्भिरत्र शममेतिकफश्च ॥
अथ रुग्विनिश्चयाद्ग्रन्थवाहुल्यभयात्संक्षिप्य किय-
न्त्यपि ज्वरनिदानवचनानि लिख्यंते—

दक्षापमानसंक्रुद्धरुद्रनिःश्वाससम्भवः ।
ज्वरोऽष्टधा पृथग्द्वन्द्वसंघातागन्तुजः स्मृतः ॥
मिथ्याहारविहाराभ्यां दोषा ह्यामाशयाश्रयाः ।
बहिर्निरस्य कोष्ठाग्निं ज्वरदाः स्युरसानुगाः ॥
स्वेदावरोधः सन्तापः सर्वांगग्रहणं तथा ।
युगपद्यत्र रोगेषु स ज्वरो व्यपदिश्यते ॥
रुणद्धि चाप्यपान्थातून्यस्मात्तस्माज्ज्वरातुरः ।
भवत्यत्युष्णगात्रश्च स्विद्यते न च सर्वशः ॥
श्रमोऽरतिर्विवर्णत्वं वैरस्यं नयनप्लवः ।
इच्छाद्वेषौ मुहुश्चापि शीतवातातपादिषु ॥
जृम्भाङ्गमर्दो गुरुता रोमहर्षोऽरुचिस्तमः ।
अप्रहर्षश्च शीतं च भवन्त्युत्पत्स्यति ज्वरे ॥
सामान्यतो विशेषात्तु जृम्भात्यर्थं समीरणात् ।
पित्तान्नयनयोर्दाहः कफादन्नारुचिस्तथा ॥
सर्वलिङ्गसमवायः सर्वदोषप्रकोपजे ।
रूपैरन्यतराभ्यां तु संसृष्टैर्द्वन्द्वजं विदुः ॥
वेपथुर्विषमो वेगः कण्ठोष्ठमुखशोषणम् ।
निद्रानाशः क्षवः स्तम्भो गात्राणां रौक्ष्यमेव च ॥
शिरोहृद्गात्ररुग्वक्त्रवैरस्यं गाढविट्कता ।
शूलाध्माने जृम्भणं च भवन्त्यनिलजे ज्वरे ॥
वेगस्तीक्ष्णोऽतिसारश्च निद्राल्पत्वं वमिस्तथा ।
कण्ठोष्ठमुखनासानां पाकः स्वेदश्च जायते ॥

प्रलापो वक्त्रकटुता मूर्च्छा दाहो मदस्तृषा ।
पीतविण्मूत्रनेत्रत्वपैत्तिके भ्रम एव च ॥
स्तैमित्यं स्तिमितो वेगश्चालस्यं मधुरास्यता ।
शुक्लमूत्रपुरीषत्वं स्तम्भस्तृप्तिरथापि च ॥
गौरवं शीतमुत्क्लेदो रोमहर्षोऽतिनिद्रता ।
स्रोतोरोधो रुगल्पत्वं प्रसेको बहुमूत्रता ॥
नात्युष्णगात्रता छर्दिर्लालास्रावोऽविपाकता।
प्रतिश्यायोऽरुचिः कासः कफजेऽक्ष्णोश्च शुक्लता ॥
तृष्णा मूर्च्छा भ्रमो दाहः स्वप्ननाशः शिरोरुजः ।
कण्ठास्यशोषो वमथू रोमहर्षाऽरुचिस्तमः ॥
पर्वभेदश्च जृम्भा च वातपित्तज्वराकृतिः ।
स्तैमित्यं पर्वणां भेदो निद्रा गौरवमेव च ॥
शिरोग्रहः प्रतिश्यायः कासः स्वेदप्रवर्तनम् ।
सन्तापो मध्यवेगश्च वातश्लेष्मज्वराकृतिः॥
लिप्ततिक्तास्यता तंद्रा मोहः कासोऽरुचिस्तृषा ।
मुहुर्दाहो मुहुः शैत्यं श्लेष्मपित्तज्वराकृतिः ॥
क्षणे दाहः क्षणे शीतमस्थिसन्धिशिरोरुजः ।
सस्रावे कलुषे रक्ते निर्भुग्ने चापि लोचने ॥
सस्वनौ सरुजौ कर्णौ कण्ठः शूकैरिवावृतः।
तन्द्रा मोहः प्रलापश्च कासः श्वासोऽरुचिर्भ्रमः ॥
तद्रच्छीतं महानिद्रा दिवा जागरणं निशि ।
सदा वा नैव वा निद्रा महास्वेदोऽति नैव वा ॥

गीतनर्तनहास्यादिविकृतेहाप्रवर्त्तनम् ।
परिदग्धा खरस्पर्शा जिह्वा स्रस्तांगता परम् ।
ष्ठीवनं रक्तपित्तस्य कफेनोन्मिश्रितस्य च ।
शिरसो लुण्ठनं तृष्णा निद्रानाशो हृदि व्यथा ॥
स्वेदमूत्रपुरीषाणां चिराद्दर्शनमल्पशः ॥
कृशत्वं नातिगात्राणां सततं कंठकूजनम् ॥
कोठानां श्यावरक्तानां मंडलानां च दर्शनम् ।
मूकत्वं स्रोतसां पाको गुरुत्वमुदरस्य च ॥
चिरात्पाकश्च दोषाणां सन्निपातज्वराकृतिः ।
दोषे प्रवृद्धे नष्टेऽग्नौ सर्वसंपूर्णलक्षणः ॥
सन्निपातज्वरोऽसाध्य कृच्छ्रसाध्यस्ततोऽन्यथा ।
सप्तमे दिवसे प्राप्ते दशमे द्वादशेपि वा ॥
पुनर्घोरतरो भूत्वा प्रशमं याति हन्ति वा ।
पित्तकफानिलवृद्ध्या दशदिवसद्वादशाहसप्ताहात् ।
हन्ति विमुञ्चति पुरुषं त्रिदोषजो धातुमलपाकात् ॥
सप्तमी द्विगुणा यावन्नवम्येकादशी तथा ।
एषा त्रिदोषमर्यादा मोक्षाय च वधाय च ॥
सन्निपातज्वरस्यांते कर्णमूले सुदारुणः ।
शोथस्संजायते तेन कश्चिदेव प्रमुच्यते ।
ज्वरस्य पूर्वं ज्वरमध्यतो वा
ज्वरान्ततो वा श्रुतिमूलशोथः ।
क्रमादसाध्यः खलु कृच्छ्रसाध्यः

सुखेन साध्यो मुनिभिः प्रदिष्टः ॥
त्रयः प्रकुपिता दोषा उरःस्रोतोऽनुगामिनः ।
आमानुबद्धा ग्रथिता बुद्धीन्द्रियमनोगताः ।
जनयन्ति महाघोरमभिन्यासज्वरं दृढम् ।
स्रस्तनेत्रे प्रसुप्तिश्च न चेष्टां काञ्चिदीहते ॥
न च दृष्टिर्भवेत्तस्य समर्था रूपदर्शने ।
न घ्राणरसनास्पर्शाञ्छब्दान्वा नैव बुध्यते ॥
शिरश्च लुञ्चतेऽभीक्ष्णमाहार नाभिनंदति ॥
कूजते तुद्यते चैव परिवर्तनमीहते ।
अल्पं प्रभाषते किंचिदभिन्यासः स उच्यते ॥
प्रत्याख्येयः स भूयिष्ठं कश्चिदेवात्र सिध्यति ।
सन्धिगश्चान्तकश्चैव रुग्दाहश्चित्तविभ्रमः ॥
शीताङ्गस्तन्द्रिकः प्रोक्तः कण्ठकुब्जश्च कर्णकः ।
विख्यातो भुग्ननेत्रश्च रक्तष्ठीवी प्रलापकः ।
जृम्भकश्चेत्यभिन्यासः सन्निपातास्त्रयोदश ॥

इति चरकात् ।

अभिघाताभिपङ्गाभ्यामभिचाराभिशापजः ।
आगन्तुर्जायते दोषैर्यथास्वन्त विभावयेत् ॥
श्यावास्यता विषकृते तथातीसार एव च ।
भक्तारुचिः पिपासा च तोदश्च सह मूर्च्छया ॥
औषधीगन्धजे मूर्च्छा शिरोरुग्वमथुस्तथा ।

कामजे चित्तविभ्रंशस्तन्द्रालस्यमभोजनम् ॥
हृदये वेदना चास्य गात्रं च परिशुष्यति ।
भयात्प्रलाप शोकाच्च भवेत्कोपाच्च वेपथु' ॥
अभिचाराभिशापाभ्यां मोहस्तृष्णा च जायते ॥
भूताभिषंगादुद्वेगो हास्यं रोदनकम्पने ।
कामशोकभयाद्वायु· क्रोधात्पित्तं त्रयो मलाः ।
भूताभिषंगात्कुप्यंति भूतसामान्यलक्षणाः ।
दोषोल्पो हितसम्भूतो ज्वरोत्सृष्टस्य वा पुनः ॥
धातुमन्यतमं प्राप्य करोति विषमज्वरम् ।
य स्यादनियतात्कालाच्छीतोष्णाभ्यां तथैव च ।
वेगतश्चापि विषम· स ज्वरो विषम स्मृत· ।
सन्ततो रसरक्तस्थस्सततो रक्तधातुगः ॥
भिषजा स च विज्ञेयस्सोऽन्येद्युः पिशिताश्रितः ।
मेदोगतस्तृतीयेऽह्नि त्वस्थिमज्जागत· पुनः ॥
कुर्याच्चतुर्थकं घोरमन्तकं रोगसंकरम् ।
सप्त ह वा दशाहं वा द्वादशाहमथापि वा ॥
सन्तत्या यो विसर्गी स्यात्सन्ततस्स निगद्यते ।
अहोरात्रे सन्ततको द्वौ कालावनुवर्तते ।
अन्येद्युष्कस्त्वहोरात्रमेककालं प्रवर्तते ॥
तृतीयकस्तृतीयेह्नि चतुर्थेह्नि चतुर्थकः ॥
दिनद्वयमतिक्रम्य प्रत्येति स चतुर्थकः ।

केचिद्भूताभिषंगोत्थं वदन्ति विषमज्वरम् ॥
अधिशेते यथा भूमिं बीजं काले प्ररोहति ।
अधिशेते तथा धातून्दोषः काले प्रकुप्यति ॥
स वृद्धिं बलकालं च प्राप्य दोषस्तृतीयकम् ।
चतुर्थकं च कुरुते प्रत्यनीकबलक्षयात् ॥
कफपित्तात्रिकग्राही पृष्ठ वातकफात्मकः ।
वातपित्ताच्छिरोग्राही त्रिविध स्यात्तृतीयकः ॥
चातुर्थको दर्शयति प्रभावं द्विविधं ज्वरः ।
जङ्घाभ्यां श्लैष्मिकः पूर्वं शिरसोऽनिलसम्भवः ॥
विषमज्वर एवान्यश्चातुर्थकविपर्यय ॥
अस्थिमज्जागतो दोषश्चातुर्थकविपर्ययः ॥
स मध्ये ज्वरयत्यह्नि आद्यन्ते च विमुञ्चति ।
तत्र द्व्यहं ज्वरयति दिनमेकं तु मुञ्चति ॥
नित्यं मन्दज्वरो रूक्षः शून्यः कृच्छ्रेण सिध्यति ।
स्तब्धांगः श्लेष्मभूयिष्ठो भवेद्वातबलासकी ॥
प्रलिम्पन्निव गात्राणि घर्मेण गौरवेण वा ।
मन्दज्वरो विलेपी च स शीतः स्यात्प्रलेपकः ॥
श्वासो मूर्च्छारुचिश्छर्दिस्तृष्णातीसारविड्ग्रहाः ।
हिक्काकासागभेदाश्च ज्वरस्योपद्रवा दश ॥
बलवत्स्वल्पदोषेषु ज्वरः साध्योनुपद्रवः ।
हेतुभिर्बहुभिर्जातो बलवान्बहुलक्षण ॥
ज्वरः प्राणान्तकृद्यश्च शीघ्रमिन्द्रियनाशनः ।

विसंज्ञस्ताम्यते यन्तु शेते निपतितोपि वा ॥
शीतार्दितोन्तरुष्णश्च ज्वरेण म्रियते नर ।
देहो लघुर्व्यपगतक्लममोहतापः
पाको मुखे करणसौष्ठवमव्यथत्वम् ।
स्वेदक्षय प्रकृतियोगमनोन्नलिप्सा
कण्डूश्च मूर्ध्नि विगतज्वरलक्षणानि ॥
इति ज्वरनिदानाधिकारः ।
अथ ज्वरातीसारस्य निदान चिकित्सितं चाह-
ज्वरातिसारयोरुक्तं निदानं यत्पृथक्पृथक् ।
तस्माज्ज्वरातिसारस्य तेन नात्रोदितं पुन ॥
लंघनमुभयोरुक्तं मिलितं कार्यं विशेषतस्तदनु ।
उत्पलषष्टिकसिद्ध लाजामण्डादिकं सकलम् ॥
पृश्निपर्णीबलाबिल्वनागरोत्पलधान्यकैः ।
ज्वरातीसारयो पेयं पिबेच्चाम्लाश्रितं नर ॥
इति उत्पलषष्टिकक्काथ ।
नागरातिविषामुस्ताभूनिम्बामृतवत्सकै ॥
सर्वज्वरहर क्काथः सर्वातीसारनाशन ।
इति नागरादिक्काथ ।
पाठेन्द्रयवभूनिम्बमुस्ता पर्पटकामृता ।
जयत्याममतीसारं सज्वरं समहौषधम् ॥
इति पाठादिक्काथ ।
ह्रीबेरातिविषामुस्ताबिल्वनागरधान्यकम् ।

पिवेद्विश्वावि वन्धघ्नं शूलदोपामपाचनम् ॥
सरक्तं हंत्यतीसारं सज्वरं वाथ विज्वरम्।
इति ह्रीवेरादिः।

पञ्चमूलीवलाविल्वगुडूचीमुस्तनागरैः।
पाठाभूनिम्बह्रीवेरकुटजत्वक्पलैः शृतम् ॥
हन्ति सर्वानतीसाराञ्ज्वरदोपं वमिं तथा।
सशूलोपद्रवं श्वासं कासं हन्यात्सुदुस्तरम् ॥
पञ्चमूली तु सामान्या योज्या वाते कनीयसी।
पञ्चमूली तु महती वातश्लेष्माधिके हिता ॥
इति पञ्चमूल्यादि।

किराताब्दामृताविश्वचन्दनोदीच्यवत्सकैः।
शोथातीसारशमनं विशेषाज्ज्वरनाशनम् ॥
इति ज्वरातीसारचिकित्सा।

लघनेन क्षयं नीते दोपे सन्धुक्षितेऽनले ॥
विज्वरत्वं लघुत्वं च क्षुच्चैवास्योपजायते।
सद्योभुक्तस्य वा जाते ज्वरे सामे विशेपतः ॥
वमनं वमनार्हस्य शस्तमित्याह वाग्भटः।
भेपजं ह्यामदोपेषु भूयो वर्द्धयति ज्वरम्।
शोधनं शमनीयं च करोति विपमज्वरम्।
विनापि भेपजैर्व्याधिः पथ्यादेव निवर्त्तते ॥
नतु पथ्यविहीनस्य भेपजानां शतैरपि।

रक्तशाल्यादयः शस्ता पुराणाः षष्टिकैः सह ॥
यवाग्वोदनलाजार्थे ज्वरितानां ज्वरापहम् ।
कफवातज्वरे देयं जलमुष्णं पिपासवे ॥
पित्तमद्यविषोत्थेषु तिक्तकैः शृतशीतलम् ।
मुस्तापर्प्पटकोशीरचन्दनोदीच्यनागरैः ॥
शृतशीतजलं दद्यात्पिपासाज्वरशान्तये ।
उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैस्तु मध्यमा ॥
जघनस्य पलार्द्धेन स्नेहक्वाथौषधेषु च ।
मृदौ चतुर्गुणं वारि कठिनेऽष्टगुणं मतम् ॥
कठिनात्कठिनं यच्च तत्र षोडशिकं जलम् ।
पाययेदातुरं सात्म्यं पाचनं सप्तमेऽहनि ॥
नागरं देवकाष्ठं च धान्यकं बृहतीद्वयम् ।
दद्यात्पाचनकं पूर्वं ज्वरितानां ज्वरापहम् ॥
सर्वज्वरेषु इदमनिषिद्धं पाचनम्—
किरातकामृतोदीच्यबृहतीद्वयगोक्षुरैः ॥
सस्थिराकलशीविश्वैः क्वाथो वातज्वरापहः ।
पिप्पलीसारिवाद्राक्षाशतपुष्पाहरेणुभिः ॥
कृतः कषायः सगुडो हन्याच्चानिलजं ज्वरम् ।
सक्षौद्रं पाचनं पैत्ते तिक्ता चेन्द्रयवैः कृतम् ॥
दुरालभापर्पटकप्रियंगुभूनिम्बवासाकटुरोहिणीनाम् ।
क्वाथं पिबेच्छर्करयावगाढं तृष्णास्रपित्तज्वरदाहयुक्तः ॥

एकः पर्पटकः श्रेष्ठः पित्तज्वरविनाशनः ।
किं पुनर्यदि युज्येत चंदनोदीच्यनागरैः ॥

इति वाग्भटात् ।

हर्म्ये शुभ्राभ्रसंकाशे शशांककरशीतले ।
मलयोदकसिंचे वा स्वप्यात्पित्तज्वरी नरः ॥
त्रिफलातिविषा मुस्ता क्रमुकं सकलिंगकम् ।
पटोलारग्वधं चैव रोहिणीचित्रकं समम् ॥
क्वाथः क्षौद्रयुतः श्लेष्मज्वरकासगलामये ।
आमलक्यभया कृष्णा चित्रकश्चेत्ययं गणः ॥
सर्वज्वरकफातंकभेदी दीपनपाचनः ।
कट्फलं पौष्करं कृष्णा शृंगी च मधुना सह ॥
श्वासकासज्वरहरः श्रेष्ठो लेहः कफान्तकृत् ।
सटी पुष्करमूलं च भार्ङ्गी शृंगी दुरालभा ॥
गुडूची नागर पाठा किरातं कटुरोहिणी ।
एष शुंठ्यादिको वर्गः सन्निपातज्वरापहः ॥
कासहृद्ग्रहपार्श्वार्तिश्वासे तंद्रौ च शस्यते ।

इति शुंठ्यादिः ।

भूनिंबदारुदशमूलमहौषधाब्द-
तिक्तेंद्रबीजधनिकेभकणाकषायः ।

तन्द्राप्रलापकसनारुचिदाहमोह-
श्वासादियुक्तमखिलं ज्वरमाशु हंति ।

इत्यष्टांगः ।

शिरीषबीजगोमूत्रकृष्णामरिचसैंधवैः ॥
अंजनं स्यात्प्रबोधाय सरसोनशिलावचैः ॥
कर्णमूले यदा शोफः सन्निपातज्वरे गते ।
जायते तत्र कर्तव्यं नाभन रक्तमोक्षणम् ॥
लेहाश्च कफनाशघ्नाः कार्याः सकवलग्रहाः ।

इति संनिपातः ।

ज्वराश्च विषमाः सर्वे संनिपातसमुद्भवाः ॥
यथोल्बणस्य दोषस्य तेषां कार्यं चिकित्सितम् ॥
पटोलकटुकामुस्तापथ्यानां मधुकस्य च ।
त्रिचतुः पंचमः क्वाथो विषमज्वरनाशनः ॥
क्वाथः संततके तिक्तापटोलसारिवाघनम् ।
तृतीयके स्याद्भूनिंबगुडूचीनागरं घनम् ॥
पटोलेंद्रयवा द्राक्षा मुस्तानिंबफलत्रिकम् ।
अन्येद्युष्के द्व्यन्तरेषु गुडूच्यामलकं घनम् ॥
वासाधात्रीस्थिरादारुपथ्यानागरसाधितः ।
सितामधुयुतः क्वाथश्चातुर्थकनिवारणः ॥
पिबेत्पर्पटकं क्वाथं गुडूच्या वासकस्य च ।
त्रिफलास्वरसं वापि श्लैष्मिके विषमे ज्वरे ॥

निदिग्धिकानागरकामृतानां
क्वाथं पिबेन्मिश्रितपिप्पलीकम् ।
जीर्णज्वरारोचककासशूलश्वासाग्निमांद्यार्दितपीनसेषु ॥
रुद्रजटा गोशृगं बिडालविष्ठोरगस्य निर्मोकः ।
मदनफलभूतकेशीवंशत्वगुग्रनिर्माल्यम् ॥
घृतयवमयूरचंद्रकछागलरोमाणि सर्षपाः सवचाः ।
समाहिंगुनिंबपत्राः समभागाश्छागमूत्रसंपिष्टाः ॥
धूपनविधिना शमयत्येते सर्वज्वरान्नियतम् ॥
ग्रहडाकिनीपिशाचप्रेतविकारापनोदनो धूपः ।
इति ज्वरे धूपः ।
मंजिष्ठा च हरिद्रा च देवदारुहरीतकी ।
शृंगवेर ह्यतिविषा वचा कटुकरोहिणी ॥
हिंगुनश्चाक्षमात्रेण तात्सिद्धमवतारयेत् ।
एतन्मांजिष्ठकं सर्पिर्बहुरोगान्नियच्छति ॥
हिक्कां श्वासं ज्वरं कुष्ठं ग्रहणीं पांडुरोगताम् ।
प्रमेहमधुमेहांश्च कृमीन्गुल्ममरोचकम् ॥
कासं शोपमुदावर्तमपस्मारं तथैव च ।
अर्शांसि श्वयथुं चैव गंडमालामथोदरम् ॥
इति वेलाज्वरे माजिष्ठं घृतम् ।
लाक्षारसं समादाय तैलप्रस्थ चतुर्गुणम् ।
मस्तुनश्चाढकं दद्याद्द्रव्यैरेभिश्च कार्षिकैः ॥
मधुकेन हरिद्राभ्यां मुस्तेन सह मूर्वया ।

रास्नया कटुरोहिण्या चंदनेनाश्वगंधया ॥
शताह्वया च कुष्ठेन हरेण्वा देवदारुणा ।
मंजिष्ठा पद्मकोशीरवलामांसीभिरेव च ॥
तत्सिद्धमथ पूत च स्थापयेद्भाजने शुभे ।
जीर्णज्वरपरीतानां क्षीणानां शोषिणां तथा ॥
विषमज्वरमोक्षार्थे श्वासकासार्दिताश्च ये ।
गुर्विणीनां च नारीणां बालानां शुष्मतामपि ।
तैलं लाक्षादिकं नाम सर्वज्वरग्रहापहम् ॥

इति लाक्षादितैलम् ।

शब्दस्योपरमे प्राप्ते फेनस्योपशमे तथा ।
गन्धवर्णरसादीनां संपत्तौ सिद्धिमादिशेत् ॥

कलिकात· ।

किराततिक्तं त्रिवृदंबुपिप्पली
विडगविश्वे कटुरोहिणी शिवा ।
प्रपतिमुष्णं सकलज्वरापहं प्रबंधनं जाठरजातवेदसः ॥
विगतक्लमसंतापमव्यथं विमलेन्द्रियम् ।
युक्तं प्रकृतिसत्त्वैश्च विद्यात्पुरुषमज्वरम् ॥
व्यायामं च व्यवाय च स्नानं चंक्रमणानि च ।
ज्वरमुक्तो न सेवेत यावन्नो बलवान् भवेत् ॥

इति श्रीतोमरवंशावतंसरिपुभूतभैरवश्रीवीरसिंहदेवविरचिते वीरसिंहावलोके ग्रंथे ज्योति·शास्त्रकर्मविपाकायुर्वेदोक्त-प्रयोगे ज्वराधिकार· ॥

अथ क्रमप्राप्तस्यातीसारस्य ज्योतिःशास्त्राभिप्रायेण हेतुमाह तत्प्रतीकारं च। यदुक्तं जातके सारावल्यां च–

वहुभमतिसारयुतं वहुभक्षं नि रं प्रियालापम्।
जनयति रविणा दृष्टः सौरिग्रहे बोधनः पुरुषम्॥

अन्यच्च–

शस्त्रपातनभेदश्च ज्वरातिसारपीडनम्।
शत्रुसंगोऽथनाशः स्याच्छनेरंतर्गते तमे॥
छिद्रस्थाविदुशुक्रौ चेदतीसारं विनिर्दिशेत्।
तत्र चेत्सकुज शुक्रः कुरुते मलपातनम्॥

अष्टमस्थयोरिंदुशुक्रयोः प्रीत्यै वक्ष्यमाणं जपहोमादिकं विधेयम्। शनिग्रहे रविदृष्टस्य बुधस्य बाधोपशांतये तत्प्रतीकारकं दानादिकमाह। उद्बुध्यस्वेतिमंत्रस्य जपः तिलैरपामार्गस्य समिद्भिश्च जुहुयात् हेमदानं च दद्यात् स्नानं च। यदाह श्रीपतिः।

गोमयाक्षतफलैः सरोचनैः क्षौद्रशुक्तिभवमूलहेमभिः।
स्नानमुक्तमिदमत्र भूभृतां बोधनाशुभविनाशनं बुधे॥

अंगेसुवर्णं धार्यम्। शनेरंतर्गते राहौ अतीसारदर्शने च कयानश्चित्र इतिमंत्रेण शक्त्या जपः। तिलदूर्वासमिद्भिश्च होमः। खड्गदानम्। राजावर्त्तपरिधानम्। शनैश्चरोक्त स्नानमशिततिलाजनेत्यादिभिरौषधैरिति॥ अथातीसाररोगस्य कर्मविपाकमाह। अग्न्युपशमी अतीसारी भवति तडागभेत्ता च। यदुक्तं पद्मपुराणे।

'अतीसारी च भवति यंत्रताग्निविनाशक' इति ॥ सोग्निरस्मीत्यृचं जपेत् यथोक्तमेव दशसहस्रसंख्यया तिलाज्यद्रव्येण जुहुयात् हिरण्यं दद्यात् । अन्यच्च यथाह बोधायन ॥

सुवर्णनाथ तन्त्रेण कुर्यात्प्रतिकृतिं बुध' ।
वह्नेर्विभवसारेण पलेनार्द्धेन वा पुन ॥ इति ॥

वह्निप्रतिकृतिलक्षणं तु लोकपालप्रसंगेन ब्रह्मांडदानेन दाशतम् ॥

तथा ज्वालाकुलां रक्तचंदनेन विलेपिताम् ।
रक्तवस्त्रेण सवीता मेषस्योपरि सस्थिताम् ॥
रक्तमाल्यैस्तु संछन्ना मुक्तादामपरिष्कृताम् ॥
कनकाचलवर्णाभां द्वादशार्कनिभा शुभाम् ॥
ब्रह्मचर्यान्विते विप्रे तपोनिष्ठेऽग्निहोत्रिणि ।
अंगुलीयकवस्त्राद्यैर्भूषिते तां निवेदयेत् ॥
मंत्रेणानेन विधिवदग्निप्रीत्यर्थमादृत ।
त्रेतारूपोग्निरीड्यस्त्वमंतश्चरसि वै नृणाम् ॥
त्वं वेत्सि प्राक्तन पापमतीसार विनाशय ।
एवं कृत्वा नर सम्यगतीसारं व्यपोहति ॥
निरोगश्च सुखी नित्यं दीर्घमायुश्च विंदति ।
इत्यतीसारहरवह्निमूर्तिदानम् । अथातीसारे
सनिदानं चिकित्सतमाह रुग्विनिश्चयात् ॥

शम्यापां धातुरग्निं प्रवृद्ध शकृन्मिश्रो वायुनाधः प्रणुन्नः । सरत्यतीवातिसार तमाहुर्व्याधिं घोरं षड्विधं तं वदंति ॥ एकैकशः सर्वशश्चापि दोषैः शोकेनान्य षष्ठ आमेन चोक्तः । हृन्नाभिपायूदरकुक्षितोदगात्रावशादानिलसंनिरोधात् ॥ विड्भंगमाध्मानमथाविपाकोभविष्यतस्तस्य पुरःसराणि ।

लघनमेकं मुक्त्वा न चान्यदस्तीह भेषजं बलिनः ।
समुदीर्णदोषनिचय शमयति तत्पाचयत्यपि च ॥

अथ वृंदसंग्रहात्–

धान्योदीच्यसृत तोयं तृष्णादाहातिसारिणे ।
ह्रीबेरशृंगबेराभ्यां मुस्तापर्पटकेन वा ॥
बिल्वगोक्षुरकैरंडयवकांजिकसाधिता ।
आमातीसारशूलघ्नी मधुयुक्ता हरीतकी ॥
बिल्वशक्रयवाभोजनागरातिविषाकृतः ।
कषायो हत्यतीसारं सामं पित्तसमुद्भवम् ॥
सक्षौद्रातिविषा पिष्टा वत्सकस्य फलं त्वचम् ।
तंडुलोदकसंयुक्तं पेयं पित्तातिसारनुत् ॥
सवत्सकः सातिविषः सबिल्वः
सोदीच्यमुस्तश्च कृतः कषायः ।
सामे सशूले सहशोणिते च
चिरप्रवृत्तेपि हितोऽतिसारे ॥
धान्यनागरमुस्त च वालकं बिल्वमेव च ।

आमशूलविबंधघ्न पाचनं वह्निदीपनम् ॥
अनेदनं सुसंपक्कं दीताग्ने· सुचिरोत्थितम् ।
नानावर्णमतीसारं पुटपाकैरुपाचरेत् ॥
त्वक्पत्रं दीर्घवृंतस्य पद्मकेसरसंयुतम् ।
काश्मरीपद्मपत्रैश्च वेष्ट्य सूत्रेण तं दृढम् ।
मृदावलिप्तं सुकृतमंगारैस्ताद्भि पाचयेत् ।
स्विन्नमुद्धृत्य निष्पाद्य रसमादाय तं ततः ॥
शीतं कृत्वा मधुयुतं पाययेदतिसारिणम् ।
तित्तिरं लुंचितं सम्यङ्निष्कुष्टं तच्च पूरयेत् ॥
न्यग्रोधादित्वच· कल्कैर्वेष्ट्या पक्व च पूर्ववत् ।
रसमादाय तस्याथ सुस्विन्नस्य समाक्षिकम् ॥
शर्करासहितं शीतं पाययेतोदरामयी ।
एवं प्ररोहै· कुर्वीत वटादीनां विधानवित् ॥
पुटपाकान् यथायोगान् जाग्रतोपहिताञ्छुभान् ।
मुस्तावत्सकबीजं मोचरसो बिल्वधातकी लोध्रम् ।
मथितगुडसंप्रयुक्तं गंगामपि वाहिनीं रुध्यात् ॥

तुलामथार्द्रां गिरिमल्लिकाया संकुट्य पक्त्वा रसमाददीत । तस्मिन्सुपूते पलसंमितानि श्लक्ष्णानि पिष्ट्वा सह शाल्मजेन ॥ पाठासमगातिविषासमुस्त बिल्वं च पुष्पाणि च धातकीनाम् । प्रक्षिप्य भूयो विपचेच्च तावद्दार्वीप्रलेपः स्वरसस्तु यावत् ॥

पीतस्त्वसौ कालविदा जलेन मंडेनवाऽजापयसाथ वापि ।
निहंति सर्वं त्वतिसारमुग्रं कृष्णं सितं लोहितपीतकं वा ॥
दोषंग्रहण्याविविधंचरक्तं पित्तं तथार्शांसि सशोणितानि ।
असृग्दरं चैवमसाध्यरूपं निहंत्यवश्यं कुटजाष्टकोयम् ॥
यथामृत तथा क्षीरमतीसारेषु पूजितम् ।
चिरोत्थितेषु तत्पेयमपां भागैस्त्रिभिः शृतम् ॥
अधावर्त चतुर्थांशमष्टभागावशेषितम् ।
अतीसारेषु पानीयमधिकस्याधिकं फलम् ॥
वायुः प्रवर्त्ततेऽधस्तादूर्ध्वं वातश्च गच्छति ।
यस्योच्चारं विना मूत्रं सम्यग्वायुश्च गच्छति ।
दीप्ताग्नेर्लघुकोष्टस्य स्थितस्तस्योदरामयः ॥

इति श्रीतोमरवंशावतंसरिपुभूतभैरवश्रीवीरसिंहदेवविरचिते वीरसिंहावलोके ग्रंथे ज्योतिःशास्त्रकर्मविपाकायुर्वेदोक्तप्रयोगेऽतीसाराधिकारः ॥

---

अथ ग्रहणीरोगस्य ज्योतिःशास्त्राभिप्रायेण हेतुमाह यदुक्तं सारावल्याम्—

प्रचुरामित्रस्तीक्ष्णो मृदुकायाग्निर्मंदालसश्चंद्रे ।
षष्ठ चोदररोधकभावैः परिपीडितो भवति ॥
अन्यच्च जातके ।
क्षीणेंदुदशायोगे चिह्नान्येतानि लक्षयेद्विद्वान् ।
उदरामयज्वरशिरोनिस्रनोत्क्लेशः प्रजायते पुंसाम् ।

अत्र उदरामया ग्रहण्यादय तदुपशान्तये चंद्रप्रीतये जपहोमादिकं कुर्यात् । इमं देवा इति मंत्रेण जप स्वशाखोक्ततल्लिंगमंत्रेण वा व्याधितारतम्येन तिलाज्यपलाशसमिद्भिर्होमः शंखदानं च स्नानं च ।

यथाह श्रीपतिः—

पंचगव्यगजदानविमिश्रैः शंखशुक्तिकुमुदस्फटिकैश्च ॥
शीतरश्मिकृतवैकृतहंतृस्नानमेतदुदितं नृपतीनाम् ॥

भुजाभ्यां मुक्ताफलं धार्यं पायसं नैवेद्यं निवेदयेत् तेनोपशान्तिर्भवति । अथ ग्रहणीरोगस्य कर्मविपाकमाह । यः पुनः तुष्टां भार्यामनन्यगतिकां कारणमन्तरेण परित्यजति सः जन्मान्तरे संग्रहणीरोगवान् भवति शिवसंकल्पसूक्तमष्टोत्तरसहस्रं जपेत् मधुहिरण्यं च दद्यात् ॥

साध्वी भार्यां च यो मर्त्यः परित्यजति कामतः ।
ग्रहणीरोगसंयुक्तः सदा भवति मानवः ॥
शिवसंकल्पसूक्तेन जपेदष्टोत्तरं शतम् ।

इति शिवगीतावचनात् ।

धेनुं सदक्षिणां दद्यात्सवत्साभरणान्विताम् ।
पयस्विनीं गुणोपेतां ब्राह्मणाय विशेषतः ।

पद्मपुराणे ग्रहण्यपनुत्तय आह गौतमः—

धेनुं पयस्विनीं दद्यात् घण्टाभरणभूषिताम् ।

हेमशृंगीं रौप्यखुरां वासोभिर्वेष्टितां नरः ॥
नवधान्यैः समायुक्तामेकैकं द्रोणपञ्चकम् ।
सहिरण्यां तु गां दद्याद्ब्राह्मणाय कुटुंबिने ॥
अलोलुपाय शान्ताय धर्मज्ञाय विशेषतः ।
होमं च पूर्ववत्कुर्यात्समिदाज्यचरूत्करैः ॥
तस्मै हुतवते दद्यात्पूजितायांगुलीयकैः ।
गां कृष्णां कृष्णरूपाय मन्त्रेणानेन रोगवान् ॥
देवकीपुत्र चाणूरकंसारिप्रविनाशन ।
नाशय ग्रहणीं कृष्ण गोपीजनमनोहर ॥

इति दानमन्त्रः ।

मन्त्रेणानेन दानेन ग्रहणी शांतिमृच्छति ।
तस्मादेतच्च कर्त्तव्यं ग्रहणीरोगिणा सदा ॥
इति ग्रहणीहरधेनुदानविधिः । अथ ग्रहणीरोगस्य सनिदानं चिकित्सितमाह रुग्विनिश्चयात् ।
अतीसारे निवृत्तेपि मन्दाग्नेरहिताशिनः ।
भूय संदूषितो वह्निर्ग्रहणीमपि दूषयेत् ॥
एकशः सर्वशश्चापि दोषैरत्यर्थमूर्च्छितैः ।
सा दुष्टा बहुशो भुक्तमाममेव विमुञ्चति ॥
पक्वं वा सरुजं पूति मुहुर्बद्धं मुहुर्द्रवम् ।
ग्रहणीरोगमाहुस्तमायुर्वेदविदो जनाः ॥
षष्ठी पित्तधरा नाम या कला परिकीर्तिता ।
पक्वामाशयमध्यस्था ग्रहणीं तां विदुर्बुधाः ॥

ग्रहणीमाश्रित दोषमजीर्णवदुपाचरेत् ।
अतीसारोक्तविधिना तस्याम च निरेचयेत् ॥
कपित्थबिल्वचांगेरीतक्रदाडिमसाधिता ।
यवागू' पाचयत्यामं शकृत्संवर्तयत्यपि ॥
लघुना पचमूलेन पचकोलेन पाचयेत् ।
अन्नानि कल्पयेद्विद्वान् बिल्ववृक्षाम्लदाडिमैः ॥
ग्रहणीदोषिणा तक्र दीपनं ग्राहि लाघवम् ।
अम्ल मधुरपाकित्वान्न च पित्तप्रकोपनम् ॥
श्रीफलशलाटुकल्को नागरचूर्णेन मिश्रित' सगुड' ।
ग्रहणीगदमत्युग्र तक्रभुक् शीलितो जयति ॥
नागरातिविषा मुस्ता क्वाथ स्यादामपाचन' ।
चूर्णं हिङ्ग्वष्टक चापि वातिकेऽष्टपल घृतम् ॥
नागरातिविषा मुस्ता धातकी सरसांजनम् ।
वत्सकत्वक्फल बिल्व पाठा कटुकरोहिणीम् ॥
पिबेत्समाशक चूर्णं सक्षौद्र तण्डुलांबुना ।
पैत्तिके ग्रहणी दोषे रक्त यत्योपनेश्यते ॥
अर्शास्यथ गुदे शूल जयेच्चैव प्रवाहिकाम् ।
नागराद्यमिद चूर्णं कृष्णात्रेयेण पूजितम् ॥
जलमष्टगुण दद्यात्पल कण्डिततण्डुलान् ।
भावयित्वा ततो देय तण्डुलोदककर्मणि ॥
त्र्यूषणत्रिफलाकल्के बिल्वमात्रे गुडात्पले ।
सर्पिषोऽष्टपल दत्वा मात्रा मन्दानिलः पिबेत् ॥

विश्वौषधस्य गर्भेण दशमूलजल शृतम्।
घृत निहंति श्वयथुं ग्रहणी सामजामपि॥
यवानीपिप्पलीमूलचातुर्जातकनागरैः।
मरिचाग्निजलाजाजीधान्यसौवर्चलैः समैः॥
वृक्षाम्लधातकीकृष्णबिल्वदाडिमदीप्यकैः।
त्रिगुणैः षड्गुणसितैः कपित्थाष्टगुणीकृतैः॥
चूर्णोतिसारग्रहणीक्षयगुल्मगलामयान्।
कासश्वासाग्निसादार्शःपीनसारोचकान् जयेत्॥
वाग्भटादतीसारे कपित्थाष्टकं चूर्णम्।
कर्षोन्मिता तु गोक्षीरी चातुर्जात द्विकार्षिकम्।
यवानीधान्यकाजाजीग्रथिव्योष पलांशकम्॥
पलानि दाडिमस्याष्टौ सितायाश्चैकतः कृतः।
गुणै कपित्थाष्टकवच्चूर्णोय दाडिमाष्टकः॥
समशर्करो द्विगुणशर्करो वा। इति वाग्भटादतीसारे दाडिमाष्टक चूर्णम्॥

इति श्रीतोमरवंशावतंसरिपुभूतभैरवश्रीवीरसिंहदेवविरचिते वीरसिंहावलोके ग्रंथे ज्योतिःशास्त्रे कर्मविपाकायुर्वेदोक्तप्रयोगे ग्रहण्याधिकारः॥

अथ ज्योतिःशास्त्राभिप्रायेणार्शोरोगप्रयोगमाह— यदुक्तं जातके—

कर्कटकस्थे भानौ स्वपुत्रदृष्टे पुमान् पिशुनः।
दुर्नामकुष्ठरोगैरभिभूतो निर्दयो विगतलज्जः॥

कर्कस्थितस्य शनिदृष्टस्य सूर्यस्य बाधोपशान्तये जपदानादिविधिमाह आकृष्णेति मन्त्रेण जपः। तिलार्कसमिद्घृतैर्होमं गुडौदननैवेद्यं व्याधितारतम्येन यथोक्तां धेनुं च दद्यात् स्नानं च।

यथाह श्रीपतिः-

मनःशिलैलासुरदारुकुंकुमैरुशीरयष्टीमधुपद्मकान्वितैः।
सताम्रपुष्पैर्विपमस्थिते रवौ शुभावहं स्नानमुदाहृतं बुधैः

विद्रुमं च धार्यम्। अथार्शोरोगस्य कर्मविपाकमाह-तत्प्रतीकारं च। वेतनमादाय योऽध्यापयत्यर्चयति जुहोति जपति स अर्शोरोगवान् भवति स कृच्छ्रातिकृच्छ्र चान्द्रायणानि कृत्वा पुरुषसूक्तम् उद्यन्नमृतम् विवस्वद्धृदयं वा अग्निवर्णामित्यादिसूक्तम् व्याधिगुरुलघुभावेन वापेक्षया जपेत्, सघृतं हिरण्यं च दद्यात्। श्रोत्रियाय कुटुंबिने कुटुंबपर्याप्तं धनं दद्यात् एतन्महाधनिविषयम्।

श्रोत्रियाय कुलीनाय ह्यर्थिने च विशेषतः।
असाध्यव्याधिना ग्रस्तो धनं दद्याद्विशांपते॥

इति ब्रह्मगीतावचनात्। इत्यर्शोघ्नप्रतीकारः। पद्मपुराणे। अर्शवान् गोवधो मर्त्यः।

बौधायनः-

सौवर्णां गां प्रकुर्वीत पलेनार्द्धेन वा पुनः।
वित्तशाठ्यं न कुर्वीत विभवे सति रोगवान्॥
हेमशृंगीं रौप्यखुरीं नानावस्त्रैरलङ्कृताम्।

ग्रहाणामुपरि स्थाप्य धनधान्यानि विन्यसेत् ॥
होमस्तु पूर्ववत्कार्यो गोविंदप्रीतये हितः ।
इदं विष्णुः प्रभुर्विष्णुर्विष्णोः सूक्तमिति क्रमात् ॥
समिदाज्यचरु हुत्वा पूर्णाहुतिस्तदेव हि ।
ततस्तं शुचिमान्रोगी ब्राह्मणं वेदपारगम् ॥
श्रुतवृत्तोपसंपन्नं कुलीनं धर्मवादिनम् ।
वृद्धं ज्ञानोपसंपन्नं निरुद्वेगकरं नृणाम् ॥
भक्त्या स्वयं समानीय पूजयेत्प्रीतये द्विजम् ।
अंगुलीयकवस्त्राद्यैरुपानच्छत्रकैरपि ॥
मन्त्रेणानेन तत्पात्रं दद्याद्रोगी जितात्मवान् ॥
गोविंदं मनसा ध्यायन् गवां मध्ये स्थितं शुभम् ॥
वर्हापीडकसंयुक्तं वेणुवादनतत्परम् ।
गोपीजनैः परिवृतं वन्यपुष्पावतंसकम् ॥
गोविंदगोपीजनवल्लभेश कंसासुरघ्न त्रिदिवेंद्रवंद्य ।
गोदानतृप्तः कुरु मे दयालो अर्शोविनाशं क्षयितारिवर्ग ।
दानेनानेन नितरामर्शः संजायते क्षयम् ।
तस्मात्कुर्यात्प्रयत्नेन सुखार्थी ह्येतदर्शसि ॥
इत्यर्शोघ्नः सुवर्णगोदानविधिः ॥

अथ क्रमप्राप्तस्यार्शोरोगनिदानं चिकित्सितमाह रुग्विनिश्चयात् ॥

पृथग्दोषैः समस्तैश्च शोणितात्सहजानि च ।
अर्शांसि षट्प्रकाराणि विद्याद्गुदवलित्रये ॥

दोषास्त्वङ्मांसमेदांसि संदूष्य विविधाकृतीन् ।
मांसांकुरानपानादौ कुर्वन्त्यर्शांसि तान् जगुः ॥
कालिकतः—
तत्रार्शसामुपदिशति चतुः प्रकार-
मारोग्यमेकमगदैरपरं च शस्त्रैः ॥
क्षारेण चान्यदनलेन चतुर्थमित्थ-
मित्यामयैककृतिनः किल सुश्रुताद्याः ॥

अर्शोतिसारग्रहणीविकारा प्रायेण चान्योन्यनिदानभूताः । मदेनले संप्रभवति सर्वे दीप्ते तु शांति सहसा व्रजति ॥

यद्वयोरानुलोम्याय यदग्निबलवृद्धये ।
अन्नपानौषधं सर्वं तत्सेव्यं नित्यमर्शसि ॥
वृंदसंग्रहात् ।—
वातातिसारवद्भिन्नवर्चस्यर्शस्सुपाचरेत् ॥
उदावर्त्तविधानेन गाढविट्कानिवासकृत् ।
प्रवृत्तबहुलास्राणि पित्तशोणितनाशने ॥
विड्विबंधे हितं तक्रं यवानीविश्वसंयुतम् ॥
न प्ररोहंति गुदजाः पुनस्तक्रसमाहताः ॥
स्रोतःसु तक्रसुक्तेषु रसः सम्यगुपैति यः ।
तेन पुष्टिर्बलं वर्णं प्रहर्षश्चोपजायते ॥
वातश्लेष्मविकाराणां शतं च विनिवर्त्तते ।
सगुडां पिप्पलीयुक्तामभयां घृतभर्जिताम् ॥
त्रिवृद्दंतीयुतां वापि भक्षयेदनुलोमिकाम् ।

तिलारुष्करसंयोग भक्षयेदग्निवर्द्धनम् ।
कुष्ठरोगहरं श्रेष्ठमर्शसां नाशन परम् ।
तिलभल्लातक पथ्यागुडश्चेति समांशकम् ॥
दुर्नामश्वासकासघ्न प्लीहपांडुज्वरापहम् ।
मृल्लित सूरण कंदं पक्त्वाग्नौ पुटपाकवत् ॥
अद्यात्सतैललवण दुर्नामविनिवृत्तये ।
सनागरारुष्करवृद्धदारुकं गुडेन यो मोदकमत्त्युदारकम् ।
अशेषदुर्नामकरोगदारक करोति वृद्ध सहसैव दारकम् ॥
लाक्षा हरिद्रा मंजिष्ठा मधुक नीलमुत्पलम् ।
अजाक्षीरेण सपीत रक्तजार्शोविनाशनम् ॥
नवनीततिलाभ्यासात्केशरनवनीतशर्कराभ्यासात् ।
दधिसारमथिताभ्यासाद्गुदजा शाम्यंति रक्तवहा' ॥
रास्नामेरंडमूलं च मधुकं देवदारु च ।
यवचूर्णेन युक्तानि यवचूर्णेन साधयेत् ॥
तेनोपनाहं कुर्वीत स्वेदयेच्च पुन'पुन ।
तेनार्शांसि सम यांति वेदना च निवर्त्तते ॥
शिरीषबीज द्वौ क्षारौ लागली सेंधवं वचा ।
स्नुहीक्षीरेण पिष्टानि गवा पित्तेन भावयेत् ॥
अर्शांसि लेपयेत्तेन सप्तरात्रं पुनः पुनः ।
लिप्तान्येतेन सर्वाणि विनश्यति न सशय ॥
त्रिवृत्तेजोवती दती श्वदंष्ट्रा चित्रकं सटी ॥
गवाक्षी मुस्तविश्वाब्दविडंगानि हरीतकी ॥

पलोन्मितानि चैतानि भल्लातकपलाष्टकम् ।
वृद्धदारात्पलान्यष्टौ षोडशैव तु सूरणात् ॥
जलद्रोणद्वये क्वाथ्य चतुर्भागावशेषितम् ।
पूतं रसं तु तं दत्वा क्वाथेभ्यस्त्रिगुणं गुडम् ॥
लेहं पचेद्धितं तावद्यावद्दर्वीप्रलेपनम् ।
अवतीर्य ततः पश्चाच्चूर्णानीमानि दापयेत् ॥
त्रिवृत्तेजोवती कन्दं चित्रकं द्विपलांशकम् ।
एलात्वक्पत्रनागाह्वं प्रत्येकं चापि षट्पलम् ।
द्वात्रिंशत्पलिकं चेह चूर्णं कृत्वा प्रदापयेत् ।
ततो मात्रां प्रयुञ्जीत जीर्णे क्षीररसाशनः ॥
पञ्चगुल्मान् प्रमेहांश्च पाण्डुरोगं हलीमकम् ।
जयेदर्शांसि सर्वाणि तथा सर्वोदराणि च ॥
दीपयेद्ग्रहणीमेष यक्ष्माणं चापकर्षति ।
पीनसे च प्रतिश्याये आढ्यवाते तथैव च ॥
अयं सर्वगदेष्वेव कल्याणो लेह उत्तमः ।
दुर्नामानि हरत्याशु दृष्टो वारसहस्रशः ॥
भवत्यनेन पुरुषः शतवर्षं निरामयः ।
दीर्घायुषश्च जननो वलीपलितनाशनः ॥
रसायनवरश्चैव मेधावर्धन उत्तमः ।
गुडः श्रीबाहुशालोऽयं दुर्नामारिः प्रकीर्तितः ॥
इति बाहुशालो गुडः ।

१'पलान्यष्टवरुष्करात्' इति च पाठः । २'एलात्वङ्मरिचचापी' तथा पाठः

पथ्या पञ्चपलान्येकमजाज्या मरिचस्य च ।
पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ॥
पलानि वृद्धया क्रमशो यवक्षार पलद्वयम् ।
भल्लातकपलान्यष्टौ कदस्तु द्विगुणो मतः ॥
द्विगुणेन गुडेनैषां वटकानक्षसमितान् ।
एकैक भक्षयेत्प्रातस्तक्रमम्ल पिबेदनु ।
वह्नि सदीपयत्याशु ग्रहणीपाण्डुरोगजित् ॥
कांकायनेन शिष्येभ्यः शस्त्रक्षाराग्निभिर्विना ।
कथितो वटको ह्येष गुदजानां विनाशनः ॥
इति कांकायनो मोदक ।
त्रिफलादशमूलानि निःकुम्भानां पलपलम् ।
वारिद्रोणे शृत पादशेष गुडतुलायुतम् ।
आज्यभाण्डस्थित मास दन्त्यरिष्टो निषेवितः ॥

इति दन्त्यरिष्टः ।

गुदजकृम्युदावर्त्तग्रहणीपाण्डुरोगहा ।
भल्लातकानि त्रिफला दंती चित्रकमेव च ।
एतानि समभागानि सैन्धवं द्विगुणं भवत् ॥
कपालाग्नौ भवेत्पक्कं मृदुना गोमयाग्निना ।
एतत्कल्याणलवणं श्रेष्ठमर्शोविकारिणम् ॥

इति कल्याणलवणम् ॥

अथाह सुश्रुतार्य. ।

यथा सर्वाणि कुष्टानि हत. खदिरबीजको ।
तथैवार्शांसि सर्वाणि वृक्षकारुष्करौ हत ॥
हरिद्रायाः प्रयोगेन प्रमेहा इव षोडश । ,
क्षाराग्निभ्यां निवर्तंते तथा वृषगुदोद्भवा ॥
घृतानि दीपनीयानि लेहायस्कृतय सुरा ।
आसवाश्च प्रयोक्तव्या वीक्ष्य दोषसमुच्छ्रितम् ।
वेगावरोध स्त्रीपृष्ठयानान्युत्कटकासनम् ।
यथास्वं दोषलं चान्नमर्शस परिवर्जयेत् ॥

इति श्रीतोमरवंशावतंसरिपुमृतभैरवश्रीवीरसिंहदेवविरचिते ग्रन्थे वीरसिंहावलोके ज्योतिःशास्त्रकर्मविपाका युर्वेदोक्तप्रयोगेर्शाधिकार' ॥

अथानुक्रमप्राप्तमजीर्णमंदाग्निप्रयोगं ज्योति शास्त्राभिप्रायेण दर्शयति । यदुक्त जातके ।

अतिपरिभूत कृपण सहजयुतो मानवो भवति ।
जीवे मंदाग्नि स्त्रीवियुतो दुश्चिक्ये पापकर्मा च ॥

अन्यच्च-

अल्पोदराग्निपुरुत्व परिभूतो दुर्बलोलसः षष्ठे ॥
स्त्रीवियुतो रिपुहंता जीवे पुरुषोतिविख्यात
तज्जनिताजीर्णमंदाग्नितत्प्रशांत्यर्थं नत्प्री
जपहोमादिक कुर्यात । बृहस्पते आतियदर्यो

तिलाज्याश्वत्थसमिद्भिर्होमः । पतिवासोदानं स्नान च ॥
मालतीकुसुमशुभ्रसर्पपै पल्लवैश्च मदयन्तिकोद्भवैः ।
मिश्रमवु मधुकेन च स्फुट वैकृत गुरुकृतं निकृन्तति ॥

पुष्पराग मौक्तिक वा धारयेत् । दध्योदन नैवेद्यं निवेद्यम् ॥ अथाजीर्णमंदाग्निजनितरोगे कर्मविपाकं तत्प्रतीकारश्च अन्नहर्ता त्वजीर्णवान् भवति अस्य प्रायश्चित्तम् उपवासत्रय वयोऽवस्थानुसारेण कुर्यात् । अग्निरस्मीत्यनेन मन्त्रेण अष्टोत्तरसहस्र जपेत् । चरुघृताभ्यां च जुहुयात् । यदुक्तमृग्विधाने—

यस्य भुक्तं न जीर्येत न तिष्ठेद्वा कथचन ।
तस्यान्नस्यानुरोधत्वादग्निरस्मीत्यृच जपेत् ॥

अथवा वार्धुषिकस्यान्नतस्य शूद्रस्य सवघ्यन्न भुक्त्वाऽजीर्णार्तः शूलव्याधिरोगवान् भवति ।

शूद्रस्यैव तु भुक्त्वान्नमव्रतस्य द्विजस्य च ।
शूलव्याधिर्भवेन्नित्यमजीर्णामयपीडित ॥

तत्रोपवासत्रय कुर्यात् । शुद्धरजतपलत्रयसंमिश्रमन्न श्रोत्रियाय कुटुंबिने दद्यात् । प्रकारान्तरेणापि गोमांसखादको मदग्नरोग्निर्भवति ॥ 'अग्निसूक्त जपेन्नित्य श्रीसूक्त च विचक्षण' इति वृद्धपराशरवचनात् । प्रकारान्तरमपि । यः पुनः कारणमन्तरेण गर दत्वा प्रमादयाति स मन्दाग्निमृतकल्पो जायते अतो रुद्रसूक्तेन चरुघृताभ्याम- ष्टोत्तरायुत [illegible] । तामग्निवर्णामित्यष्टोत्तरशतं

जपेत् 'रोगमुक्तो भवेन्नर' इति वचनात् चत्वारिंशद्ब्राह्मणान् भोजयेत्। प्रकारान्तरमपि यथाह बौधायनः॥

अग्नेर्मान्द्यं भवेत्तस्य यस्त्रेताग्निविनाशक'।
वक्ष्यामि तत्प्रतीकार यथोक्त ब्रह्मणा पुरा॥
पलार्धेन तदर्धेन तदर्धेनाथ वा पुन।
राजत कारयेत्सम्यगग्नेर्वाहनमुत्तमम्॥
सौवर्णस्य खुरा कार्या श्वेतवस्त्रेण वेष्टयेत्।
श्वेतमाल्यै श्वेतगन्धैर्धूप दद्यान्मधूत्कटम्॥
तंडुलोपरि सस्थाप्य पुन सपूजयेत्सुधी।
तडुलानां परीमाण द्रोणद्वयमुदाहृतम्॥
आग्नेय्या दिशि होमश्च समिदाज्यतिलैरपि।
वपस्ते विष्णवे इति मन्त्रेण समिद्धोमः प्रशस्यते॥
अग्नेनयेत्याज्यहोमोप्यग्निनाग्निरिति तिलाक्षतै।
मन्त्राध्यायोक्तमार्गेण वह्निसस्थापन स्मृतम्॥
अग्नेः प्रागुत्तरे देशे शुभ पात्र च विन्यसेत्।
प्रणीताप्रोक्षपर्यन्त कृत्वा स्नान विधीयते।
आपोहिष्ठेति प्रत्यृच हिरण्येति त्यृच तथा॥
पवमानानुवाकेन मार्जयेद्रोगिण कुशैः।
शन्नो वातानुवाकेन शान्तिर्वापि प्रकल्पयेत्॥
तस्मै हुतवते रोगी प्राङ्मुखाय उदङ्मुख।
पूजिताय च शान्ताय दद्यादन्न सदक्षिणम्॥
देवाना यो मुख हव्यवाहन सर्वपूजित।

तस्य त्वं वाहन पूज्य देवैः सेन्द्रैर्महार्षिभिः ॥
अग्निमान्द्यं पूर्वकर्म विपाकोस्य तु यन्मम ।
तत्सर्वं नाशय क्षिप्र जठराग्नि प्रवर्धय ॥

इति दानमन्त्रः ।

एवं विप्राय यो दद्यादग्नेर्वाहनमुत्तमम् ।
वडवानलवान्मर्त्यो जीवेद्वर्षशत पुनः ॥
तत स्वबन्धुभिर्विप्रैः स्नात्वा भुञ्जीत मानव ॥

इत्यग्निमान्द्यहरमेषदानविधि ।

अथ क्रमप्राप्तस्याजीर्णरोगस्य सनिदान चिकित्सितमाह रुग्विनिश्चयात् ॥

मन्दस्तीक्ष्णोथ विषम समश्चेति चतुर्विध ।
कफपित्तानिलाधिक्यात्तत्साम्याज्जाठरोनिल ॥
विषमो वातजान् रोगास्तीक्ष्ण पित्तनिमित्तजान् ।
करोत्यग्निस्तथा मन्दो विकारान्कफसंभवान् ॥
समा समाग्नेरशिता मात्रा सम्यग्विपच्यते ।
स्वल्पोपि नैव मन्दाग्नेर्विषमाग्नेस्तु देहिन ॥
कदाचित्पच्यते सम्यक्कदाचिन्न विपच्यते ।
मात्रातिमात्राप्यशिता सुख यस्य विपच्यते ॥
तीक्ष्णाग्निरिति त विन्द्यात्समाग्नि श्रेष्ठ उच्यते ।
कफे क्षीणे यदा पित्त स्वस्थाने मारुतानुगम् ॥
तीव्र प्रवृद्धयेदाग्नि तदा त भस्मक वदेत् ।
आम विदग्ध विष्टब्ध कफपित्तानिलैस्त्रिभि ॥

अजीर्णं केचिदिच्छन्ति चतुर्थं रसशेषतः ।
अजीर्णं पञ्चमं केचिन्निर्दोषं दिनपाकि च ॥
वदन्ति षष्ठं चाजीर्णं प्राकृतं प्रतिवासरम् ।

अत्यम्बुपानाद्विषमाशनाच्च संधारणात्स्वप्नविपर्ययाच्च ।
कालेऽपिसात्म्यं लघु चापि भुक्तमन्नं न पाकं भजते नरस्य॥
ईर्ष्याभयक्रोधपरिक्षितेन लुब्धेन शुग्दैन्यनिपीडितेन ।
प्रद्वेषयुक्तेन च सेव्यमानमन्नं न पाकं लभते नरस्य ॥

सूचीभिरिव गात्राणि तुदन्सन्तिष्ठतेऽनिलः ।
यस्याजीर्णेन सा वैद्यैर्विषूचीति निगद्यते ॥
यत्रस्थमामं विरुजत्तमेव देशं विशेषेण विकारजातैः ।
दोषेण येनावततं शरीरं तल्लक्षणैरामसमुद्भवैश्च ॥
य श्यावदन्तोष्ठनखोऽल्पसंज्ञश्छर्द्यर्दितोऽभ्यन्तरजातनेत्रः ।
क्षामस्वरः सर्वविमुक्तसंधिर्यायान्नरोऽसौ पुनरागमाय ॥

वृंदसंग्रहात्-
समस्य रक्षणं कार्यं विषमे वातनिग्रहः ।
तीक्ष्णे पित्तप्रतीकारो मन्दे श्लेष्मविशोधनम् ॥
वचालवणतोयेन वान्तिरामे प्रशस्यते ।
धान्यनागरसिद्धं वा तोयं दद्याद्विचक्षणः ॥
आममामप्रशमनं शूलघ्नं बस्तिशोधनम् ॥
विष्टब्धे स्वेदनं कार्यं पेयं वा लवणोदकम् ॥
रसशेषे दिवास्वप्नो लंघनं वमनं तथा ।

व्यायामप्रमदाध्ववाहनरथक्रांतानतिसारिणः
शूलश्वासवतस्तृषापरिगतान् हिक्कामरुत्पीडितान् ।
क्षीणान् क्षीणकफान् शिशून्मदहृतान्वृद्धान्नसाजीर्णिनो
रात्रौ जागरितान्नरान्निरशनान्काम दिवा स्वापयेत् ॥

पथ्यापिप्पलिसयुक्तं चूर्णं सौवर्चलं भवेत् ।
मधुनोष्णोदकेनाथ मत्वा दोषगतिं भिषक् ॥
चतुर्विधमजीर्णं तु मन्दानलमथारुचिम् ।
आध्मानवातगुल्म च शूल चाशु नियच्छति ॥

आरोग्यचिन्तामणेः—

मातुलुङ्गीजटाव्योष निशाबीज करञ्जकम् ।
काञ्जिकेनाञ्जनाद्धन्याद्विषूचीमतिदारुणाम् ॥

दामोदरमतात्—

वराव्योषाग्निबिल्वोग्राविषाद्यैः सगुडैर्वटी ।
त्रिगुजा जीर्णशूलार्तिवातश्लेष्मगदापहा ॥
हिङ्गुभागो भवेदेको वचा द्विगुणिता भवेत् ।
पिप्पली त्रिगुणा चात्र शृंगवेर चतुर्गुणम् ॥
यवा पञ्च गुणा ज्ञेया षड्गुणा च हरीतकी ।
चित्रक सप्तगुणित कुष्ठं चाष्टगुण भवेत् ॥
एतद्वातहरं चूर्णं पीतमात्रं प्रशातयेत् ।
पिबेद्दध्ना मस्तुना वा सुरया कोष्णवारिणा ॥
सोदावर्तमजीर्णं च प्लीहानमुदर तथा ।
अंगानि यस्य शीर्यन्ति विष वा येन भक्षितम् ॥
अर्शोहर दीपनं च शूलघ्न गुल्मनाशनम् ।

कास श्वास निहन्त्याशु तथैव क्षयनाशनम् ॥
चूर्णमग्निमुखं नाम न क्वचित्प्रतिहन्यते ।
इत्यग्निमुख चूर्णम् ॥
त्रिकटुकमजमोदासैन्धवं जीरके द्वे
समधरणधृतानामष्टमो हिङ्गुभागः ।
प्रथमकवलभुक्तं सर्पिषा चूर्णमेत-
ज्जनयति जठराग्निं वातरोगान्निहन्ति ॥
हिंग्वम्लपञ्चपण त्रिलवणद्विक्षारपाठासटी-
पथ्यादाडिमजीरधान्यहपुषावृक्षाम्लरुग्दीप्यकम् ।
शुंगार्द्रामृतमन्नकोष्णजलभुग्गुल्माग्निमान्द्यारुचि-
प्लीहार्शोगलगण्डहृद्ग्रहणिकानाहास्थसर्वार्त्तिजित् ॥
योगरत्नावलीत —
विजया पिप्पली शुण्ठी त्रिसम परिकीर्तितम् ।
अग्निसदीपन नृणां त्रिदोषामयनाशनम् ॥
उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचित ।
लघुता क्षुत्पिपासे च जीर्णाहारस्य लक्षणम् ॥

इति श्रीतोमरवशावतंसपृथ्वीभूमिभैरव श्रीवीरसिंहदेवविरचिते
ग्रन्थे वीरसिंहावलोके ज्योतिःशास्त्रकर्मवि-
पाकायुर्वेदोक्तोऽजीर्णाधिकारः ॥

---

अथ क्रमागत कृमिरोगोत्पत्ति प्रतीकार च ज्योतिः-
शास्त्राभिप्रायेण व्याचष्टे । यथोक्तं जातके-

संज्ञारहितो विकलो व्याधिविबन्धकृमिक्षपितदेहः ।
निधनस्थे रजनिकरे स्वल्पायुर्भवति सक्षीणे ॥
वचनान्तरमपि जातके—
शत्रुगृहेऽर्कदशायां नयनविनाशो भवेच्च कुब्जत्वम् ।
ज्वालागदैभरोगैर्भवन्ति कृमयः पराभूतिः ॥

अष्टमस्थानस्थितचन्द्रजनितकृमिरोगप्रतीकाराय प्रागुक्तं विधानं चन्द्रप्रीतये विधिवद्विदध्यात् ॥ अथ क्रिमिरोगकर्मविपाकं तत्प्रतीकारं चाह ।

कुञ्जरधेन्वश्वघाती च कृमिकुक्षिर्भवेन्नरः ।
स नीलवृषभान्दद्यात् ब्राह्मणेभ्यश्च भोजनम् ।
मृते भर्तरि या नारी नीलवस्त्रं प्रधारयेत् ।
सा मृता नरकं याति कृमिकुक्षिस्ततः परम् ।

इति वचनात् । ततः परमिति जन्मान्तरमित्यर्थः ।

इति कृमिकुक्षिहरो वृषदानविधिः ॥

अथकृमिरोगस्य सनिदानं चिकित्सितमाह । रुग्वि-निश्चयात् ॥

कृमयस्तु द्विधा प्रोक्ता बाह्याभ्यन्तरभेदतः ।
बहिर्मलकफासृग्विड्जन्मभेदाश्चतुर्विधाः ॥
नामतो विंशतिविधा बाह्यास्तत्र मलोद्भवाः ।
तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः ॥
बहुपादाश्च सूक्ष्माश्च यूकालिक्षाश्च नामतः ।
द्विधा ते कोठपिडकाकण्डूगण्डान्प्रकुर्वते ॥

अजीर्णभोजीमधुराम्लनित्यद्रवाप्रियः पिष्टगुडोपभोक्ता ।
व्यायामवर्जीचदिवाशयीच विरुद्धभुक् सलभतेकृमींश्च ॥
माषपिष्टान्नलवणगुडशाकैः पुरीषजाः ।
मांसमाषगुडक्षीरदधिशुक्तैः कफोद्भवाः ॥
विरुद्धाजीर्णशाकाद्यैः शोणितोत्था भवन्ति हि ।
ज्वरो विवर्णता शूलं हृद्रोगः श्वसनं भ्रमः ॥
भक्तद्वेषोतिसारश्च संजातकृमिलक्षणम् ।
वृंदसग्रहात् ।
मुस्ताखुकर्णीफलदारुशिग्रुकाथः सकृष्णः कृमिशत्रुकल्पः
मार्गद्वयेनापिचिरप्रवृत्तान्कृमीन्निहंतिकृमिजांश्चरोगान् ॥
पारसीकायवानी पीता पर्युषितवारिणा प्रातः ।
गुडपूर्वा कृमिजातं कोष्ठगतं पातयत्याशु ॥
पलाशबीजस्य रसं पिबेद्वा क्षौद्रसंयुतम् ।
लीढ्वा क्षौद्रेण वैडंगं चूर्णं कृमिनिवारणम् ।
दाडिमीत्वक्कृतः क्राथस्तिलतैलेन संयुतः ।
त्रिदिनात्पातयत्येष कोष्ठतः कृमिजालकम् ॥
ककुभकुसुमं विडंगं लांगलिभल्लातकं तथोशीरम् ।
श्रीवेष्टं सर्जरसं चंदनमथ चाष्टमं दद्यात् ॥
एष सुगंधो धूपो मशकानां वै विनाशकः श्रेष्ठः ।
शय्यासु मत्कुणानां शिरसि च गात्रेषु यूकानाम् ॥

---

१ शुक्तं कालान्तरेणाम्लीभूतं इक्षुरसविकारः । शाकैरिति वङ्गसेनपाठः॥

भण्डी ।पिङ्गारनालेन गोमूत्रेणातिमुक्तकः ।
कुणटीकटुतैलेन योगो यूकापहस्त्वयम् ॥

इति श्रीतोमरवंशावतंसरिपुभूतभैरव श्रीवीरसिंहदेव विरचिते ग्रन्थे वीरसिंहावलोक ज्योतिःशास्त्रकर्मविपाकायुर्वेदोक्त-प्रयोगः कृमिविकाराधिकारः ॥

---

अथ पांडुरोगस्य जातकाभिप्रायेण हेतुमाह तत्प्रतीकारं च–

बाल्ये मण्डलयुक्तो नृशंसकर्मा ह्यनेकदुःख. स्यात् ।
अष्टमराशौ रविजे क्षयादिव्याधिभिस्तप्तः ॥

अत्र आदिशब्देन पाण्डुरोगोपि गृह्यते। तदुपद्रवत्वात्। अन्यच्च सिंहांशे वर्त्तमाने चन्द्रेपि पाण्डुरोगोद्भवो जायते तदुक्तं'पांडुस्तीक्ष्णोल्पपुष्प' इति वचनात्। अष्टमांशस्थितशनिजनितपाण्डुरोगप्रतीकाराय शनिप्रीतये पूर्वोक्तमेव सकल जपहोमादिकं विधान कुर्यात्। तथा च सिंहांशवर्त्तमानचंद्रजनितपांडुरोगप्रतीकाराय चंद्रप्रीतये यथोक्त विधिवद्विधानं कुर्यात्तेनोपशान्तिर्भवति॥ इति पाण्डुरोगप्रतीकारविधि. ॥ अथ पाण्डुरोगस्य कर्मविपाकमाचष्टे तदुपशमप्रकारं च । देवब्राह्मणद्रव्यापहारी पाण्डुरोगवान्भवति स कृच्छ्रातिकृच्छ्रचान्द्रायणानि कुर्यात् कूष्माण्डहोमं च कुर्यात् हिरण्यं दद्यात्। अपरं च शौनकोक्तम्–

अन्त्यजागमने मर्त्यः पाण्डुरोगी प्रजायते ।
वक्ष्यामि तत्प्रतीकारं दानहोमादिकर्मणा ।
पलैनैकेन कुर्वीत रजतेन वसुन्धराम् ॥
तदर्धेनाथवा कुर्याद्वित्तशाठ्यं न कारयेत् ।
सपर्वतवनां कृत्वा समुद्रपरिवेष्टिताम् ॥
नवरत्नानि निक्षिप्य श्वेतवस्त्रेण वेष्टयेत् ।
कांस्यपात्रे विनिःक्षिप्य पलाष्टकविनिर्मितम् ॥
देवीमावाहयेत्तत्र भूतधात्रीं हरिप्रियाम् ।
एह्येहि वसुधे देवि रूपेऽस्मिन् सम्यगाविश ॥
सहिता पर्वतैर्वृक्षैः सुमनोभिर्मनोहरैः ।
एवमावाह्य तां देवीं गन्धमाल्यैः समर्चयेत् ॥
उपचारैः षोडशभिराचार्यः सर्वशास्त्रवित् ।
होमं चापि प्रकुर्वीत समिदाज्यतिलैः सह ॥
भूमिर्भूमीति मन्त्रेण समिद्धोमं प्रकल्पयेत् ।
मंत्रः प्रकीर्तितश्चाग्नौ तिलाज्याहुतिभिर्हुयात् ॥
अनेन तु ततश्चात्र कुंभं वस्त्रेण वेष्टितम् ।
स्थापयेदव्रणं शुभ्रमश्वस्थानादिमृत्तिकाः ॥
प्रक्षिपेच्च ततः शुद्धवारिणा परिपूरयेत् ।
पावमान्यादिभिर्मन्त्रैरभिषेकं च कारयेत् ।
शन्नोदेव्यनुवाकेन शान्तिं चापि प्रकल्पयेत् ॥
अभिषिक्तस्य चांगानि वस्त्रेण परिमार्जयेत् ॥
अक्षीभ्यामनुवाकेन यथा लिङ्गं सदर्भकम् ।

आचार्याय तु तां पृथ्वीं दद्याद्रोगी समाहितः ॥
मन्त्रेणानेन विधिवत्प्राङ्मुखाय ह्युदङ्मुखः।
धात्री धरित्री भूतानां वराहेणोद्धृता पुरा ॥
रत्नगर्भा समुद्रैकवसना सर्वशोभना।
दानेनानेन सुप्रीता पाण्डुरोगं व्यपोहतु ॥

इति दानमन्त्रः।

अनेन विधिना दद्यात्पृथ्वीदानं प्रयत्नतः।
तत्र जातं तु वैकृत्यमर्त्यजागमनेन तु ॥
तत्सर्वं नाशमायातु पाण्डुरोगादिकं महत्।
शान्त्यर्थं ब्राह्मणैः सार्द्धं कुर्यात्पुण्याहवाचनम् ॥

इति पाण्डुरोगहर पृथ्वीदानविधिः।

अथ कामलारोगो ज्योतिःशास्त्राभिप्रायेणाभिव्यज्यते। यदुक्तं जातके–

दुःखानि च शिरोरोगं कामलावातविभ्रमं।
शरीरे क्लेशमाप्नोति शशांके शुक्रमध्यगे ॥

शुक्रदशान्तःपतितचन्द्रजनितकामलारोगोपशान्तये प्रागुक्तं चंद्रजपहोमपूजादानस्नानविधानं विदध्यात् ॥

अथ कामलारोगस्य प्रतीकारं कर्मविपाकाभिप्रायेणाह। यथाह वृद्धगौतमः–

कामली भक्तचौरः स्याद्वक्ष्यामि तस्य निष्कृतिम्।
कुर्याच्च पक्षिराजं तु विष्णोर्वाहनमुत्तमम् ॥
पथ्योमौक्तिकद्वयम।

नासिकायां तथा वस्त्रमुत्तरीयं च राजतम् ॥
एवं कृत्वा गरुत्मन्तं घृतद्रोणोपरि न्यसेत् ।
श्वेतवस्त्रेण संवेष्ट्य श्वेतमाल्यैः समर्चयेत् ॥
सर्वशास्त्रार्थतत्त्वज्ञो वैष्णवो धर्मतत्परः ।
ब्राह्मणस्त्वर्चितो भक्त्या यजमानेन शक्तितः ॥
उपचारैः षोडशभिर्द्विजमभ्यर्चयेत्तदा ।
आग्नेय्यां दिशि होमश्च कर्तव्यः स्थण्डिले शुभे ॥
समिदाज्यतिलैस्तत्र पालाशसमिधोपि च ।
मन्त्रो गरुडगायत्री समिदाज्येन कीर्तितः ॥
तिलहोमो व्याहृतिभिः कार्यः स्त्रिरष्टकृत जपेत् ।
पक्षिराजाय विद्महे स्वर्णपक्षाय धीमहि ।
तन्नो गरुडः प्रचोदयात् ॥ इति गरुडगायत्री ॥
श्रीकृष्णपरमानन्द जगतः परिपालक ।
पूर्वजन्मनि यत्पापं भक्तचौर्यं मया कृतम् ॥
तेनावाप्तं हि वैरूप्यं यन्मया ह्यतिदुःसहम् ।
कामलोत्थमिदं देव तव वाहनदानतः ॥
विनाशयाशु मे कृष्ण जगतां पालको ह्यसि ।
इति दानमन्त्रः ।
स्थापयेदव्रणं कुम्भं सितवस्त्रेण वेष्टयेत् ।
क्षिपेत्तत्र च रत्नानि मृत्तिका पञ्च रोचनम् ॥
अश्वस्थानाद्गजस्थानाद्वल्मीकात्सङ्गमाद्ध्रदात् ॥
पञ्चत्वक्पल्लवान् क्षिप्त्वा पूरयेत्तीर्थवारिणा ॥

तेनाभिषेकं कुर्वीत आपोहिष्ठादिभि' क्रमात् ।
हिरण्यवर्णामित्यृचा पावमानेन चैव हि ॥
ततः स्नात्वा शुची रोगी विष्णोर्वाहनमुत्तमम् ।
सदक्षिणं मुदा युक्तः प्राङ्मुखाय निवेदयेत् ॥
मंत्रेणानेन विधिवदाचार्यायाप्युदङ्मुखः ॥
एवं गरुडदानं च कृत्वा मर्त्यः सुखी भवेत् ।
आचार्य भोजयित्वा च प्रणिपत्य विसर्जयेत्॥

इति कामलाहरणगरुडदानविधिः ।

अथ क्रमप्राप्तस्य पाण्डुरोगकामलाहलीमकादीनां निदानं चिकित्सितमाह ॥ रुग्विनिश्चयात् ॥

पांडुरोगा' स्मृताः पच वातपित्तकफैस्त्रय' ।
चतुर्थः सन्निपातेन पचमो भक्षणान्मृदः ॥

व्यवायमम्लं लवणानि मद्य मृदं दिवास्वप्नमतीव तीक्ष्णम् । निषेव्यमानस्य विदूष्यरक्त कुर्वंति दोषास्त्वचि पाण्डुभावम् ॥ त्वक्स्फोटनिष्ठीवनगात्रसादमृद्भक्षणप्रेक्षणकूटशोथा· । विण्मूत्रपीतत्वमथाविपाको भविष्यतस्तस्य पुरस्सराणि ॥

पाण्डुदन्तनखो यस्तु पाण्डुनेत्रश्च यो भवेत् ।
पाण्डुसघातदर्शी च पाण्डुरोगी विनश्यति ॥
अंतेषु शूनं परिहीनमध्यं म्लान तथा तेपु च मध्यशूनम्॥
गुदेपि शेफस्यथ मुष्कयोश्च शून प्रताम्यतमसज्ञकल्पम्॥

नासिकायां तथा वस्त्रमुत्तरीयं च राजतम् ॥
एवं कृत्वा गरुत्मन्तं घृतद्रोणोपरि न्यसेत् ।
श्वेतवस्त्रेण संवेष्ट्य श्वेतमाल्यैः समर्चयेत् ॥
सर्वशास्त्रार्थतत्त्वज्ञो वैष्णवो धर्मतत्परः ।
ब्राह्मणस्त्वर्चितो भक्त्या यजमानेन शक्तितः ॥
उपचारैः षोडशभिर्द्विजमभ्यर्चयेत्तदा ।
आग्नेय्यां दिशि होमश्च कर्तव्यः स्थण्डिले शुभे ॥
समिदाज्यतिलैस्तत्र पालाशसमिधोऽपि च ।
मन्त्रो गरुडगायत्री समिदाज्येन कीर्तितः ॥
तिलहोमो व्याहृतिभिः कार्यः स्विष्टकृतं जपेत् ।
पक्षिराजाय विद्महे स्वर्णपक्षाय धीमहि ।
तन्नो गरुडः प्रचोदयात् ॥ इति गरुडगायत्री ॥

श्रीकृष्णपरमानन्द जगतः परिपालक ।
पूर्वजन्मनि यत्पापं भक्तचौर्यं मया कृतम् ॥
तेनावाप्तं हि वैरूप्यं यन्मया ह्यतिदुःसहम् ।
कामलोत्थमिदं देव तव वाहनदानतः ॥
विनाशयाशु मे कृष्ण जगतां पालको ह्यसि ।

इति दानमन्त्रः ।

स्थापयेद्व्रणं कुम्भं सितवस्त्रेण वेष्टयेत् ।
क्षिपेत्तत्र च रत्नानि मृत्तिकाः पञ्च रोचनम् ॥
अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् ॥
पंचत्वक्पल्लवान् क्षिप्त्वा पूरयेत्तीर्थवारिणा ॥

तेनाभिषेकं कुर्वीत आपोहिष्ठादिभिः क्रमात्
हिरण्यवर्णामित्यृचा पावमानेन चैव हि ॥
ततः स्नात्वा शुचिः रोगी विष्णोर्वाहनमुत्तमम्
सदक्षिणं मुदा युक्तः प्राङ्मुखाय निवेदयेत् ।
मंत्रेणानेन विधिवदाचार्यायाप्युदङ्मुखः ॥
एवं गरुडदानं च कृत्वा मर्त्यः सुखी भवेत् ।
आचार्यं भोजयित्वा च प्रणिपत्य विसर्जयेत्॥

इति कामलाहरणगरुडदानविधिः ।

अथ क्रमप्राप्तस्य पाण्डुरोगकामलाहलीमकानां निदानं चिकित्सितमाह ॥ रुग्विनिश्चयात् ॥

पांडुरोगाः स्मृताः पञ्च वातपित्तकफैस्त्रयः ।
चतुर्थः सन्निपातेन पञ्चमो भक्षणान्मृदः ॥

व्यवायमम्लं लवणानि मद्यं मृदं दिवास्वप्नमतीव तीक्ष्णम् । निषेव्यमानस्य विदूष्य रक्तं कुर्वन्ति दोषास्त्वचि पाण्डुभावम् ॥ त्वक्स्फोटनिष्ठीवनगात्रसादमृद्भक्षणप्रेक्षणकूटशोथाः । विण्मूत्रपीतत्वमथाविपाको भविष्यतस्तस्य पुरस्सराणि ॥

पाण्डुदन्तनखो यस्तु पाण्डुनेत्रश्च यो भवेत्
पाण्डुसंघातदर्शी च पाण्डुरोगी विनश्यति ।
अंतेषु शून परिहीनमध्यं म्लानं तथा तेषु च मध्यशूनम्
गुदेऽपि शेफस्यथ मुष्कयोश्च शून प्रताम्यन्तमसंज्ञकल्पम्

विवर्जयेत्पांडुकिन यशोर्थी तथातिसारज्वरपीडितं च॥
वृंदसंग्रहात्-

फलत्रिकामृतावासातिक्ताभूनिंबनिंबज. ।
क्वाथः क्षौद्रयुतो हन्यात्पाडुरोग सकामलम् ॥
पुनर्नवानिंबपटोलशुंठीतिक्तामृतादार्व्यभयाकपायः ।
सर्वांगशोफोदरकासशूलश्वासान्वित पाण्डुगद निहंति ॥
मंडूरलोहाग्निविडंगपथ्याव्योषाशकः सर्वसमानतः स्यात्।
मूत्रान्वितोयं मधुनावलेह' पाण्डुामयं हन्त्यचिरेण घोरम्॥
लोहपात्रस्थित क्षीर सप्ताहं पथ्यभोजन ।
पिबेत्पाण्डुामयी शोपी ग्रहणीदोपपीडित ॥
सप्तरात्र गवा मूत्र भावित चाप्ययोरज' ।
पाडुरोगोपशांत्यर्थ पयसा प्रपिबेन्नरः ॥
त्रिफलाया गुडूच्या वा दार्व्या निम्बस्य वा रसः।
प्रातर्मधुयुत चैव कामलार्त. पिबेन्नर. ॥
त्रिफला द्वे हरिद्रे च कटुरोहिण्ययोरज ॥
चूर्णित मधुसर्पिभ्यांलेहयेत्कामलापहम् ॥
धात्रीलोहरजोव्योपनिशाक्षौद्राज्यशर्करा: ।
लेहो निवारयत्याशु कामलामुद्धतामपि ॥
अंजने कामलार्ताना द्रोणपुष्पीरस शुभ' ।
निशागैरिकधात्रीणां चूर्णा वासं प्रकल्पयेत् ॥
नस्य कर्कोटमूलस्य देयं वा जालिनीफलम् ।

ग्ध्वाक्षकाष्ठैर्मलमायसं तु गोमूत्रनिर्वापितसप्तवारम् ॥
वेचूर्ण्य लीढ मधुनाचिरेण कुंभाह्वयं पाण्डुगदं निहन्यात् ॥
मंडूरस्य च शुद्धस्य तुलार्धं परिकीर्तितम् ।
तद्वल्लोहस्य पत्राणि तिलोत्सेधप्रमाणतः ॥
पुराणगुडपंचाशत्कोलप्रस्थत्रयं तथा ।
निकुंभचित्रकाभ्यां च पले द्वे द्वे सुचूर्णिते ॥
पिप्पलीनां विडंगानां कुडवं च पृथक्पृथक् ।
त्रीश्चापि त्रिफलाप्रस्थान् जलद्रोणे विपाचयेत् ॥
अर्धमासस्थितो धान्ये पेयोरिष्टप्रमाणतः ।
दोषानुभयतः प्राप्य पाण्डुरोगं नियच्छति ॥
कृमीनर्शांसि कुष्ठं च कासश्वासकफामयान् ।
एकोरिष्टस्तु माण्डूरः सर्वपाण्ड्वामयापहः ॥
त्र्यूषणं त्रिफलामुस्तं विडगं चव्यचित्रकौ ।
दार्वीत्वङ्माक्षिकौ धातुर्ग्रंथिकं देवदारु च ॥
एषां द्विपलिकान् भागान् चूर्णं कृत्वा पृथक्पृथक् ।
माण्डूरं द्विगुणं चूर्णं शुद्धमंजनसन्निभम् ॥
मूत्रे चाष्टगुणे पक्त्वा तस्मिंस्तु प्रक्षिपेत्ततः ।
उदुंबरसमान्कुर्याद्वटकांस्तान् यथाग्नि च ॥
उपयुञ्जीत तक्रेण सामे जीर्णे च भोजने ।
मण्डूरवटका ह्येते प्राणदाः पाण्डुरोगिणाम् ॥
कुष्ठानि जठरं शोथमूरुस्तम्भकफामयान् ।
अर्शांसि कामलान्मेहान्यक्ष्माणं नाशयन्त्यपि ॥

यवगोधूमशालीनां रसैर्जाङ्गलजैः शुभैः ।
मुद्गाढकीमसूराद्यैः प्रायो भोजनमिष्यते ॥

इति श्रीतोमरवंशावतंसरिपुभूतभैरवश्रीवीरसिंहदेवविरचितेवीरसिंहावलोके ज्योतिःशास्त्रकर्मविपाकायुर्वेदत्रकमकोरण पाडुरोगकामलाहलीमकुम्भकामलादिरोगप्रयोगाधिकारः ॥

अथ क्रमप्राप्तस्य रक्तपित्तस्य ज्योतिःशास्त्राभिप्रायेण प्रकारमाह-

चंद्रक्षेत्रे यदा भौमो जायते मनुजस्तदा ।
रक्तपित्तेन दूनांगो नानाव्याधिसमाकुलः ॥

अपरं च-

रक्तपित्तज्वरं दाहमग्निचौरैरुपद्रुतम् ।
लभते नात्र संदेहश्चन्द्रमध्ये यदा कुजः ॥

चंद्रसंयोगिकुजजनितबाधोपशांतये तत्प्रीतये जपहोमदानादिकविधिमाह । अग्निर्मूर्द्धेति मन्त्रेण जपः तिलाज्यखादिरसमिद्भिर्होमः रक्तवृषभदानं स्नानं च । यथाह श्रीपतिः ।

बिल्वचन्दनवलारुणपुष्पैर्हिंगुलकफलिनीबकुलैश्च ।
स्नानमद्भिरिह मांसियुताभिर्भौमदोषविनिवारणमाहुः ॥

विद्रुमं च परिदध्यात् हविष्यं नैवेद्यम् । अथ कर्मविपाकाभिप्रायेण रक्तपित्तप्रतीकारमाह-यः पूर्वजन्मनि वैद्यशास्त्रमदृष्टौषधमन्यथा कृत्वा प्रयोजयति स शोणितपित्तव्याधिमान् भवति । स अग्नि दूतं वृणीमह इत्या-

दिना चरुघृताभ्यामष्टोत्तरायुतमग्नौ जुहुयात् रक्तपित्तापनुत्तये इति गरुडपुराणाभिधानात् ॥ अथ क्रमप्राप्तस्य रक्तपित्तस्य सनिदानं चिकित्सितमाह।रुग्विनिश्चयात्।

घर्मव्यायामशोकाध्वव्यवायैरतिसेवितैः ।
तीक्ष्णोष्णक्षारलवणैरम्लैः कटुभिरेव च ॥
पित्तं विदग्ध स्वगुणैर्विदहत्याशु शोणितम् ।
ततः प्रवर्तते रक्तमूर्ध्वं चाधो द्विधापि वा ।
ऊर्ध्वं कर्णाक्षिनासास्यैर्मेढ्रयोनिगुदैरधः ॥
कुपितं रोमकूपैश्च समस्तैस्तत्प्रवर्तते ।
सदनं शीतकामित्वं कण्ठधूमायनं वमिः ॥
लोहगन्धिश्च निश्वासो भवन्त्यास्मिन्भाविष्यति ।
एकमार्गं बलवतो नातिवेगं न वोत्थितम् ।
रक्तपित्तं सुखे काले साध्यं स्यान्निरुपद्रवम् ॥
एकदोषानुगं साध्य द्विदोष याप्यमुच्यते ॥
त्रिदोषजमसाध्य स्यात् मदाग्नेरतिवेगवत् ।

दौर्बल्यं श्वासकासज्वरवमथुमदा पाण्डुता दाहमूर्च्छा
भुक्ते घोरो विदाहस्त्वधृतिरपि सदा हृद्यतुल्या च पीडा ।
तृष्णा कोष्ठस्य भेदाः शिरसि च तपन पूतिनिष्ठीवनत्व
भक्तद्वेषाविपाको विकृतिरपि भवेद्रक्तपित्तोपसर्गात् ॥
मांसप्रक्षालनाभ क्वथितमिव च यत्कर्दमाम्भोनिभं वा
मेद पूयास्रकल्पं यकृदिव यदि वा पक्वजम्बूफलाभम् ।
यत्कृष्णं यच्च नील . यच्च चोक्ताविकारा-

स्तद्रूर्ध्वं रक्तपित्तं सुरपतिधनुषा यच्च तुल्यं विभाति ॥

यथाह सुश्रुताचार्यः ॥

नादौ संग्राह्यमुद्रिक्तं यदसृग्बलिनं ततः ।
तत्पाण्डुग्रहणीकुष्ठप्लीहगुल्मज्वरावहम् ॥
अधः प्रवृत्तं वमनैरूर्ध्वं भागं विरेचनैः ।
जयेदन्यतरद्वापि क्षीणस्य शमनैरसृक् ॥
अतिप्रवृत्तदोषस्य पूर्वं लोहितपित्तिनः ।
अक्षीणबलमांसाग्नेः कर्तव्यमपतर्पणम् ॥
लंघितस्य ततो युक्त्या लघ्वन्नमवचारयेत् ।
पाचनं तर्पणं लेहान्सर्पींषि विविधानि च ॥
द्राक्षामधुककाश्मर्यसितायुक्तं विरेचनम् ।
यष्टीमधुकयुक्तं च सक्षौद्रं वमनं हितम् ॥
पयांसि शीतानि रसाश्च जांगलाः
सतीनयूषाश्च सशालिषष्टिकाः ।
पटोलशेलूपनिषण्णयूथिका-
वटातिमुक्ताकुरविंडुवारजम् ॥

हितं च शाकं घृतसंस्कृतं यदा तथैव धात्रीफलदाडिमान्वितम् । रसाश्च पारावतशखकूर्मजास्तथायवाग्वोभिहिता धृतोत्तराः ॥

वृंदसंग्रहात्-

आटरूपकमृद्वीकापथ्याक्राथः सशर्करः ।
मधुमिश्रः श्वासकासरक्तपित्तनिवारणः ॥

नीलोत्पलं शर्करा च पद्मकं पद्मकेसरम् ॥
तन्दुलोदकसंयुक्तं प्रशस्तं रक्तपित्तिनाम् ।
वृषस्य स्वरसं कृत्वा द्रव्यैरेभिश्च योजयेत् ॥
प्रियंगुमृद्धिकारोध्रमंजनं वा विचूर्णयेत् ।
तच्चूर्णं योजयेत्तत्र रसक्षौद्रसमन्वितम् ॥
नासिकामुखपायुभ्यो योनेर्मेढ्राच्च योपिताम् ।
प्रस्रवद्रक्तपित्तास्र स्थापयेदेप योगराट् ॥
यच्च शस्त्रक्षतं रक्तं न तिष्ठेद्विवृत पुनः ।
तदप्यनेन योगेन तिष्ठत्याश्ववचूर्णितम् ॥
घ्राणशृतेसृजि प्रोक्तं योपित्क्षीरेण नावनम् ।
नस्यं दाडिमपुष्पोत्थं रसो दूर्वारसोथ वा ॥
रसो दाडिमपुष्पस्य दूर्वारससमन्वित ॥
अलक्तकरसोपेत पथ्यारससमन्वितः ॥
योजतो नस्यतः क्षिप्रं त्रिदोपमपि देहिनाम् ।
नासारक्तं प्रवृत्तं तु हन्यादिति किमद्भुतम् ।
वासायां विद्यमानायामाशाया जीवितस्य च ।
रक्तपित्ती क्षयी कासी किमर्थमवसीदति ॥
पक्वोदुम्बरकाश्मर्यपथ्याखर्जूरगोस्तनी ।
मधुना प्रति संलीढा रक्तपित्तं पृथक्पृथक् ।
दूर्वा सोत्पलकिंजल्कमंजिष्ठासैलवालुका ।
मूर्वारोध्रमुशीराणि मुस्तचंदनपद्मकम् ॥
द्राक्षामधुकपथ्याह्वं काश्मीर चंदन सितम् ।

स्तद्वर्ज्यं रक्तपित्त सुरपतिधनुषा यच्च तुल्यं विभाति ॥
यथाह सुश्रुताचार्यः ॥
नादौ सग्राह्यमुद्रिक्त यदसृग्बलिन ततः ।
तत्पाण्डुग्रहणीकुष्ठप्लीहगुल्मज्वरावहम् ॥
अध' प्रवृत्त वमनैरूर्ध्वं भागं विरेचनैः ।
जयेदन्यतरद्वापि क्षीणस्य शमनैरसृक् ॥
अतिप्रवृत्तदोषस्य पूर्व लोहितपित्तिनः ।
अक्षीणबलमांसाग्ने कर्तव्यमपतर्पणम् ॥
लघितस्य ततो युक्त्या लघ्वन्नमवचारयेत् ।
पाचन तर्पणं लेहान्सर्पींपि त्रिविधानि च ॥
द्राक्षामधुककाश्मर्यसितायुक्त विरेचनम् ।
यष्टीमधुकयुक्त च सक्षौद्रं वमनं हितम् ॥
पयांसि शीतानि रसाश्च जांगलाः
सतीनयूषाश्च सशालिषष्टिकाः ।
पटोलशेलूपनिषण्णयूथिका-
पद्मातिमुक्ताकुरसिंधुवारजम् ॥
हित च शाकं घृतसंस्कृत यदा तथैव धात्रीफलदाडि-
-मान्वितम् । रसाश्च पारावतशशकूर्मजास्तथायवा-
ग्वोभिहिता धृतोत्तरा' ॥
वृद्धसग्रहात्-
आटरूषकमृद्वीकापथ्याक्वाथ' सशर्कर ।
मधुमिश्र' श्वासकासरक्तपित्तनिवारण' ॥

लोहित छर्दयेद्यस्तु बहुशो लोहितेक्षणः ।
लोहितोद्गारदर्शी च म्रियते रक्तपैत्तिकः ॥

इति श्रीतोमरवंशावतंसरिपुभूतभैरवश्रीवीरसिंहदेवविरचिते ग्रन्थे वीरसिंहावलोके ज्योतिःशास्त्रकर्मविपाकायुर्वेदमयोगो रक्तपित्ताधिकार' ।

---

अथ क्रमप्राप्तस्य क्षयरोगस्य ज्यातिःशास्त्राभिप्रायेण प्रकारमाह । तत्प्रतीकारं च । यदुक्तं जातके—

कुष्ठकंडूविकारैश्च क्षयरोगभगंदरैः ।
गजादिवाहनभय भवेच्चद्रगते बुधे ॥

अन्यच्च—

चन्द्रक्षेत्रे यदा चाद्रिर्जायते यस्य जन्मनि ।
स जातक्षयरोगी स्यात्कुष्ठादिभिरुपद्रुतः ॥

इति वचनात् ॥ चन्द्रसयोगिबुधजनितबाधोपशांतये पूर्वोक्तं जपहोमादिकं कुर्यात् तेनोपशाम्यति । व्याधिताारतम्ये तु वित्तशाठ्य न कुर्वीत सति विभवे । अथ क्षयरोगस्य कर्मविपाकाभिप्रायेण प्रयोग प्रतीकार च दर्शयति यथा पूर्वजन्मनि साक्षाद्ब्रह्महा क्षयरोगवान् भवति । अस्य प्रायश्चित्तम् । असाध्यरोगोपसृष्ट षडब्दं व्रतमाचरेत् । रोगतारतम्याभावात् प्रायश्चित्तभावो द्रष्टव्यः ॥ तथा मांसलोलुप' परवस्त्वभिलाषी परविषयभोगानसह-

पिष्टैस्तैः कार्षिकैर्द्रव्यैर्घृतप्रस्थं विपाचयेत् ॥
अजाक्षीरं तण्डुलांबु पृथग्दत्त्वा चतुर्गुणम् ॥
तत्पानं वमतां रक्तं नावनं नासिकागते ॥
कर्णाभ्यां यस्य गच्छेत्तु तस्य कर्णौ प्रपूरयेत् ।
चक्षुर्गते च रक्ते च पूरयेत्तेन चक्षुषी ॥
मेढ्रपायुगते चापि बस्तिकर्मसु योजयेत् ।
प्रवृत्त रोमकूपेभ्यस्त्वभ्यगेन जयेद्घृतम् ॥
इति दूर्वाद्यं घृतम् ।
घ्राणप्रवृत्ते जलमाशु देयं सशर्करं नासिकया पयो वा ॥
द्राक्षारसं क्षीरघृतं पिबेद्वा सशर्करं चेक्षुरसं पयो वा ।
कूष्माण्डकात्पलशतं सुस्विन्नं निष्कुलीकृतम् ॥
पचेत्तत्ते घृतप्रस्थे पात्रे ताम्रमये दृढे ।
यदा मधुनिभः पाकस्तदा खंडं शतं क्षिपेत् ॥
पिप्पलीशृंगबेराभ्यां द्वे पले जीरकस्य च ।
त्वगेलापत्रमरिच धान्यकानां पलार्द्धिकम् ॥
न्यसेच्चूर्णीकृतं तत्र दर्व्या तद्घट्टयेत्ततः ।
तत्पक्वं स्थापयेद्भाण्डे क्षौद्रं दत्त्वा घृतार्धकम् ॥
तद्यथाग्निबलं खादेद्रक्तपित्ती क्षती क्षयी ।
श्वासकासतमश्छर्दितृष्णाज्वरनिपीडितः ॥
वृष्यं पुनर्नवकरं बलवर्णप्रसादनम् ।
उरःसन्धानकरणं बृंहणं स्वरबोधनम् ।
अश्विभ्यां निर्मितं सिद्धं कूष्माण्डकरसायनम् ॥
इति रक्तपित्ते कूष्मांडकावलेहः ।

लोहित छर्दयेद्यस्तु बहुशो लोहितेक्षणः ।
लोहितोद्गारदर्शी च म्रियते रक्तपैत्तिकः ॥

इति श्रीतोमरवंशावतंसरिपुभूतभेरवश्रीवीरसिंहदेवविरचिते ग्रन्थे वीरसिंहावलोके ज्योतिःशास्त्रकर्मविपाकायुर्वेदप्रयोगो रक्तपित्ताधिकारः ।

---

अथ क्रमप्राप्तस्य क्षयरोगस्य ज्यातःशास्त्राभिप्रायेण प्रकारमाह । तत्प्रतीकारं च । यदुक्त जातके—

कुष्ठकंडूविकारैश्च क्षयरोगभगंदरैः ।
गजादिवाहनभय भवेच्चद्रगते बुधे ॥

अन्यच्च—

चन्द्रक्षेत्रे यदा चांद्रिर्जायते यस्य जन्मनि ।
स जातक्षयरोगी स्यात्कुष्ठादिभिरुपद्रुतः ॥

इति वचनात् ॥ चन्द्रसयोगिबुधजनितबाधोपशांतये पूर्वोक्त जपहोमादिकं कुर्यात् तेनोपशाम्यति । व्याधिता-रतम्ये तु वित्तशाठ्य न कुर्वीत सति विभवे । अथ क्षय-रोगस्य कर्मविपाकाभिप्रायेण प्रयोग प्रतीकारं च दर्श-यति यथा पूर्वजन्मनि साक्षाद्ब्रह्महा क्षयरोगवान् भवति । अस्य प्रायश्चित्तम् । असाध्यरोगोपसृष्टं पडब्दं व्रतमाच-रेत् । रोगतारतम्याभावात् प्रायश्चित्तभावो द्रष्टव्यः ॥ तथा मांसलोलुप परवस्त्वभिलाषी परविषयभोगानसह-

मानस्तत्पर स्वामिन हत्वा वा क्षयरोगी । तत्र च यवमध्य-पिपीलिकामध्यानि त्रीणि चान्द्रायणान्याचरेत् । कृच्छ्रा-द्यशक्तस्य धनिन अशीत्युत्तरशतं निष्कानां दानम् । अत्राप्यशक्तस्य तदर्धं तत्राप्यशक्तस्य तदर्धं ततोल्पेन न कुर्यात् ।' हीनकल्पं न कुर्वीत सति द्रव्ये फलप्रदम्' इति वचनात् । अत्राप्यशक्तस्य चान्द्रायण कुर्यात् । प्रतिदिनं चतुर्विंशतिब्राह्मणभोजनं कारयेत् । अत्राप्ये-तदंगत्वेन मुचामि त्वेत्यनेन सूक्तेन प्रत्यृच चरुघृताभ्यां होमं कुर्यात्। जुहुयादष्टोत्तरशतामिति। 'अनुक्तसख्या यत्र स्याच्छतमष्टोत्तर स्मृतम्' इति वचनात् रोगश्रूयस्त्वा-पेक्षया अयुतसख्यो जपो होमश्च भवति । तथा चोक्तम्

असाध्यव्याधिना ग्रस्त उग्रेण प्राणहारिणा ।
आतेरौद्रेण सूक्तेन प्रत्यृच वाग्यतः शुचि· ॥
पूर्वमाज्याहुतीर्हुत्वा उपस्थाय च शंकरम् ।
हवि·शेषेण वर्तेत एकोत्तरशतं तत ॥
पूर्णं मास जपेन्मृत्युरोगेभ्यश्च प्रमुच्यते ।
होमकर्मण्यशक्ताना जपस्तद्द्विगुणो भवेत् ॥

पद्मपुराणे—क्षये कारणान्तरमाह 'क्षयी स्यात्क्षेत्रहर-णात्' इति । क्रियान्तरमाह बौधायन ।

कारयेत्कदलीं दिव्या पर्णै सर्वत्र संयुताम् ।
फलपूगेन सयुक्ता सुवर्णस्य पलेन तु ॥

यथाविभवतः कुर्याद्वस्त्रेणावेष्टच सूत्रकैः।
ब्राह्मणान्भोजयेच्चापि भक्ष्यैर्नानाविधैस्तथा ॥
होमं च कारयेत्तत्र पूर्ववद्ब्राह्मणेन च।
हिरण्यगर्भ इत्यादितल्लिंगैः प्राकृतेन तु ॥
तस्मै तां कदलीं दद्याद्वस्त्रालंकारपूर्विकाम्।
पूजिताय दरिद्राय दांतस्थायात्मवेदिने ॥
धर्मज्ञायातिदान्ताय मंत्रेणानेन तां क्षयी।
हिरण्यगर्भ पुरुष परात्पर जगन्मय ॥
रंभादानेन भो देव क्षयं क्षपय मे प्रभो ॥

इति दानमंत्रः।

पुण्याहवाचनं कार्यं ब्राह्मणैर्वेदपारगैः।
शिष्टैरिष्टैर्बन्धुभिश्च सह भोजनमाचरेत् ॥

अथ राजयक्ष्माणि यः पुनर्मदगर्वाभ्यां वृथाभिमानी धर्मशास्त्राज्ञानी सभायां प्रायश्चित्तव्यवहारं करोति स राजयक्ष्मी भवति। प्रतिरूपं दद्यात् तदुक्तं ब्रह्माण्डपुराणे॥

धर्मशास्त्रानभिज्ञो यः प्रायश्चित्तं ददाति वै।
राजयक्ष्मा भवेत्तस्य रोगपीडातिदारुणा ॥
पूर्वोक्तेन विधानेन प्रदद्यात्प्रतिरूपकम्। इति।

राजयक्ष्माणि असाध्यरोगक्षयार्थं व्याधिप्रतिरूपदानं वा कुर्यात् ॥ तदुक्तं ब्रह्माण्डपुराणे ॥

ब्रह्मोवाच–सुवर्णरत्नरजतैर्यथाशक्त्यानुरूपतः।
कृत्वा च प्रतिमां व्याधेर्दद्याद्विप्राय यत्नतः ॥

शतेन वा तदर्धेन त्रिंशता निष्कलैरथवा ।
जातरूपमयं व्याधिं प्रतिरूपं तु कारयेत् ॥
निधाय पात्रे संपूर्णे तंडुलैः शतरूपकैः ।
अलंकृत्य च सौवर्णं रूपं चागुरुलेपनैः ॥
वासोयुगेन संवेष्ट्य हिरण्यवहुभूषणैः ।
अलंकृताय विप्राय दद्यान्मन्त्रमुदीरयेत् ॥
ये मा रोगाः प्रवाधन्ते देहस्थाः सततं तत ।
गृहीष्व प्रतिरूपेण तान्रोगान्द्विजसत्तम ॥
वाढमित्येव तद्रूपं गृह्णीयाद्व्याधिभिः सह ।
ततः स रोगी दाता च दीर्घायुष्यं प्रपद्यते ॥

यद्यपि पात्र इति सामान्येनाभिहितं तथापि कांस्यमये विज्ञातव्यम् ।'कांस्यं च यक्ष्मणे देयम्' इति वचनात् । अत्र प्रतिग्रहीतृमुखं नावलोकयेत् ॥ यदुक्तम् ।

दु प्रतिग्रहदग्धस्य विप्रस्य किल भारत ।
न पश्येद्वदनं पश्चान्न वै तमभिभाषयेत् ॥

इति महाभारतवचनात् । इति सर्वव्याधिप्रतिरूपदानविधिः ॥ उरःक्षतस्यापि क्षयरोगान्तःपातित्वात् व्याधिगुरुलघुभावेन क्षयरोगोक्तमेव कार्यम् । तद्वत्स्वरभेदस्यापि । अथ क्रमप्राप्तयोरुरःक्षतस्य च क्षयरोगस्य सनिदानं चिकित्सितमाह । रुग्विनिश्चयात् ।

वेगरोधात्क्षयाच्चैव साहसाद्विषमाशनात् ॥
त्रिदोषो जायते यक्ष्मा गदो हेतुचतुष्टयात् ॥

कफप्रधानैर्दोषैस्तु रुद्धेषु रसवर्त्मसु।
अतिव्यवायिनो वापि क्षीणे रेतस्यनंतराः॥
क्षीयन्ते धातवः सर्वे ततः शुष्यति मानवः॥
श्वासांगसादकफसंस्रवतालुशोष-
च्छर्द्यग्निसादमदपीनसकासनिद्राः॥
शोषे भविष्यति भवंति स चापि जंतुः
शुक्लेक्षणो भवति मांसपरो रिरंसुः।
स्वप्नेषु काकशुकशल्लकनीलकंठ-
गृध्रास्तथैव कपयः कृकलासकाश्च॥
तं वाहयन्ति स नदीर्विजलाश्च पश्ये-
च्छुष्कांस्तरून्पवनधूमदवार्दितांश्च॥
अंसपार्श्वाभितापश्च सतापः करपादयोः।
ज्वरः सर्वांगगश्चेति लक्षणं राजयक्ष्मणः॥
स्वरभेदोनिलाच्छूलं संकोचश्चांसपार्श्वयोः।
ज्वरो दाहोतिसारश्च पित्ताद्रक्तस्य चागमः॥
शिरस परिपूर्णत्वमभक्तच्छन्द एव च।
कास. कंठस्य च ध्वंसो विज्ञेयः कफकोपतः॥
एकादशभिरेभिर्वा षड्भिर्वापि समन्वितम्।
कासातीसारपार्श्वार्तिस्वरभेदारुचिज्वरैः॥
त्रिभिर्वा पीडित लिंगैर्ज्वरकासासृगामयैः।
जह्याच्छोपार्दितं जंतुमिच्छन् सुविमलं यशः॥
सर्वैरर्धैस्त्रिभिर्वापि लिंगैर्मांसबलक्षयैः।

युक्तो वर्ज्योश्चिकित्स्यस्तु सर्वरूपोऽयतोऽन्यथा।
महाशनं क्षीयमाणमतीसारनिपीडितम्।
शूनमुष्कोदरं चैव यक्ष्मिणं परिवर्जयेत्॥
पर दिनसहस्रं तु यदि जीवति मानवः।
सुभिषग्भिरुपक्रांतस्तरुणः शोषपीडितः॥
व्यवायशोषी शुक्रस्य क्षयलिंगैरुपद्रुतः।
पाडुदेहो यथापूर्वं क्षीयते चास्य धातवः॥
धनुष्याऽयस्यतोऽत्यर्थं भारमुद्वहतो गुरुम्।
युध्यमानस्य बलिभिः पतितो विषमोच्चतः।
वृषं हयं वा धावंत दम्यं चान्यं निगृह्णत॥
महानदीं वा तरतो हयैर्वा सह धावत।
तथान्यैः कर्मभि क्रूरैर्भृशमभ्याहतस्य च॥
विक्षते वक्षसि व्याधिर्बलवान्समुदीर्यते।
प्रपीड्यते ततः पार्श्वे शुष्यत्यगं प्रवेपते।
क्रमाद्वीर्यं बलं वर्णो रुचिरग्निश्च हीयते।
उरोरुक् शोणितच्छर्दि कासो वैशेषिक क्षते॥
क्षीणे सरक्तमूत्रत्व पार्श्वपृष्ठकटिग्रहः।
अल्पलिंगस्य दीप्ताग्नेः साध्यो बलवतो नवः॥

अथ वृंदसंग्रहात्–

शालिषष्टिकगोधूमयवमुद्गादय शुभाः।
मद्यानि जांगलाः पक्षिमृगा शस्ता विशुष्यतः॥
सपिप्पलीकं सयवं सकुलत्थं सनागरम्॥

दाडिमामलकोपेतं स्निग्धमाजं रस पिवेत् ॥
तेन षड्विनिवर्तन्ते विकाराः पीनसादयः ॥
द्रव्यतो द्विगुणं मांसं सर्वतोऽष्टगुणं जलम् ।
पादस्थं सस्कृत चाज्यं षडगो यूप उच्यते॥
धान्याकपिप्पलीविश्वदशमूलीजल पिवेत् ।
पार्श्वशूलश्वासकासपीनसादिनिवृत्तये ॥
अश्वगधामृताभीरुदशमूलीबलावृपाः ।
पुष्करातिविषे घ्नंति क्षयं क्षीररसायनाः ॥

अथ सुश्रुतात् —

घृतेन चाज्येन समाक्षिकेण तुरंगगंधातिलमापचूर्णम् । सिताश्वगंधामगधोद्भवानां कल्कं घृतक्षौद्रयुतं प्रलिह्यात्॥ क्षीरं पिवेद्वाप्यथ वाजिगंधा विपक्कमेव लभतेगपुष्टिम् । तदुत्थितं क्षीरघृतं सिताढ्यं प्रातः पिबेद्वापि पयोनुपानम्॥ उत्सादने वापि तुरंगगन्धा योज्या यवश्चैव पुनर्नवा च । कृत्स्ने वृपे तत्कुसुमैश्च सिद्धं सर्पिः पिबेत्क्षौद्रयुतं हिताशी ॥ यक्ष्माणमेतत्प्रवलं च कासं श्वासं च हन्यादपि पाण्डुतां च। सक्षुद्रसेगोश्वगजाव्यजानां क्वाथ· सिताश्चापि तथैव भागे ॥ मूर्वाहरिद्राखादिरद्रुमाणां क्षीरस्य भागस्त्वपरो घृतस्य । भागान्दशैतान्विपचेद्विधिज्ञो दत्त्वा त्रिवर्गं मधुरं च कृत्स्नम् । कटुत्रिकं चैव सभद्रदारु घृतोत्तमं यक्ष्मनिवारणाय । द्विपचमूलं वरुण करंजं भल्लातकं बिल्वपुनर्नवे च ॥ यवान्कुलत्थान्बदराणिभार्ङ्गीपाठां

युक्तो वर्ज्यश्चिकित्स्यस्तु सर्वरूपोऽयतोऽन्यथा ।
महाशनं क्षीयमाणमतीसारनिपीडितम् ।
शूनमुष्कोदरं चैव यक्ष्मिणं परिवर्जयेत् ॥
परं दिनसहस्रं तु यदि जीवति मानवः ।
सुभिषग्भिरुपक्रांतस्तरुणः शोषपीडितः ॥
व्यवायशोषी शुक्रस्य क्षयलिंगैरुपद्रुतः ।
पांडुदेहो यथापूर्वं क्षीयते चास्य धातवः ॥
धनुष्याऽयस्यतोऽत्यर्थं भारमुद्वहतो गुरुम् ।
युध्यमानस्य बलिभिः पतितो विषमोच्चतः ।
वृषं हयं वा धावंतं दम्यं चान्यं निगृह्णतः ॥
महानदीं वा तरतो हयैर्वा सह धावतः ।
तथान्यैः कर्मभिः क्रूरैर्भृशमभ्याहतस्य च ॥
विक्षते वक्षसि व्याधिर्बलवान्समुदीर्यते ।
प्रपीड्यते ततः पार्श्वे शुष्यत्यंग प्रवेपते ।
क्रमाद्वीर्यं बलं वर्णो रुचिरग्निश्च हीयते ।
उरोरुक् शोणितच्छर्दिः कासो वैशेषिकः क्षते ॥
क्षीणे सरक्तमूत्रत्व पार्श्वपृष्ठकटिग्रहः ।
अल्पलिंगस्य दीप्ताग्नेः साध्यो बलवतो नवः ॥

अथ वृंदसंग्रहात्-

शालिषष्टिकगोधूमयवमुद्गादयः शुभाः ।
मद्यानि जांगलाः पक्षिमृगाः शस्ता विशुष्यतः ॥
सपिप्पलीकं सयवं सकुलत्थं सनागरम् ॥

दाडिमामलकोपेतं स्निग्धमाजं रसं पिबेत् ॥
तेन पड्विनिवर्तन्ते विकाराः पीनसादयः ॥
द्रव्यतो द्विगुणं मांसं सर्वतोष्टगुण जलम् ।
पादस्थं संस्कृतं चाज्यं पडगो यूप उच्यते॥
धान्याकपिप्पलीविश्वदशमूलीजल पिबेत् ।
पार्श्वशूलश्वासकासपीनसादिनिवृत्तये ॥
अश्वगधामृताभीरुदशमूलीबलावृपाः ।
पुष्कराितविपे.घ्नंति क्षयं क्षीररसायनाः ॥

अथ सुश्रुतात् —

घृतेन चाज्येन समाक्षिकेण तुरंगगंधातिलमापचूर्णम् । सिताश्वगंधामगधोद्भवाना;कल्क घृतक्षौद्रयुतं प्रलिह्यात्॥ क्षीरं पिबेद्वाप्यथ वाजिगंधा विपक्वमेव लभतेगपुष्टिम् । तदुत्थितं क्षीरघृतं सिताढ्यं प्रातः पिबेद्वापि पयोनुपानम्॥ उत्सादने वापि तुरंगगन्धा योज्या यवश्चैव पुनर्नवा च । कृत्स्ने वृपे तत्कुसुमेश्च सिद्ध सर्पिः पिबेत्क्षौद्रयुतं हिताशी ॥ यक्ष्माणमेतत्प्रबलं च कासं श्वासं च हन्यादपि पांडुतां च। सक्वद्रसेगोश्वगजाव्यजाना क्वाथः सिताश्चापि तथैव भागे ॥ मूर्वाहरिद्राखदिरद्रुमाणां क्षीरस्य भागस्त्वपरो घृतस्य । भागान्दशैतान्विपचेद्विधिज्ञो दत्वा त्रिवर्गं मधुरं च कृत्स्नम् । कटुत्रिकं चैव सभद्रदारु घृतोत्तमं यक्ष्मनिवारणाय । द्विपंचमूलं वरुण करंजं भल्लातकं बिल्वपुनर्नवे च ॥ यवान्कुलत्थान्वदराणिभार्ङ्गीपाठां

हुताशसमहृक्छिदवम् ॥ कृत्वाकषायाविपचोद्धितस्य पञ्चाभि श्चपात्रैर्घृतपात्रमेकम् ॥ व्योषं महावृक्षपयोभयाक्षवव्यं सुराव्ह लवणोत्तम च। एतद्धि शोथ जठराणि चैव हन्यात्प्रमेहांश्च महानिलेन ॥ गोक्षाव्यजैर्भेणसरोरुजाजे' सक्षुद्रसक्षीररसक्षतोत्थे'। द्राक्षा वगन्धामगधासिताभि सिद्धं घृतयक्ष्मविकारहारि॥ एलाजमोदामलकाभयाक्षगायन्धरिष्टासनशालसारान्। विडगभल्लातकचित्रकोग्राकटुनिकांभोदसुराह्रजांश्च ॥ पक्त्वाजले तेन पचेच सर्पिरस्मिन् सुसिद्धे त्ववतारिते च । त्रिंशत्पलान्यत्र सितोपलायाद्त्वातुगाक्षीरिपलानि पञ्च ॥ प्रस्थेघृतस्य द्विगुणं च दद्यात्क्षौद्रंततोमथहृत विदध्यात्। पलंपल प्रातरत प्रलिह्यात्पश्चात्पिवेत्क्षीरमतद्भितश्च ॥ एतद्धि मेध्यं परम पवित्रं चक्षुष्यमायुष्यमथो यशस्यम् । यक्ष्माणमाशु व्यपहति चैतत्पाडामयं चैव भगदर च ॥ श्वास च हंति स्वरभेदकासहृत्प्लीहगुल्मग्रहणीगदांश्च । न चात्र किंचित्परिवर्जनीयं रसायनं चैतदुपास्यमानम् ॥ प्लीहोदरोक्तं विहितं च सर्पिस्त्रीण्येव चान्यानिहितानिचात्र। उपद्रवांश्च स्वरवैकृतादीञ्जयेद्यथास्वं प्रसमीक्ष्य शास्त्रम् ॥ अजाशकृन्मूत्रपयोघृतासृङ्मांसाढ्यानिप्रतिसेवमान । स्नानादिनानाविधिना जहाति मासादशेषं नियमेनशोपम् ॥ रसोनयोग विधिवत्क्षयार्त क्षीरेण वा नागबलाप्रयोगम् । सेवेत वा मागधिकाविधान तथोपयोगं जतुनोश्मजस्य ॥

शोकं स्त्रियं क्रोधमसूयतां च त्यजेदुदारान्विषयान् भजेत । वैद्यान्द्विजातीस्त्रिदशान् गुरूंश्च वाचश्चपुण्याः शृणुयाद्द्विजेभ्यः ॥

शस्यते गुल्मशूले च श्वासे कासे क्षये ज्वरे ।
कर्पूरमहिफेनं च कस्तूरी जातिपत्रिका ॥
नागवल्लीरसेनैव गुटिका मेहनाशिनी ।
वल्लप्रमाणं तां भक्षेत् ततः पीत्वा शृतं पयः ॥
नरश्चटकवद्गच्छेच्छतदारांश्च द्रावयेत् ॥
जीवकर्षभकौ वीरा जीवंती नागर सटी ।
पर्ण्यश्चतस्रो मेदे द्वे काकोल्यौ द्वे निदिग्धिके ॥
पुनर्नवे द्वे मधुका चात्मगुप्ता शतावरी ।
ऋद्धी परूषक भार्ङ्गी मृद्वीका बृहती तथा ॥
शृगाटकी त्वामलकी वयस्था पिप्पली बला ।
बदराक्षोडखर्जूरवादामान्यूपकाणि च ॥
फलानि चैवमन्यानि कल्कीकुर्वीत कार्षिकैः ।
धात्रीरस.विदारीक्षुछागमांसरसं पयः ॥
दत्वा प्रस्थोन्मितान्भागान्घृतप्रस्थं विपाचयेत ।
प्रस्थार्धं मधुनः शीते शर्करार्द्धतुलां तथा ॥
पलार्द्धकं च मरिचं त्वगेला पत्रकेशरम् ।
विनीय चूर्णितं तस्माल्लिह्यान्मात्रां सदा नरः ।
अमृतप्राशमित्येतन्नराणाममृतं यथा ।
सुधामृतरसप्रस्थं क्षीरमांसरसाशिनम् ॥

स्त्रीप्रसक्तान्कृशान्वर्णस्वरहीनांश्च बृंहयेत् ।
कासहिक्काज्वरश्वासतृष्णादाहास्रपित्तनुत् ॥
पुत्रद छर्दिमूर्च्छाघ्नं योनिमूत्रामयापहम् ।
इति क्षतक्षीणे अमृतप्राशोवलेहः । चिकित्सा कलिकात -
त्रीन्वारान्प्रथम शिलाजतुजले भाव्यं भवेत्रैफले
त्रिः क्वाथे दशमूलजे तदनु वा छिन्नोद्भवाया रसे ॥
वात्यालकथने पटोलसलिले यष्टीकषाये युते
गोमूत्रेण तथा पयस्यथ गजामेषां कषाये ततः ॥
द्राक्षाभीरुविदारिकाद्वयपृथक्पर्णीस्थिरा पौष्करैः
पाठाकौटजकर्कटाख्यकटुकारास्नांबुदालंबुसैः ॥
दंतीचित्रकचव्यवारणकणावीराष्टवर्गौषधे-
द्रोणेभश्वरणस्थिते पलमितैरेभिः शृतैर्भावयेत् ।
धात्रीमेषविषाणिकात्रिकटुकैरेभिः पृथक्पंचभि-
र्द्रव्यैश्च द्विपलोन्मितैरपि पलं चूर्णाद्विदारीभवात् ।
तालीसं कुडवं चतुष्पलमधु प्रक्षिप्यते सर्पिष-
स्तैलस्य द्विपलं पलद्याकमथ क्षौद्रं भिषग्योजयेत् ॥
तुल्य पलैः षोडशभिः सिताया-
स्त्वक्क्षीरिकापत्रककेशरैश्च ।
बिल्वांशकैस्त्वक्त्रुटिसंप्रयुक्तै-
रित्यक्षमात्रा गुटिका प्रकल्प्या ॥
तासामेकतमां प्रयुज्य विधिवत्प्रातः पुमान्भोजयेत्

प्राग्वा मुद्गदलाम्बुजांगलरसं शीतं शृतं वा जलम् ।
माध्वीकं मदिरामगुर्वशनभुक्पीत्वा पयो वा गवां
प्राप्नोत्यंगमनंगवस्तुभगतासपन्नमानदकृत् ॥
शोफग्रन्थ्यवमन्थवेपथुवमीपांड्वामयश्लीपद-
प्लीहार्शः प्रदरप्रमेहपिटिकामेहाश्मरीशर्कराः ।
हृद्रोगार्बुदवृद्धिविद्रधियकृद्योन्यामयान्स्रानिला-
नूरुस्तम्भभगंदरज्वररुजस्तूनीप्रतूनीतृप. ॥
घातासृक्प्रबलं प्रवृद्धमुदरं कुष्ठं किलासं कृमीन्
कासश्वासमुर.क्षतक्षयमसृक्पित्तं सपानात्ययम् ।
उन्मादं मदमप्यपस्मृतिमतिस्थौल्यं कृशत्वं तनो-
रालस्यं सहलीमकं च शमयेन्मूत्रस्य कृच्छ्राणि च ॥
झटिति जरया सर्वैश्वेतैरकालजराकृतै-
र्वृतमलिकलाकारैरेभिः शिरश्च शिरोरुहैः ।
बलवदतिभं व्यस्तातंकं वपुश्च समुद्वहन्
प्रभवति शतं स्त्रीणां गंतुं जनो जनवल्लभः ॥
स्तिमितमतिरप्यज्ञानांध सदस्यपटुः पुमान्
सकृदपि दयाज्ञानोपेत. श्रुतिस्मृतिमान्भवेत् ।
व्रजति च यथा युक्तो योगी शिवस्य समीपतां
शिवगुटिकया कस्तामेनां करोति न मानवः ॥

इति शिवगुटिका ।

फलत्रिकक्वाथविशुद्धमादौ
शुद्धं गुडूच्या दशमूलशुद्धम् ।

स्थिरादिकाकोलियुगादिसिद्धं
शिलाजतु स्यात्क्षयिषु प्रशस्तम् ॥
तथाह चरकः –
हेमाद्या सूर्यसंतापात्स्रवंति गिरिधातवः ।
जत्वाभं मृदुमृत्स्नाभं तद्वदन्ति शिलाजतु ॥
शृंगीत्वामलकीफलत्रिकनलाच्छिन्नाविदारीसटी-
जीवंतीदशमूलचदनघनैर्नीलोत्पलैलावृषे ॥
मृद्वीकाष्टकवर्गपुष्करयुतैः सार्धं पृथक्पालिकैः
पङ्द्रोणेन शतानि पंचविपचेद्धात्रीफलानामतः॥
उद्धृत्यामलकानि तैलघृतयोः षष्टिश्च पङ्भिः पलैः
भृष्टान्यर्धतुलां निधाय विधिवन्मत्स्यण्डिकायाः पचेत् ॥
शीतेपण्मधुना पलानि कुडवोवाश्वश्चतुर्जातकं
सुष्टिर्मागधिकापलद्वयमयं प्राशः स्मृतश्च्यावनः ॥
न शोपः साफल्यं व्रजति वपुषि क्षीयमाणेपि जंतो-
र्न मूर्च्छा नो छर्दिस्तदपि च न च श्वासकासादयश्च ॥
न चालक्ष्मीर्विघ्नं क्वचिदपि न व्यापदः संभवंति
प्रयोगादेतस्मान्मनसि नवधियो विभ्रति भ्रांतिमंतः ॥
प्रसरति पुरः प्रज्ञाज्ञेये जगज्जडतां व्रजे-
द्विदधाति पदं नैवाकस्माद्वलीपलितानि च ।
भयति न भयं रुग्भ्यः काये न चापदमाप्नुयात्
च्यवनरचितप्राशस्वादादपत्यशतं भवेत् ॥
इति च्यवनप्राशः । तत्रांतरात् ॥

पिप्पलीलोध्रमरिचं पाठाधात्र्येलवालुकम्।
चव्यचित्रकजंतुघ्नक्रमुकोशीरचन्दनैः॥
मुस्ताप्रियंगुलवलीहरिद्रामिसिपेलवैः।
पत्रत्वक्कुष्ठतगरैर्नागकेशरसंयुतैः॥
भागैः स्यादर्धपलिकैर्द्राक्षापाष्टिपलं क्षिपेत्।
पलानि दश धातक्या गुडस्य च शतत्रयम्॥
तोयमानाश्चतुःपष्टिर्भवत्येव सुखावहम्।
ग्रहणीपांडुरोगार्शः कार्श्यगुल्मोदरापहः॥
पिप्पल्यादिरिरिष्टोयं क्षयरोगविनाशन।

इति यक्ष्माणि पिप्पल्यरिष्ट॥

मृद्वीकायाः शतार्धं तु द्विद्रोणेऽपां विपाचयेत्।
चतुर्थशेषे तस्मिंस्तु पूतशीते प्रदापयेत्॥
गुडस्य द्विशतं दत्वा तत्सर्वं घृतभाजने।
विडंगं फलिनी कृष्णा त्वगेलापत्रकेशरम्॥
मरीचं तु तथा चूर्णं सम्यक्कृत्वा विचक्षणः।
क्षिपेच्च पलिकैर्भागैर्घटनीयं समततः॥
ततो यथाबलं पीत्वा कासश्वासगलामयम्।
हंति यक्ष्माणमत्युग्रमुरःसधानकारकम्॥
मृद्वीकासव इत्येप ब्रह्मणा विहितः पुरा।

इति क्षये मृद्वीकासवो हारीतात्।

द्राक्षायाः संमितं प्रस्थं मधुकस्य पलाष्टकम्।
पचेत्तोयामृके शुद्धे पादशेषेण तेन च।

पलिके मधुकाद्राक्षे पिष्टे कृष्णापलद्वयम् ।
प्रदाय सर्पिषः प्रस्थं चेत्क्षीरं च चतुर्गुणम् ।
सिद्धे शीते पलान्यष्टौ शर्करायाश्च दापयेत् ॥
एतद्राक्षाघृतं नाम क्षीणक्षतसुखावहम् ।
वातपित्तज्वरश्वासविस्फोटकहलीमकान् ॥
प्रदरं रक्तपित्तं च हन्यान्मांसबलप्रदम् ॥

शोषे द्राक्षादिघृतं वृंदसंग्रहात्-

छागमांसतुलां गृह्य साधयेदुल्बणेऽम्भसि ।
पादशेषेण तेनैव सर्पिः प्रस्थं विपाचयेत् ॥
ऋद्धिर्वृद्धिश्च मेदे द्वे तथा च जीवकर्षभौ ।
काकोलीक्षीरकाकोली कल्कैः पृथक्पलोन्मितैः ॥
सम्यक्सिद्धेवतार्याथ शीते तस्मिन्प्रदापयेत् ॥
शर्करायाः पलान्यष्टौ मधुन कुडवं क्षिपेत् ॥
पलंपलं पिबेत्प्रातर्यक्ष्माणं हंति दुस्तरम् ।
बल्यं मांसकरं वृष्यमग्निसंदीपकं परम् ॥

इति छागलाद्यं घृतम् ।

मलायत्तं बलं पुंसां शुक्रायत्तं च जीवितम् ।
तस्माद्यत्नेन संरक्षेद्यक्ष्मिणो मलरेतसी ॥

इति श्रीतोमरवंशावतंसरिपुभूतभैरव श्रीवीरसिंहदेवविरचिते ग्रन्थे वीरसिंहावलोके ज्योतिःशास्त्रकर्मविपाकायुर्वेदोक्तप्रयोगो राजयक्ष्माधिकारः ॥

अथ क्रमप्राप्तस्य कासरोगस्य कफश्वासस्य च जातकाभिप्रायेण हेतुमाह तत्प्रतीकारं च । यदुक्तं जातके–

सूर्येकुलीरयाते बुधेन दृष्टे विगतनेत्रः ।
कफमारुतरोगार्त्तः परस्वहारी विलोममतिचेष्ट ॥

कर्कातस्थितबुधदृष्टसूर्यजनितकासश्वासकफरोगप्रतीकारमाह । सौरमंत्रजपहोमदानादिक पूर्ववत्कार्यम् ॥

अथ कासश्वासकफरोगस्य कर्मविपाकहेतुमाह तत्प्रतीकारं च । यदुक्तम् उपकारिणोप्रत्युपकर्त्ता अपकर्त्ता च श्वासी कासी कफवान् जायते । दुःखोष्णज्वरवातपित्तं च । यदुक्तमुमामहेश्वरसंवादे

कृतघ्नो जायते मर्त्यः कफवान् श्वासकासवान् ।
उष्णज्वरी च नित्य हि पित्तरोगसमन्वितः ॥ इति ।

तच्छांतये पिपीलिकामध्यानि यवमध्यानि वा त्रीणि चांद्रायणानि कुर्यात् यथेप्सित पंचाशद्ब्राह्मणान् भोजयेत् । आग्निं दूतमिति सूक्तेन चरुघृताभ्यामष्टोत्तरायुत जुहुयात् ।

ताद्विष्णोरिति सूक्तेन जपं कुर्याद्द्विजोत्तमः ।
पूजयेद्भोजयेद्द्यात्तन्मना नान्यमानसः ॥

अत्रैव कारणांतरं विधानांतरमभिधीयते । लवणमधुकृष्णाजिनमहादानादिकुरुक्षेत्रादिविशिष्टदेशेषु ग्रहणादिविशिष्टकालेषु निषिद्धदातृभ्यः प्रतिगृह्णाति । स्वयमपात्रीभूतो जन्मांतरे पामाकण्डूपीड्यमानः श्वासी कासी

कृमिकुक्षिश्च भवति । तदुपशांतये महिषीं यथोक्तविधानां दद्यात् । वित्तशाठ्यं विवर्जयेत् । यत—

काम्याय दीयते दानं तत्समग्रं सुखावहम् ।
असमग्रं तु दोषाय भवतीह परत्र च ॥

पुरुषसूक्तं सहस्रनामस्तोत्रम् वद्यान्नित्यं जपेत् । अष्टोत्तरायुतं चरुघृताभ्यां जुहुयात् पंचाशद्ब्राह्मणान् भोजयेत् रक्तवासांसि दद्यात् । तदुक्तं महाभारते—

हिरण्यं रक्तवासांसि पंचाशद्द्विजभोजनम् ।
सहस्रकलशस्नानं कुर्याद्रोगस्य शांतये ॥

एतदुक्ताशक्तौ पंचाशद्ब्राह्मणभोजनम् । नामत्रयमष्टोत्तरायुतत्रयं जपेत् । अत्र नामत्रयमच्युतानंतगोविन्देति । अत्रापि ब्राह्मणभोजन सहस्रकलशस्नानं वासुदेवप्रीतये हिरण्यं च दद्यात् । अथवा श्वासकासी कृमिकुक्षिश्च यो भवति ।

श्वासकासयुतो मर्त्यो वरुणं प्रणतो भवेत् ।
ध्वजं पाशं पलैकेन कुर्यात्तु रजतेन वा ॥
पलार्धेनाथवा शुद्धस्फटिकोपममादृत· ।
रत्नैर्मरकतैः सम्यग्बद्धमगेषु सर्वत· ॥
कुंभ च स्थापयेत्तत्र तिलानां द्रोणपंचके ।
कुंभस्योपरि संस्थाप्य ध्वजपाशौ सुशोभनैः ॥
सहिरण्य द्वय तत्र ब्राह्मणाय निवेदयेत् ।
वस्त्रेणावेष्ट्य

श्रुतवृत्तसमज्ञाय श्रोत्रियाय कुटुंबिने ।
वरुणस्य तथा वायोः प्रीत्यर्थं विनिवेदयेत् ॥
नमः पाशभृते तुभ्यं नमो द्विजवराय ते ।
जलाधिपतये तुभ्य वायोर्वापि प्रियाय च ॥
युवयोः प्रीतये दत्तौ ध्वजपाशौ सुराजतौ ।
श्वासकासौ हरेतां मे प्रीतौ सर्वजनाश्रयौ ॥
एवं कृत्वा श्वासकासी नीरोगस्तत्क्षणाद्भवेत् ।
इति श्वासकासकर्मविपाकविधिः ॥

अथ ज्योतिःशास्त्राभिप्रायेण गद्गदत्वप्रयोगमाह । वृश्चिकांशस्थितक्षीणचंद्रजनितगद्गदत्वदोषोपशमनाय प्रागुक्त चंद्रपूजाविधान विदध्यात् । अथ गद्गदत्वकर्मविपाकमाह । तत्प्रतीकारं च वायुपुराणे ।

वाग्विरोधं गुरोः कृत्वा भवेद्गद्गदवान्नरः ॥
तस्य वक्ष्ये प्रतीकारं दानेन ऋषिभाषितम् ।
पलेनाथ तदर्धेन तदर्धार्धेन वा पुनः ॥
सरस्वतीप्रतिमां कुर्याद्भुजानां च चतुष्टयम् ।
वरदं चाक्षसूत्रं च बिभ्रतीं दक्षिणे करे ॥
पुस्तकं चाभयं वामे दधानां हंसवाहनाम् ।
अतिशुभ्रेण रौप्येण कूटस्वर्णेन वा भवेत् ॥
आसनं च प्रकुर्वीत सौवर्णं पद्ममुत्तमम् ।
तस्योपरि च सवेश्य देवीं वागीश्वरीं पराम् ॥
[illegible]समायुक्तां शुक्लवस्त्रेण संयुताम् ।

वागीश्वरेण मंत्रेण पूजयेत्पीततण्डुलैः ॥
श्वेतपुष्पैः श्वेतगंधैः सत्कृत्य विधिपूर्वकम् ।
ब्राह्मणः सर्वशास्त्रज्ञः कुशलः सर्वसमतः ॥
मंत्रवादप्रवीणश्च तेन होमं च कारयेत् ।
पायसं जुहुयादष्टशतशालिमयं तथा ॥
जुहुयात्समिधश्चापि तथाज्यं च तिलानपि ॥
सरस्वतिप्रदेमिव इति वा मंत्र इष्यते ॥
कृतेधिवासने नाम आचार्याय निवेदयेत् ।
मंत्रेणानेन विधिवत्प्राङ्मुखाय ह्युदङ्मुखः ॥
संपूज्य ब्राह्मणं सम्यक् वस्त्रालंकारपूर्वकम् ।
या वक्त्रे ब्रह्मणो देवी या सा वागीश्वरी परा ॥
ब्रह्मविष्णुशिवैश्चान्यैः पूजिता सर्ववंदिता ।
तुष्टा भवतु दानेन समिदादिहुतैरपि ॥
नैवेद्य पायसं दद्याद्देयं च ब्राह्मणे तथा ।
सरस्वतिप्रदेमिव मंत्रः सर्वत्र समतः ॥
तस्मै हुतवते दद्यात्तां घटां पूजकाय तु ।
मंत्रेणानेन विधिवद्रोगी पूर्वमुखः शुचिः ॥
उदङ्मुखोपविष्टाय सतोयामथ भक्तितः ।
गुरोरवज्ञया यन्मे स्वाध्यायाध्ययनं कृतम् ॥
सरस्वती जगन्माता जगज्जाड्यापहारिणी ।
साक्षाद्ब्रह्मकलत्रं त्वं विष्णुरुद्रादिभिः स्तुता ॥
तन्ममाध्यापनं देहि जाड्यं हर वरानने ।

घंटादानेन तुष्टा त्व दत्तेनानेन वाक्परा ॥
वाग्विरोधं गुरोः कृत्वा यन्मे गद्गदभाषितम् ।
तत्सर्वं क्षपय क्षिप्रं ब्राह्मी त्वं लोकपावनी ॥
इति दानमंत्रः ॥

अनुज्ञाय ब्राह्मणं तं स्वयं भुंजति मानवः ।

इति गद्गदत्वहरसरस्वतीदानविधिः ॥ अथ क्रमप्राप्तस्य कासस्य निदानं सचिकित्सितमाह रुग्विनिश्चयात् ॥
धूमोपघाताद्रजसस्तथैव व्यायामरूक्षान्ननिषेवणाच्च ।
विमार्गगत्वादतिभोजनस्य वेगावरोधात्क्षवथोस्तथैव ॥
प्राणोह्युदानानुगतः प्रदुष्टः सभिन्नकांस्यस्वनतुल्यघोषः।
निरेतिवक्रात्सहसासदोषो मनीषिभिः कासइतिप्रदिष्टः ॥
पंच कासाः स्मृता वातपित्तश्लेष्मक्षतक्षयैः ।
क्षयायोपेक्षिता सर्वे बलिनश्च यथोत्तरम् ॥
पूर्वरूपं भवेत्तेषां शूकपूर्णगलास्यता ।
कंठे कंडूश्च भोज्यानामवरोधश्च जायते ॥
हृच्छंखमूर्द्धोदरपार्श्वशूली क्षीणानन' क्षीणबलस्वरोजाः
प्रसक्तवेगश्च समीरणेन भिन्नस्वरः कासति शुष्कमेव ॥
उरोविदाहज्वरवक्रशोषैरभ्यर्दितास्तिक्तमुखस्तृषार्तं ।
पित्तेन पीतानि वमेत्कटूनि कासेत्सपांडुः परिदह्यमानः॥
प्रलिप्यमानेन मुखेन सीदन् शिरोरुजार्तःकफपूर्णदेहः ।
सुभक्तरुग्गौरवसादयुक्तः कासो भृश सांद्रकफः सफेन· ॥

बृद्संग्रहात्-
पंचमूलीकृतः क्वाथः पिप्पलीचूर्णसंयुतः ।
रसोनमश्नतो नित्य वातकासमुदास्यति ॥
भार्ङ्गीद्राक्षाशठीशृंगीपिप्पलीविश्वभेषजम् ।
गुडतैलयुतो लेह्यो हितो मारुतकासिनाम् ॥
बला द्विबृहतीवासाद्राक्षाभिः क्वथित जलम् ।
पित्तकासापहं पेयं शर्करामधुयोजितम् ॥
पुष्कर कट्फलं भार्ङ्गीविश्वपिप्पलिसाधितम् ।
पीत्वा क्वाथं कफोद्रेके कासे श्वासे च हृद्ग्रहे ॥
घृतं व्याघ्रीकषायेण भार्ङ्गीकल्के विपाचयेत् ।
चतुर्गुणेन तोयेन तत्परं वातकासजित् ॥
चूर्ण तु पद्मबीजाना मधुना संप्रयोजितम् ।
पित्तकासार्दितो लिह्यात्स्वस्थतां लभते क्षणात् ।
कर्षं कर्षार्धपलं पलद्वयं स्यात्ततोर्धकर्षश्च ।
मरिचस्य पिप्पलीना दाडिमगुडयावशूकानाम् ॥
सर्वौषधैरसाध्या ये कासा॰ सर्ववैद्यनिर्मुक्ता ।
पूयमसृक्छर्दयतां तेषामिदमौषधं परमम् ॥
इति मरिचादिगुटिका ।
ग्रस्थंविभीतकानाममस्थि संस्वेदयेद्गजामूत्रे ।
लेहवदयमवलेह्यो मधुसहितः श्वासकासहरः ॥
इति विभीतकावलेह्यो मतिमुकुरात् ॥
य पिबेद्बृहतीक्वाथं कणाचूर्णावचूर्णितम् ।

प्रकाशो नात्र कासानां मासानामिव दुर्दिने ॥
दशमूलीस्वयंगुप्ताशंखपुष्पीशठीबलाः ॥
हस्तिपिप्पल्यपामार्गापिप्पलीमूलचित्रकम् ।
भार्ङ्गीपुष्करमूलं च द्विपलांशान्यथाढकम् ॥
हरीतकीशतं चैकं जले पंचाढके पचेत् ॥
यवैः स्विन्नैः कषायं तु पूतं दत्वाभयाशतम् ॥
पचेद्गुडतुलां दत्वा कुडवं च पृथक्पृथक् ।
तैलात्सपिप्पलीचूर्णात्सिद्धशीते चमाक्षिकात् ॥
लिह्यात्तचामये नित्यमत खादेद्रसायनम् ॥
तद्वलीपलितं हंति वर्णायुर्बलवर्धनम् ॥
पंचकासान्क्षयं श्वासं हिक्का च विषमज्वरम् ।
हन्यात्तथार्शोग्रहणीहृद्रोगारुचिपीनसम् ॥
अगस्तिविहितं धन्यमिदं श्रेष्ठं रसायनम् ।

इत्यगस्तिहरीतक्यवलेहः ॥

इति श्रीतोमरवंशावतंसरिपुभूतभैरवश्रीवीरसिंहदेवविरचिते वीरसिंहावलोके ज्योतिश्शास्त्रकर्मविपाकायुर्वेदप्रयोगे कासाधिकारः ॥

---

अथ हिक्कारोगस्य श्वासकासांतर्भावात्तद्वदेव ग्रहपूजाविधानं कर्मविपाकप्रयोगं दर्शयति । यः पुनः स्नात्वा अजुहुयादहुत्वा वा ब्राह्मणो भुङ्क्ते स हिक्कारोगी भवेत स त्रीणि चांद्रायणानि सातिकृच्छ्राणि चरेत् ।

तामग्निवर्णामित्यादिसूक्तं जपेत् ससुवर्णमन्नदानं च।
चिकित्सितमाह। निदान च रुग्विनिश्चयात्।

मुहुर्मुहुर्वायुरुदेति सस्वनो
यकृत्प्लीहांत्राणि मुखादिवाक्षिपन्।
सघोषवानाशु हिनस्ति यद्गला-
त्ततस्तु हिक्केत्यभिधीयते बुधे॥
अन्नजां यमलां क्षुद्रां गंभीरां महतीं तथा॥
वायुः कफेनानुगतः पंच हिक्काः करोति हि।

अथ सुश्रुतात्-

यष्ट्याह्व वा माक्षिकेणावलीढ·
पिप्पल्यो वा शर्कराचूर्णयुक्ताः।
सर्पि· कोष्णं क्षीरमिक्षो रसो वा
नातिक्षीणे स्रंसन छर्दनं वा॥
नारीपय·पिष्टमशुकुचंदनं
घृतं सुखोष्णं च ससैधवं तथा।
चूर्णीकृतं सैधवमंबुनाथ वा
निहति हिक्कां च हितं च नस्यतः॥
युंज्याद्धूपं शालनिर्यासजं वा
नैपाल वा गोविषाणोद्भवं वा।
सर्पि· स्निग्धैश्चर्मवालै· कृत वा
हिक्कास्थाने स्वेदनं वापि कार्यम्॥
क्षौद्रोपेतं गैरिकं कांचनाख्यं

लिह्याद्भस्म ग्राम्यसत्त्वास्थिजं वा ।
तद्वच्छाविन्मेषगोशल्यकानां
रोमाण्यंतर्धूमदग्धानि चात्र ॥
मध्वाज्याक्तं वार्हिपत्रप्रसूतमेवं भस्मौदुंवरं तैंदुकं वा ।
स्वर्जक्षारं बीजपूराद्रसेनक्षौद्रोपेत हन्तिलीढ्वासहिक्काम्
सर्पिस्स्निग्धा घ्नति हिक्कां यवाग्व
कोष्णाग्रासाः पायसं वा सुखोष्णम् ।
शुंठीतोये साधित क्षीरमाजं
तद्वत्पीतं शर्करासंयुत वा ॥
आतृप्तेर्वा सेव्यमान निहन्याद् ।
घ्रात्वा हिक्कामाशु मूत्र स्वजाव्योः ।
सपूतिकीट लशुनोग्रगंधा-
हिंग्वञ्जमाचूर्ण्य सुभावित तत् ॥
क्षौद्र सितां वा रणकेसर च पिबेद्रसेनेक्षुमधूकजेन ।
पिबेत्पलवालवणोत्तमस्यद्वाभ्यांपलाभ्यांहविषःसमग्राम् ॥
हरीतकीं कोष्णजलानुपानां
पिबेद्धृत क्षारमधुप्रपन्नम् ।
रसं कपित्थान् मधुपिप्पलीभ्यां
पिचुप्रमाणं प्रपिबेत्सुखाय ॥
कृष्णां सितां चामलकं च लीढंस शृंगवेरं मधुना च युक्तम् । कोलास्थिमज्जांजनलाजचूर्णं हिक्कांनिहन्यान्मधुना वलीढम् ॥

पाटलाया फल पुष्प गैरिकं कटुरोहिणी ।
खर्जूरमधुमागध्यः कासीस दधि नाम च ॥
चत्वारो यूपयोगा' स्यु प्रतिपादं प्रदर्शिता· ।
मधुद्वितीया' कर्तव्यास्ते हिक्कासु निजानता ॥
कपोतपारावतलावशल्यक
श्वदंष्ट्रगोधा वृषदंशजान् रसान् ।
पिबेत्फलाम्लानहिमान्ससैंधवान्
स्निग्धांस्तथैनर्च्यमृगाद्विजोद्भवान् ॥

विरेचन पथ्यतम ससैंधव घृत सुखोष्णं च सितोपला-युतम् । सदागतावूर्ध्वगतेनुवासन वदंति केचिच्च हिताय हिक्किनाम् ॥

इति श्रीतोमरवंशावतंसारिपुभूतभिरवश्रीवीरसिंहदेवविरचिते
वीरसिंहावलोके ज्योतिश्शास्त्रकर्मविपाकायुर्वेदप्रयोगे
हिक्काधिकारः ॥

अथ क्रमप्राप्तस्य श्वासरोगस्य सनिदान चिकित्सि-तमाह यथाह सुश्रुताचार्य ।

यैरेव कारणैर्हिक्का बहुभि सप्रवर्तते ।
तैरेव कारणै श्वासो घोरो भवति देहिनाम् ॥
विहाय प्रकृतिं वायुः प्राणोथ कफसयुत ।
श्वासयत्यूर्ध्वगो भूत्वा त श्वास परिचक्षते ॥
क्षुद्रकस्तमकश्छिन्नो महानूर्ध्वश्च पचम ।
भिद्यते स महाव्याधि श्वास एको विशेषत' ॥
प्राग्रूप तस्य हृत्पीडा भक्तद्वेषोऽरति' परा ।

आनाहः पार्श्वयोः शूलो वैरस्यं वदनस्य च ॥

बृंदसंग्रहात्—

स्नेहवस्तिमृते केचिदूर्ध्वं वाधश्च शोधनम् ।
मृदुप्राणवतां श्रेष्ठ श्वासिनां निर्दिशंति हि ॥
कुलस्य नागरव्याघ्रिवासाभिः क्वथितं जलम् ।
पीतं पौष्करसंयुक्तं श्वासकासनिवारणम् ॥
दशमूलस्य वा क्वाथः पुष्करेणावचूर्णितः ।
श्वासकासप्रशमनः पार्श्वशूलविनाशन ॥
देवदारुवचाव्याघ्रीविश्वकट्फलपौष्करै ।
कृतः क्वाथो जयत्याशु श्वासकासानशेषतः ॥
भल्लातकमधुपर्णीपथ्यादशमूलनागरक्वाथः ।
तमके कफप्रधाने शस्तः श्वासे च मारुतजे ॥
भार्ङ्गीजटापलशतं सलिलार्मणाभ्यां
युक्तं च मूलतुलया सहितं विपाच्य ।
पादास्थिते तु शतमत्र हरीतकीनां
पक्तव्यमुज्ज्वलगुडस्य शतेन सार्धम् ॥
उत्तार्य तत्र शिशिरे मधुनः पलानि
चत्वारि च द्विगुणितानि पलत्रयं च ।
व्योषत्रुटित्वगिभकेसरपत्रकाणा-
मेषां पलं खलु निधेयमथोपयुंज्यात् ॥
श्वासं सकासमपि शोपमथातिहिक्का-
मेकाहिकं ज्वरमथोत्कटपीनसं च ।

हन्याद्रसायनमिदं हि पुरन्दरस्य
प्रोक्त सहस्रकरपुत्रभिषग्वराभ्याम् ॥

इति भार्ङ्गीहरीतकयवलेहः ।

यत्किंचित्फलवातघ्नमुष्ण वातानुलोमनम् ।
भेषजं पानमन्नं वा हिक्काश्वासेषु तद्धितम् ।

इति श्रीतोमरवंशावतंसीरवुमृतभैरवश्रीवीरसिंहदेवविरचिते वीरसिंहावलोके ज्योतिश्शास्त्रे कर्मविपाकायुर्वेदोक्तप्रयोगे श्वासाधिकारः ॥

अथ क्रमप्राप्तस्य स्वरभेदस्य निदान चिकित्सि रुग्विनिश्चयात् ॥

अत्युच्चभाषणविषाध्ययनाभिघात-
सदूषणैः प्रकुपिता पवनादयश्च ।
स्रोतस्सु ते स्वरवहेषु गताः प्रतिष्ठा
हन्युः स्वरं भवति चापि हि षड्विध स ॥

वृन्दसंग्रहात्—

आद्ये कोष्णजल पेयं जग्ध्वा घृतगुडौदनम्
क्षीरानुपानं पित्तोत्थे पिबेत्सर्पिरतंद्रितः ।
पिप्पली पिप्पलीमूलं मरिच विश्वभेषजम् ।
पिबेन्मूत्रेण मतिमान् पित्तजे स्वरसंक्षये ।
स्वरोपघाते मेदोजे कफांतो विधिरिष्यते ॥
क्षयजे सर्वजे वापि प्रत्याख्यायाचरेत्क्रियाम्
चव्याम्लवेतसकटत्रिकातितिंडीक-

तालीसजीरकतुगादहनैः समांशैः ।
चूर्णं गुडप्रमृदितं त्रिसुगंधियुक्त
वैस्वर्यपीनसकफारुचिषु प्रशस्तम् ॥
बदरीपत्रकल्कं वा घृतभ्रष्टं ससैंधवम् ।
स्वरोपघाते कासे च लेहमेनं प्रयोजयेत् ॥
शर्करामधुमिश्राणि शृतानि मधुरैः सह ।
पिबेत्पयांसि यस्योच्चैर्वदतोभिहतः स्वरः ॥
व्याघ्रीस्वरसविपक्व रास्नावाट्यालगोक्षुरैर्व्योषैः ।
सर्पि· स्वरोपघातं हन्यात्कास च पंचविधम् ॥
शुष्कद्रव्यमुपादाय स्वरसानामसंभवे ॥
वारिण्यष्टगुणे साध्य ग्राह्यं पादावशेषितम् ।

इति श्रीतोमरवशावतसरिपुभूतभैरवश्रीवीरसिंहदेवविरचिते ग्रन्थे वीरसिंहावलोके ज्योतिःशास्त्रकर्मविपाकायुर्वेदप्रयोगे स्वरोपघाताधिकारः ॥

अथ मंदाग्नित्वादरोचकप्रयोगं ज्योतिश्शास्त्राभिप्रायेणाह तत्प्रतीकारं च ।

अतिपरिभूतः कृपण· सहजयुतो मानवो भवति जीवे ।
मन्दाग्निस्त्रीविजितो दुश्चिक्ये पापकर्मा च ॥

इति दुश्चिक्यस्थानास्थितस्य गुरोः प्रागुक्तं जपहोमदानस्नानादिकं विदध्यात् तेनोपशाम्यति ॥ अथ कर्मविपाकाभिप्रायेण अरुचिप्रतीकारमाह । यथा श्रद्धाहीनो धनी अदाता दानरतिर्वा तामसगुणान्वितो यः सोरु-

चिमान् शूली वा जायते अस्य प्रायश्चित्तं कृच्छ्रमतिकृ
च्छ्रं चांद्रायण व्यस्तं समस्तं वा व्याधितारतम्येन कुर्यात्।
अत्राशक्तौ धनी वा प्रतिदिनं पंचाशद्ब्राह्मणभोजनं मिष्टा
न्नं कारयेत् । अत्राप्यशक्तौ होमं सततं कुर्यात् ।

जपं होमं तथा तीर्थस्नानं वापि समाचरेत् ।
तीव्रवैराग्यसंयुक्तः कुर्याद्ब्राह्मणभोजनम् ॥

मिष्टान्नं दद्यादिति वचनात् ।

अग्निरस्मीतिमंत्रेण जपेदयुतसंख्यया ।
चरुणा च घृतेनैव जुहुयाद्धव्यवाहने ॥

जपादिकं यावद्रोगयुक्तो भवति तावदेव कर्तव्यम्
एतद्ब्राह्मणविषयम्। इतरविषये हेमान्नदानमेव प्रशस्तम्

इत्यरुचिशूलविधानम् ॥

अथ क्रमप्राप्तस्यारोचकस्य सनिदानं चिकित्सितमाह
रुग्विनिश्चयात् ।

वातादिभिः शोकभयातिलोभक्रोधैर्मनोघ्नाशनगंधरूपैः
अरोचकाः स्युः परिहृष्टदन्त कषायवक्त्रश्च मतोनिलेन।

बस्तिः समीरणे पित्ते विरेको वमनं कफे ।
कुर्याद्धिधानुकूलानि हर्षणं मनसस्तथा ॥
अम्लीकागुडतोयं च त्वगेलामरिचान्वितम् ।
अभक्तच्छंदरोगेषु शस्तं कवलधारणम् ॥
भोजनाग्रे सदा पथ्यं जिह्वाकण्टकशोधनम् ।
अग्निसंदीपनं हृद्यं लवणार्द्रकभक्षणम् ॥

विचूर्ण्य मधुसंयुक्तो रसो दाडिमसंभवः ।
असाध्यामपि संहन्यादरुचिं वक्रधारितः ।
दाडिमाद्यानि चूर्णानि पूर्वोक्तानि प्रयोजयेत् ।
यस्य यद्वाञ्छित किंचित्तद्देयमरुचौ सदा ॥

इत्यरोचकाधिकार ॥

अथ ज्योतिश्शास्त्राभिप्रायेण छर्दिरोगस्य प्रयोगोभिधीयते तत्प्रतीकारश्च ।

रिपुस्थाने यदा स्यातां चांद्रिशुक्रौ ततो भवेत् ।
छर्दिमान्मनुजः कृष्णपक्षचंद्रावलोकितौ ॥

क्षीणचन्द्रावलोकितषष्ठस्थानस्थितबुधशुक्रबाधोपशांतये तत्प्रीतये बुधस्य तु पूर्वोक्तमेव सकल जपहोमदानादिविधानं विदध्यात्। शुक्रस्य तु वक्ष्यामः। अन्नात्परिस्रुतेतिमन्त्रजप । तिलाज्योदुंबरीसमिद्भिर्होमः अश्वदानं स्नान च ।

एलया च शिलया समन्वितैर्वारिभिः सफलमूलकुंकुमैः ।
स्नानतो भृगुसुतोपपादित दुःखमेति विलयं न संशयः ॥

इति श्रीपतिवचनात् । रौप्य धारयेत् हविष्य नैवेद्यं दद्यात् ॥ अथ छर्दिरोगस्य कर्मविपाकमाह तत्प्रतीकार च । यो ब्राह्मणाय केशकीटककाकसारमेयाद्युपहतमन्न जानन्नेव मोहात्प्रयच्छति स छर्दिमान् जायते यदुक्तं शातातपीये कर्मविपाके ।

श्वकीटकेशकाकादिदूपित मोहतो नरः ।
दत्ता द्विजाय भवति छर्दिमानन्यजन्मनि ॥

इतिवचनात् । गोतमोक्तमपि । विश्वासघातकी छर्दियुक्तो भवति । तदुपशान्तये पंचाशद्ब्राह्मणभोजनं कारयेत् । अन्नदान च यथाशक्त्या ज्ययुक्त कुर्यात् । अग्निरस्मि जन्मनोति मन्त्रेण व्याधिगुरुलघुभावेन जपं कुर्यात् । तिलहोम च कुर्यात् । तेनोपशांतिर्भवति ॥

अथ क्रमप्राप्तस्य छर्दिरोगस्य निदानं चिकित्सितमाह रुग्विनिश्चयात् ।

दुष्टैर्दोपै पृथक्सर्वैर्बीभत्सालोकनादिभि· ॥
छर्दय पच विज्ञेयास्ता· पृथग्लक्षणैर्मताः ।
हृल्लासोद्गाररोधौ च प्रसेको लवणास्यता ॥
दोपोऽन्नपानेषु भृश वमिनां पूर्वलक्षणम् ।
कासश्वासौ ज्वरो हिक्का तृष्णा वैचित्त्यमेव च ॥
हृद्रोगस्तमकश्चैव ज्ञेयाश्छर्देरुपद्रवा· ।

वृंदसंग्रहात्—

आमाशयोत्क्लेशभवाहि सर्वा·
श्छर्द्यो मता लघनमेव तस्मात् ।
पक्वाशये मारुतजान्विते स्यात्
संशोधनं वा कफपित्तहारी ॥
हन्यात्क्षीरोदक पीतं छर्दिं पवनसंभवाम् ।
ससैधव पिबेत्सर्पिर्वातच्छर्दिनिवारणम् ॥

मुद्गामलकयूषो वा ससर्पिष्कः ससैंधवः ।
यवागूं मधुमिश्रां वा पंचमूलीकृतां पिबेत् ॥

अथ सुश्रुतात्—

दध्युत्थरससंयुक्तां पिप्पलीं माक्षिकान्विताम् ।
मुहुर्मुहुर्नरो लीढ्वा छर्दिभ्यः प्रतिमुच्यते ॥
समाक्षिका मधुयुता पीता वा तंडुलांबुना ।
तर्पणं वा मधुयुतं तिसृणामपि भेषजम् ॥
स्वयं गुप्तां सयष्ट्याह्वां तंडुलांबु मधुद्रवाम् ।
पिबेद्यवागुमथवा सिद्धां पत्रैः करजजैः ॥
युक्ताम्ललवणाः पिष्टाः कस्तुंबुर्योऽथ वा हिताः ।
तंडुलांबुयुतं खादेत्कपित्थं त्र्यूषणेन वा ॥
सिताचंदनमध्वाक्त लिह्याद्वा माक्षिकाशकृत् ।
पिबेत्पयोग्नितप्त वा निर्वाप्य ग्रहगोधिकाम् ॥
सर्पिः क्षौद्रयुतं वापि लाजासक्तून्पिबेत्तथा ।
धात्रीरसे चंदनं च शृत मुद्गदलांबु वा ॥
कोलामलकमज्जानं लिह्याद्वा त्रिसुगंधिकम् ।
सक्षौद्रां शालिलाजानां यवागूं वा पिबेन्नरः ॥
श्रेयाण्युपहरेच्चापि मनोज्ञानि सुखानि च ।
जांगलानि च मांसानि पानकानि शुभानि च ॥

भोजनानि विचित्राणि कुर्यात्सर्वास्वतन्द्रितः ॥
अप्रियाण्यपि सेवेत जलेनोद्वेजयोदिति ॥

इति श्रीतोमरवंशावतंसरिपुभूतभैरव श्रीवीरसिंहदेवविरचिते ग्रन्थे वीरसिंहावलोके ज्योतिःशास्त्रकर्मविपाकायुर्वेद प्रयोगे छर्द्यधिकारः ॥

---

अथ तृष्णामूर्च्छारोगयोः साकल्येनैव ज्योतिश्शास्त्राभिप्रायेण हेतुमाह तत्प्रतीकारं च । यथोक्तं जातके-
खिहरथो द्विजनाथ करोति जातं तुदनजठररोगार्तम् ।
स्त्रीद्वेषिणं च पुरुषं तथा पिपासाक्षुधाविष्टम् ॥
मूर्छाशोणितदोषाः शास्त्राच्छेदो व्रणश्चापि ।
पित्तसमुत्थैर्दोषैराभिभूतो मानवो भवति ॥

मूर्छातृष्णादोषोपशमनाय पूर्वोक्तभौमपूजादिवत्-चन्द्रस्यापि जपहोमदानस्नानादिकं निखिलमपि विधेयम् । तेन शान्तिर्भवति ।

अथ तृष्णामूर्च्छारोगयोः कर्मविपाकमाह । यदुक्तं पद्मपुराणे-

पान्थमध्वपरिश्रान्तं ब्राह्मणं गामथापि वा ॥
न पाययेज्जलं यस्तु स तृष्णामूर्छितो भवेत् ॥
वारुणं स जपेत्सूक्तं होमं कुर्यादतन्द्रितः ॥
विदध्याज्जलदानं च तृष्णामूर्च्छोपशान्तये ।
पानीयं पायसं मुद्गान् शर्कराघृतसंयुतान् ॥

इदमावश्यकं देय मूर्छातृष्णोपशांतये ।
इति वचनात् । एवं कृते दोषोपशांतिर्भवति ॥
अथ क्रमप्राप्तस्य तृष्णारोगस्य सनिदान चिकित्सि-
तमाह ॥ यथाह सुश्रुताचार्यः ।

सतत य· पिबेद्वारि न तृप्तिमधिगच्छति ।
पुन कांक्षति यत्तोय तं तृष्णार्दितमादिशेत् ॥
सक्षोभशोकश्रमम्ध्वयानाद्रूक्षाम्लशुष्कोष्णकटूपयोगात् ।
धातुक्षयाल्लघनसूर्यतापात्पित्त च वातश्च भृश प्रवृद्धौ ॥
स्रोतांसि सदूषयत· समेतौ यान्यंबुवाहीनि शरीरिणां हि ।
स्रोतस्स्वपांवाहिषु दूषितेषु जायेत तृष्णा प्रबला ततश्च॥

तिस्रः स्मृतास्ता क्षतजा चतुर्थी
क्षयात्तथान्यामसमुद्भवा च ।
स्यात्सप्तमी भुक्तनिमित्तजा तु
लिंगानि तासा शृणु चौषधानि ।
ताल्वोष्ठकंठास्यविशोषदाहाः
संतापमोहभ्रमविप्रलापाः ।
पूर्वाणि रूपाणि भवंति तासा-
मुत्पत्तिकालेषु विशेषतो हि ॥

तृष्णातिवृद्धावुदरे च पूर्णे त वामयेन्मागधिकोदकेन ।
विलेपनं चात्र हितं विधेय स्याद्दाडिमाम्रातकमातुलुंगैः॥
तृष्णाप्रयोगैरिह सान्निवार्या शीतैश्च सम्यग्रसवीर्यजातैः ।

गंडूपमम्लैर्विरसे मुखे च कुर्याच्छुभैरामलकस्य चूर्णैः ॥
सुवर्णरूपादिभिरग्नितप्तैर्लोष्टैः कृत वा सिकतोपलैर्वा ।
जल सुखोष्णं शमयेच्च तृष्णां सशर्करं क्षौद्रयुत हिम वा॥
पंचांगिकाः पचगणाप उक्तास्तेष्वंबुसिद्धं प्रथमे गणे वा ।
पिबेत्सुखोष्णमनुजोल्पशस्तुतृषोविमुच्येताहिवातजाय॥
पित्तघ्नवर्गेण कृतः कषायः सशर्करः क्षौद्रयुतः सुशीतः ।
पीतस्तृषां पित्तकृतां निहान्ति क्षीरघृतंवाप्यथजीवनीयैः॥
बिल्वाढकीकण्टकपंचमूलदर्भेषुसिद्धकफजां निहंति ।
हितंभवेच्छर्दनमेव चात्र ततेन निंबप्रसवोदकेन ॥
सर्वासुतृष्णास्वथवापिबेत्त कुर्याद्विधितेन विनानशांतिः।
पर्यागतोदुंबरजो रसश्च सशर्करस्तत्क्वथितोदकं वा ॥
वर्गस्यसिद्धस्य च सारिवादे पातव्यमभःशिशिरंतृषार्तैः।
कसेरुशृगाटकपद्ममोचाबिसेषु सिद्ध क्षतजान्निहन्ति ॥
नीलोत्पलोशीरकचन्दनानि दत्वा प्रवाते निशिवासयेत्तु ।
तदुत्तरं तोयमुदारगंधि सितायुत क्षौद्रयुतं तथैव ॥
द्राक्षाप्रगाढं च हितार्थवैद्यस्तृष्णार्दितेभ्यो वितरेन्नरेभ्यः ।
ससारिवादौ तृणपचमूले तथोत्पलादौ प्रथमे गणे च ॥
कुर्यात्कषायं च यथैवयुक्तं मधूकपुष्पादिषु वा परेषु ।
राजादनक्षीरिकपीतनेषु पद्पानकान्यत्रहितानि च स्युः॥
सतुंडिकेरिण्यथवा पिबेत्तु पिष्टानि कार्पाससमुद्भवानि ।
क्षतोद्भवां वृद्धिनिवारणेन जयेद्रसानामसृजश्च पानैः॥
क्षयोत्थिता क्षीरघृतं निहन्यान्मांसोदकंवामधुकोदकंवा ।

आमोद्भवांबिल्ववचायुतानांजयेत्कषायैरथदीपनानाम् ॥
आम्रातभल्लातबलायुतानि पिबेत्कषायाण्यथ दीपनानि।
गुर्वन्नजातां वमनैर्जयेच्च क्षयाद्भुते सर्वकृताश्च तृष्णाः॥
श्रमोद्भवां मांसरसो निहंति गुडोदकं वाप्यथवापिमथः।
भक्तोपरोधात्तृपितोयवागूमुष्णांपिबेन्मथमथो हिमं वा॥
यास्नेहपीतस्य भवेच्च तृष्णातत्रोष्णमंभः प्रपिबेन्मनुष्यः।
मद्योद्भवामर्धजलं निहंति मद्यं तृषां यापि हि मद्यपस्य॥
उष्णोद्भवां हंति जलसुशीतंसशर्करं चेक्षुरसं तथाम्भः।
स्वैःस्वैःकषायैर्वमनानितासां तथाज्वरोक्तानिचपाचनानि
लेपावगाहौ परिषेचनानि कुर्यात्तथाशीतगृहाणि चापि।
संशोधनं क्षीररसौ घृतानि सर्वासुलेहान्मधुरान्हिमांश्च॥

इति श्रीतोमरवंशावतंसरिपुभूतभैरवश्रीवीरसिंहदेवविरचिते वीरसिंहावलोके ज्योतिश्शास्त्रकर्मविपाकायुर्वेदप्रयोगे तृष्णाधिकारः॥

---

अथ क्रमप्राप्तस्य मूर्च्छारोगस्य सनिदानं चिकित्सितमाह—यथाह सुश्रुताचार्यः।

क्षीणस्य बहुदोषस्य विरुद्धाहारसेविनः।
विघातादभिघाताद्वा हीनसत्त्वस्य वा पुनः॥
करणायतनेषूग्रा बाह्येष्वाभ्यंतरेषु च।
निविशंते यदा दोषास्तदा मूर्छंति मानवाः॥
संज्ञावहासु नाडीषु पिहितास्वनिलादिभिः।

तमभ्युपैति सहसा सुखदुःखव्यपोहकृत् ॥
सुखदुःखव्यपोहाच्च नरः पतति काष्ठवत् ।
मोहो मूर्छेति तामाहुः षड्विधा सा प्रकीर्तिता ॥
वातादिभिः शोणितेन मद्येन च विषेण च ।
षट्स्वप्येतासु पित्तं तु प्रभुत्वेनावतिष्ठते ॥
हृत्पीडा जृंभणं ग्लानिः संज्ञानाशो बलस्य च ।
सर्वासां पूर्वरूपाणि यथास्वमुपलक्षयेत् ॥
अपस्मारेण लिंगानि तासामुक्तानि तत्त्वतः ।
पृथिव्यम्भस्तमोरूपं रक्तगंधश्च तन्मयः ॥
तस्माद्रक्तस्य गंधेन मूर्छंति भुवि मानवाः ।
द्रव्यस्वभाव इत्येके दृष्ट्वा यदभिमुह्यति ॥
गुणास्तीव्रतरत्वेन स्थितास्तु विषमद्ययोः ।
त एव तस्माज्जायेत मोहस्ताभ्यां यथेरितः ॥
स्तब्धांगदृष्टिस्त्वसृजा गूढोच्छ्वासश्च मूर्छितः ।
मद्येन विलपन् शेते नष्टविभ्रांतमानसः ॥
गात्राणि विक्षिपन् भूमौ जरां यावन्न याति तत् ।
वेपथुस्वप्नतृष्णाः स्युः स्तंभश्च विषमूर्छिते ॥
वेदितव्यं तीव्रतरं यथास्वं विषलक्षणैः ॥

सेकावगाहौ मणयः सहाराः
शीताः प्रदेहा व्यजनानिलाश्च ।
शीतानि पानानि च गंधवंति
सर्वासु मूर्छास्वनिवारितानि ॥

सितप्रियालेक्षुरसप्लुतानि द्राक्षामधूकस्वरसान्वितानि ।
खर्जूरकाश्मर्यरसैः शृतानि पानानि सर्पींषि सजीवनानि॥
सिद्धानि वर्गं मधुरे पयांसि सदाडिमा जांगलजा रसाश्च ।
तथायवालोहितशालयश्च मूर्च्छासुपथ्याश्चसदासतीनाः॥
भुजंगपुष्प मरिचान्युशीरंकोलस्य मध्यं च पिबेत्समानि ।
सतीनतोयेनविसं मृणालं क्षौद्रेणक्रुण्णांसितयाचपथ्याम्॥
कुर्याच्च नासावदनावरोध क्षीरं पिबेद्वाप्यथ मानुपीणाम् ।
मूर्छांप्रसक्तां तु शिरोविरेकैर्जयेदभीक्ष्णवमनैश्चतीक्ष्णैः ॥
हरीतकीक्काथघृत पिबेद्वा धात्रीफलानां स्वरसैः कृत वा ।
द्राक्षासितादाडिमलाजवंतिशीतानिनीलोत्पलपद्मवंति ॥
पिबेत्कपायाणि च गधवंति पित्तज्वर यानि शम नयंति ।
प्रभूतदोपस्तमसोतिरेकात्समूर्छितो नैव विबुध्यते यः ॥
सन्याससञ्ज्ञोभृशदुश्चिकित्स्यो ज्ञेयस्तदाबुद्धिमतानरेण ।
यथामलोष्ठं सलिले निपिक्त समुद्धरेद्यश्च विलीनमेव ॥
तद्वच्चिकित्सेत्त्वरयाभिपिक्तमवेदनंमृत्युवशप्रयातम् ।
तीक्ष्णांजनाभ्यंजनधूमयोगैस्तथानखाभ्यतरतोत्रपातैः ॥
वादित्रगीतानुनयैरपूर्वैर्विघट्टनैर्गुप्तफलावघर्षणै ।
आभि क्रियाभिश्वणलब्धसञ्ज्ञ सानाहलालाश्वसनश्चवर्ज्यः
प्रसूतसंज्ञमनानुलोम्यैस्तीक्ष्णैर्विशुद्धं लघुपथ्यभुक्तम् ।
फलत्रिकैश्चित्रकनागराद्यैस्तथाश्मजाताज्जतुनः प्रयोगैः ॥
सशर्करैर्मासमुपक्रमेत विशेपतो जीर्णघृतं स पाय्यः ।

प्राणाः प्राणभृतामन्नं तदयुक्त्या निहंत्यसून् ।
विषं प्राणहरं तच्च युक्तियुक्तं रसायनम् ॥
विधिना मात्रया काले हितैरन्नैर्यथाबलम् ।
प्रहृष्टो यः पिबेन्मद्यं तस्य स्यादमृतोपमम् ।
स्निग्धैः सदन्नैर्मांसैश्च भक्ष्यैश्च सह सेवितम् ।
भवेदायुःप्रकर्षाय बलायोपचयाय च ॥
काम्यता मनसस्तुष्टिस्तेजोविक्रम एव च ।
विधिवत्सेव्यमाने तु मद्ये सन्निहिता गुणाः ॥
क्रुद्धेन भीतेन पिपासितेन शोकाभितप्तेन बुभुक्षितेन ।
व्यायामभाराध्वपरिक्षतेन वेगावरोधाभिहतेन चापि ॥
अत्यन्नभक्ष्याच्च ततोदरेण साजीर्णभुक्तेन तथाबलेन ।
उष्णाभितप्तेनचसेव्यमानंकरोतिमद्यं विविधान् विकारान्॥

अथ सुश्रुतात् ।

त्वक्पिप्पलीभुजगपुष्पविडैरुपेतं
सेवेत हिंगुमरिचैर्युतं फलाम्लम् ॥
उष्णाम्बुसैंधवयुतात्वथ वा विडत्वक्-
चव्यैलहिंगुमगधाफलमूलशुंठी ॥
हृद्यैः फलैरपि च भोजनमत्र शस्त-
द्राक्षाकपित्थफलदाडिमपानकं यत् ।
तत्पानविभ्रमहरं मधुशर्कराढ्य-
माम्रातकोलरसपानकमेव चापि ॥
मथः खर्जूरमृद्वीकावृक्षाम्लाम्लीकदाडिमैः ।

परूपकैः सामलकैर्युक्तो मद्यविकारनुत् ॥
सतीनमुद्गमिश्रान् वा दाडिमामलकान्वितान् ॥
द्राक्षामलकखर्जूरपरूपकरसेन वा ।
कल्पयेत्तर्पणान्यूपान् रसांश्च विविधात्मकान् ॥
यथा क्राथेन संसिद्धं घृत धात्रीरसेन वा ।
सर्पिः कल्याणक वापि मदमूर्च्छापहं पिबेत् ॥
योजयेन्मातुलुगाम्लदाडिमैः पानकान्यपि ।
स्निग्धांश्च लवणाम्लांश्च रसाञ्जांगलजान् शुभान् ॥
पित्ते क्षौद्रसितायुक्तं मद्यमर्द्धोदकं पिबेत् ।
पित्तपानात्यये योज्याः सर्वतश्च क्रिया इमाः ॥
पानरोगे कफोद्भूते लघनं च यथाबलम् ।
दीपनीयौपधोपेतं पिबेन्मद्यं समाहितः ॥
त्रिफलाया रसो वापि व्योपचूर्णसमन्वितः ।
शुष्कमूलकजो यूपः कौलत्थो वा मधूत्कटः ।
सर्वजे सर्वमेवेदं प्रयोक्तव्य चिकित्सितम् ।
आभिःक्रियाभिःसिद्धाभिः शांति याति मदात्ययः ।
नो चेन्मद्यक्रमं हित्वा क्षीरमस्य प्रयोजयेत् ।
लंघनाद्यैः कफे क्षीणे जाते दौर्बल्यलाघवे ।
चव्यं सौवर्चलं हिंगु पूरकं विश्वदीपकम् ॥
चूर्णं मद्येन पातव्यं पानात्ययरुजापहम् ॥

इति श्रीतोमरवंशावतंसरिपुमूतभैरवश्रीवीरसिंहविरचिते वीरसिंहावलोके ज्योतिश्शास्त्रकर्मविपाकायुर्वेदप्रयोगे पानात्ययाधिकारः ।

अथेदानीं दाहरोगस्य गणितग्रथाभिप्रायेण प्रकार-माचष्टे तत्प्रतीकारं च यथोक्तं जातके-

तनौ भवति भूपुत्रो रंध्रे भवति भास्करः ॥
जन्मकाले यदा यस्य स दाहज्वरवान्भवेत् ।

मूर्तिस्थानस्थितस्य भूपुत्रस्ये रंध्रस्थानगतस्य च भानोर्दाहपीडोपशमनार्थं तत्प्रीतये धेनुदानादिकंविधेयम् । मंगलप्रीतये च पूर्वोक्तमेव जपहोमदानादिकं कुर्यात् ॥

अथ सर्वांगदाहरोगस्य कर्मविपाकमाह तत्प्रतीकारं च । अथ कापिलग्रहे यः पुन. अग्नौ प्रविशति तं कपिलनामा ग्रहो गृह्णाति । स तत्क्षणाज्ज्वरशूली सर्वांगदाही पीतनयनश्च भवति । बलिं च निशि चतुष्पथेपि पिप्पलाजपिण्याकरुधिरतिलध्वजगंधपुष्पैर्मंत्रेण दद्यात् ॥

प्रगृह्णीष्व बलिं चेमं कपिलाख्य महाग्रह ।
आतुरस्य सुखं सिद्धिं प्रयच्छ त्वं महाफलम् ॥

इतिमन्त्रः । अथ क्रमप्राप्तस्य दाहरोगस्य सनिदानं चिकित्सितमाह रुग्विनिश्चयात् ।

त्वचं प्राप्तः समानोष्मा पित्तरक्ताभिमूर्च्छितः ।
दाहं प्रकुरुते घोरं पित्तवत्तत्र भेषजम् ॥

वृंदसंग्रहात्-

शतधौतघृताभ्यक्तं दद्यात्तु यवसक्तुभिः ॥
कोलामलकसंयुक्तैर्दाडिमाम्लैश्च बुद्धिमान् ॥
स्नेदयेत्तस्य सर्वांगमारनालार्द्रवाससा ॥

स्नामज्जेनाथ युक्तेन चदनेनानुलेपयेत् ।
चंदनांबुकणस्यादिताल्वृंतोपवीजिते ॥
सुप्याद्दाहार्दितोभोजकदलीदलसस्तरे ।
परिपेकावगाहेषु व्यजनानां च सेचने ॥
शस्यते शिशिरं तोयं तृष्णादाहोपशांतये ।
क्षारैश्च सुकपायैश्च सुशीतैश्चदनान्वितैः ॥
अंतर्दाहं प्रशमयेदेतैश्चान्यैश्च शीतलैः ।
फलिनीलोध्रसेव्याम्लहेमपत्रं कुटंनटम् ॥
कालीयकरसोपेतं दाहे शस्तं प्रलेपनम् ।
ह्रीबेरपद्मकोशीरचंदनोदकवारिणा ॥
संपूर्णामवगाहेत द्रोणीं दाहार्दितो नरः ।
पित्तज्वरहरं यच्च दाहे तत्सर्वमिष्यते ॥
वाप्यः कमलहासिन्यो जलयंत्रगृहाः शुभाः ।
नार्यश्चदनादिग्धांग्यो दाहदैन्यहरा मताः ॥
कुशाभिः शालिपर्णीभिर्जीवकाद्येन साधितम् ।
तैलं घृत च दाहघ्नं वातपित्तविनाशनम् ॥
इति कुशाद्य घृतं तैल च ॥

इति श्रीतोमरवंशावतंसश्रीसुभूतभैरव श्रीवीरसिंहदेवविरचिते ग्रन्थे वीरसिंहावलोके ज्योतिःशास्त्रकर्मविपाकायुर्वेदोक्तप्रयोगे दाहाधिकारः ॥

---

अथ क्रमप्राप्तस्योन्मादरोगस्य सनिदानं चिकित्सि-तमाह रुग्विनिश्चयात् ॥

मदयत्युद्धतादोषा यस्मादुन्मार्गमारिथताः ।
मानसोयमतो व्याधिरुन्माद इति कीर्तित· ॥
एकैकशः सर्वशश्च दोषैरत्यर्थमूर्च्छितैः ।
मानसेन च दुःखेन स पचविध उच्यते ॥
विपाद्भवति पष्ठश्च यथास्व तत्र भेषजम् ।
स च प्रवृद्धस्तरुणो मदसंज्ञां बिभर्ति च ॥
विरुद्धदुष्टाशुचिभोजनानि प्रधर्षण देवगुरुद्विजानाम् ।
उन्मादहेतुर्भयहर्षपूर्वो मनोभिघातोविषमाश्च चेष्टाः ॥
तैरल्पसत्त्वस्य मलाः प्रदुष्टा बुद्धेर्निरासं हृदयं प्रदूष्य ।
स्रोतांस्याधिष्ठाय मनोवहानि प्रमोहयंत्याशु नरस्य चेतः॥
धीविभ्रमः सत्त्वपरिप्लवश्च पर्याकुला दृष्टिरधीरता च ।
अबद्धवाक्त्वं हृदयंचशून्यंसामान्यमुन्मादगदस्यालिंगम् ।
चौरैर्नरेंद्रपुरुषैररिभिस्तथान्यै-
र्वित्रासितस्य धनबान्धवसक्षयाद्वा ।
गाढं क्षते मनसि च प्रियया रिरंसो-
र्जायेत चोत्कटतरो मनसो विकार· ॥

वृंदसंग्रहात्-

वातिके स्नेहपानं च प्राग्विरेकश्च पित्तजे ।
कफजे नावनं कार्यं परो वस्त्यादिकः क्रम· ॥
यथोपदेक्ष्यते किंचिदपस्मारचिकित्सिते ।
उन्मादे तत्र कर्तव्य सामान्यादोषदूष्ययो· ॥
सिद्धार्थको हिंगु वचा करंजो देवदारु च ।

मंजिष्ठा त्रिफला श्वेतकटभी च कटुत्रिकम् ॥
समांशानि प्रियंगुश्च शिरीषो रजनीद्वयम् ।
बस्तमूत्रेण पिष्टोऽयमगदः पानमंजनम् ॥
नस्यमालेपनं चैव स्नानमुद्वर्त्तनं तथा ।
अपस्मारविषोन्मादकृत्याऽलक्ष्मीज्वरापहम् ॥
भूतेभ्यश्च भयं हंति राजद्वारे प्रशस्यते ।
सर्पिरेतेन सिद्धं वा गोमूत्रेण तदर्धकृत् ॥
दशमूलांबु सघृतं युक्तं मांसरसेन वा ।
ससिद्धार्थक चूर्णं वा केवलं वा नवं घृतम् ॥
उन्मादशांतये पेयो रसो वा तालशाखजः ।
प्रयोज्य सार्षपं तैलं नस्याभ्यंजनयोस्तदा ॥
आश्वासयेच्छुद्धदांतवाक्यैर्धर्मार्थसंहितैः ।
ब्रूयादिष्टविनाशं वा दर्शयेदद्भुतानि च ॥
बद्धं सर्षपतैलाक्तमुत्तानं चातपे न्यसेत् ।
कपिकच्छाथ वा तप्तैर्लोहैस्तैलजलैः स्पृशेत् ॥
कशाभिस्ताडयित्वा च सुबद्धं विजने गृहे ।
रुध्याच्चेतो हि विभ्रांतं तथा व्रजति तत्सुखम् ॥
सर्पेणोद्धृतदंष्ट्रेण दांतैः सिंहैर्गजैश्च तम् ॥
त्रासयेच्छस्त्रहस्तैश्च शत्रुभिः स्वकरैस्तथा ॥
अथ वा राजपुरुषैर्बहिर्नीत्वा सुसंयतम् ।
त्रासयेयुर्वधेनेन तर्पयंतो नृपाज्ञया ॥
सततं धूपयेच्चैनं शुनो मांसैश्च पूतीभिः ।

बुध्यादोष वयः सात्म्य देशकालबलाबलम् ॥
चिकित्सितमिदं कुर्यादुन्मादे भूतदोषजे ।
महर्षिपितृगन्धर्वैरुन्मादस्य च बुद्धिमान् ॥
वर्जयेदंजनादीनि तीक्ष्णानि क्रूरमेव च ।
अपस्मारक्रियां चापि ग्रहोद्दिष्टां च कारयेत् ॥
कुष्ठाश्वगंधे लवणाजमोदे
द्वे जीरके त्रीणि कटूनि पाठा ।
मांगल्यपुष्पी च समानि चूर्णं
कृत्वा च चूर्णेन वचोद्भवेन ॥
तुल्येन युक्तं बहुशो रसेन तद्भावितं ब्रह्मविनिर्मितायाः ।
सर्पिर्मधुभ्यांचततोऽक्षमात्रंलिह्यान्नर सततदिन हिताशी ॥
ऐश्वर्यमिच्छन्मनसश्च धैर्य मेधांयदिच्छन्द्विगुणंचकामम्॥
पठेन्नर' श्लोकसहस्रमेकं तद्वा प्रयोज्यं द्विगुणच कालम् ॥
सारस्वतमिद चूर्णं ब्रह्मणा निर्मितं स्वयम् ।
जगद्धिताय लोकानां दुर्मेधानामचेतसाम् ॥
इति सारस्वत चूर्णम् ।
जटिला पूतना केशा वरटी मर्कटी वचा ।
त्रायमाणा जया वीरा चोरकः कटुरोहिणी ॥
कायस्था सूकरी छत्रा सातिपत्रा पलंकषा ।
महत्पुरुषदंता च वयस्था नाकुलीद्वयम् ॥
कटंभरा वृश्चिकाली सास्थिरापि च तैर्घृतम् ।
सिद्धं चातुर्थिकोन्मादग्रहापस्मारनाशनम् ।

महापैशाचक नाम घृतमेतद्यथामृतम् ॥
मेधाबुद्धिस्मृतिकरं बालानां चाग्विवर्धनम् ॥
इति महापैशाचकं घृतम् ।

त्रिफला लक्ष्मणानंता समगा सारिवा वचा ।
ब्राह्मी पाठा द्विबृहती द्विस्थिरा द्विपुनर्नवा ॥
सहदेवी सूर्यवल्ली वयस्था गिरिकर्णिका ।
तोयकुंभे पचेदेतत्पलांशं पादशेषितम् ॥
नतं कोती वचा कुष्ठ कृष्णा सर्षपसैंधवैः ।
नीरुक्सवर्णवत्सायाः ससिद्धं पयसा च गोः ।
पुष्ययोगोद्धृतं प्रस्थ सुस्नेहकलशे स्थितम् ॥
पानाभ्यंजनतो मेधास्मृत्यायुःपुष्टिवर्धनम् ।
रक्षोघ्नं च विषघ्नं च सारस्वतमिदं घृतम् ॥
इति सारस्वतं घृतम् ।

श्यामा मधुरसा रास्ना दशमूल शतावरी ।
श्वदंष्ट्रा शणमूलं च तैर्युक्तया क्वाथकल्कितैः ॥
साधितं चैतसं नाम घृत चित्तविकारनुत् ।
उन्मादमदमूर्छायां ज्वरापस्मारभेषजम् ॥
इति चैतस घृतम् ॥

हिंगु मूत्र च वस्तस्य धूममस्य प्रयोजयेत् ।
एतेन शाम्यति क्षिप्रं बलवानपि यो ग्रहः ॥
शिरीषपुष्प लशुन शुंठीं सिद्धार्थकं वचाम् ।
मंजिष्ठां रजनीं कृष्णा वस्तमूत्रेण पेषयेत् ॥

वर्त्यश्छायाविशुष्कास्ताः सपित्तनयनोत्र
कार्पासास्थिमयूरपिच्छबृहतीनिर्माल्यपिं
त्वङ्मांसी विषतिंदुकंतुपवचाकेशाहिनिर्म
नागेंद्रद्विजशृंगहिंगुमरिचैस्तुल्यं कृतं धूप
कंठोन्मादपिशाचराक्षससुरावेशग्रहघ्नं परम

इति महाधूपवरः।

कल्याणकं प्रयुञ्जीत महद्वा चेतस घृतम्
तैलं नारायणं वापि महन्नारायणं तथा ॥

अथ चरकात्कल्याणमहाकल्याणघृते-

विशाला त्रिफला कौंती देवदार्वैलवालुकम्
स्थिरानंता हरिद्रे द्वे सारिवे द्वे पियंगुका
नीलोत्पलैला मंजिष्ठा दंती दाडिमकेसरम्
तालीसपत्रं बृहती मालतीकुसुमं नवम्।
विडंग पृष्टिपर्णी च कुष्ठ चंदनपद्मकौ ॥
एतैः कर्षसमैः कल्कैर्विंशत्यष्टाभिरेव च।
जले चतुर्गुणे पक्त्वा घृतप्रस्थं प्रयोजयेत्
अपस्मारे ज्वरे कासे शोषे मंदानले क्षये।
वातरक्ते प्रतिश्याये तृतीयकचतुर्थके ॥
वम्यर्शोमूत्रकृच्छ्रे च विसर्पोपहतेषु च ॥
कण्डूपांड्वामयोन्मादविषमेषु गदेषु च।
भूतोपहतचित्तानां गद्गदानामचेतसाम्।
शस्तं स्त्रीणां च वंध्यानां धन्यमायुर्बलप्रद

अलक्ष्मीपापरोगघ्नं सर्वग्रहनिवारणम्।
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च॥

इति कल्याणकं घृतम्॥

एभ्य एव स्थिरादीनि जले पक्त्वैकविंशतिम्।
रसे तस्मिन्पचेत्सर्पिर्गृष्टिक्षीरे चतुर्गुणे॥
वीरा द्विमाषं काकोली स्वयं गुप्तर्षभावितः।
मेदाद्याश्च समैःकल्कैस्तत्स्यात्कल्याणकं महत्॥
बृंहणीय विशेषेण सन्निपातहरं परम्।

कलिकातः—

उन्मादिनामुन्मदमानसानामपस्मृतौ भूतहतात्मनां च।
आङ्गीरसं स्यात्सवचः सकुष्ठःसशंखचूर्णःससुवर्णचूर्णः॥

इति श्रीतोमरवंशावतंसरिपुभूतभैरवश्रीवीरसिंहदेवविरचिते वीरसिंहावलोके ज्योतिश्शास्त्रकर्मविपाकायुर्वेदोक्तप्रयोगे उन्मदाधिकारः॥

---

अथेदानीमपस्माररोगस्य जातकाभिप्रायेण हेतुं तत्प्रतीकारं चाह। यथोक्तं जातके—

शनिभूसुतदिननाथा निधनस्था यस्य जन्मकाले स्युः।
नानाव्याधिवधाद्यैः पीडाऽपस्मारसंभवा तस्य॥

अष्टमस्थानस्थशनिमंगलसूर्यजनितापस्माररोगप्रतीकाराय तत्तद्ग्रहप्रीतये पूर्वोक्तमेव सकलं जपहोमदानस्नानादि कुर्यात्। तेनोपशाम्यति।

अथापस्माररोगस्य कर्मविपाकप्रकारमाचष्टे तत्प्रतीकारं च। अथापस्माररोगे स्वामिनो गुरोश्च हंता प्रतिकूलो वा अपस्मारी जायते। अस्य प्रायश्चित्तं चांद्रायणं कुर्यात्। सदसस्पतिमद्भुतामित्यनेन मन्त्रेण चरुघृताभ्यां जुहुयात्। देवब्राह्मणान्संपूज्य नमस्कुर्यात्। हिरण्यं दद्यात्। कयानश्चित्रआभुवदिति सूक्तं जपेत्। यथाह बौधायनः।

ब्राह्मणश्वासरोधेन ह्यपस्मारी भवेन्नरः।
वक्ष्ये तस्य प्रतीकारं दानहोमक्रियादिभिः॥
पलेन वा तदर्धेन तदर्धार्धेन वा पुनः।
विनायकप्रतिकृतिं कुर्यात्स्वर्णेन शोभनाम्॥
राजतं च तथानागमुपवीतं प्रकल्पयेत्।
पुष्करं पद्मरागेण हरतं रत्नैः प्रकल्पयेत्॥
विनायकार्धमानेन मुखं देवस्य कल्पयेत्।
तस्याप्यग्रे प्रदेयानि रत्नानि विविधानि च॥
माणिक्येन प्रकुर्वीत चक्षुषी तस्य शोभने।
पूर्वेद्युर्मंडपं कुर्यात्स्तंभषोडशभिर्दृढम्॥
यद्वा द्वादशभिः कुर्याद्दशभिश्च प्रयत्नतः।
मंडपस्य चतुर्भागां वेदिकां परिकल्पयेत्॥
रात्रौ विनायकस्यापि ह्यधिवासनमिष्यते।
चतुर्भिर्ब्राह्मणैः सार्धमाचार्यः सर्वशास्त्रवित्॥
स्वयमेव तदाचार्यो धर्मज्ञः सत्यवाक्शुचिः।

कुलीनो न च वृद्धश्च सर्वप्राणिहिते रतः ॥
रात्रौ जागरणं कुर्यान्मध्यरात्रे बलिं हरेत् ।
मत्स्यमांसेन तं दद्यात्तथा क्षीरौदनेन च ॥
आचार्यः प्रयतो भूत्वा मंत्रेणानेन संयतः ।
पूर्वस्यां दिशि तं दद्याद्बलिं वै सर्वकामिकम् ॥
आदित्या वसवो रुद्रा देवा भूतानि वासवः ।
सर्पाःपिशाचाःशाकिन्यो डाकिन्यःपांथदेवताः ॥
अपस्माराधिदेव च वेताला नैर्ऋतास्तथा ।
बलिदानेन दत्तेन शांतिं कुर्वंतु सर्वशः ॥

इति बलिदानमन्त्रः ।

ततः प्रभाते विमले स्नात्वा चाहतवाससः ॥
भूषिताः कटकैः सम्यगुपवीतांगुलीयकैः ।
कुंडानि दिक्षु चत्वारि मेखलासंवृतानि च ॥
कुर्युस्ते तु पृथक्तेषु होमं मंत्रैः स्वकैस्तदा ।
पूर्वस्मिन्बह्वृचः कुर्यात्समिदाज्यचरूत्कटम् ॥
विनायकं समुद्दिश्य गणानांत्वेति मंत्रतः ।
तत्पुरुषाय विद्महे वक्रतुंडाय धीमहि ।
तन्नो दंती ( न्तिः ) प्रचोदयात् ॥
अध्वर्युर्दक्षिणे कुडे कुर्याद्धोमं समाहितः ॥
छंदोगः पश्चिमे वापि तद्दैवत्येन होमयेत् ।
अथर्वणश्चोत्तरे च कुंडे होमं प्रकल्पयेत् ॥
विनायकाय देवाय सर्वभूतहिताय च ।

गणानामधिपत्येप्रयुक्तायहुंफट्स्वस्तिस्वधानमःस्वाहा ॥

समिदाज्यचरून्हुत्वा पूर्णाहुत्यंतमेव हि ।
आचार्यः प्रतिमां तां च ब्राह्मणैः सह संयुतः ॥
आसनं वेदिकामध्ये वितानादिसुशोभने ।
तिलानामुपरि स्थाप्य गंधपुष्पैः प्रपूजयेत् ॥
वस्त्रैर्नानाविधैः शुभ्रैः कर्पूरकटकादिभिः ।
उपचारैः षोडशभिर्नैवेद्यं चैव मोदकैः ॥
यथा देवे तथाचार्येऽप्यलंकारादि कल्पयेत् ॥
आचार्यः परया भक्त्या गणेशाय प्रकल्पयेत् ॥
अपूपादि तथान्यच्च कारयेद्भक्ष्यकादिकम् ।
निवेद्य पार्वती चापि देवदेव महेश्वरम् ॥
पूजयेत्परया भक्त्या आचार्यः स्वयमेव हि ।
तथैव रोगवान्भक्त्या संपूज्य गणनायकम् ॥
गणानांत्वेति मंत्रेण तूष्णीं शूद्रस्तु पूजयेत् ।
ततो मध्यंदिने प्राप्ते प्रतिमा दक्षिणायुताम् ॥
मंत्रेणानेन दद्याच्च स रोगी प्राङ्मुख स्वयम् ।
उदङ्मुखोपविष्टाय ब्राह्मणायातिभक्तितः ॥
विनायक प्रपन्नार्तिहर विघ्नविनाशक ।
त्वं देवैः प्रार्थितः पूर्वं विघ्नविघ्नपरायणैः ॥
ब्राह्मणश्वासरोधेन यज्जातं मम वैकृतम् ।
पूर्वकर्मविपाकेन ह्यपस्मारोन्मदादिकम् ॥

जाड्य वाप्यथ बाधिर्यं नासिकारोधभाषणम्।
त्वदर्चायाः प्रदानेन रोगमाशुविनाशय॥
इति दानमन्त्रः।

चतुर्णां ब्राह्मणानां च यथाशक्त्या च दक्षिणा।
एवं कृत्वा गणपतेर्दानं मर्त्यः सुखी भवेत्॥
इत्यपस्मारहरणविधिः॥

अथ क्रमप्राप्तस्य अपस्माररोगस्य सनिदान चिकित्सितमाह रुग्विनिश्चयात्॥

तमः प्रवेशसंरंभो दोषोद्रेकहतस्मृतिः।
अपस्मार इति ज्ञेयो गदो घोरश्चतुर्विधः॥
हृत्कंपः शून्यता स्वेदो ध्यानं मूर्च्छा प्रमूढता।
निद्रानाशश्च तस्मिंश्च भविष्यति भवत्यथ॥
चिंताशोकादिभिर्दोषाः क्रुद्धा हृत्स्रोतसि स्थिताः।
कृत्वा स्मृतेरपभ्रंशमपस्मारं प्रकुर्वते॥
वातात्पित्तात्कफात्सर्वैर्दोषैः स स्याच्चतुर्विधः॥
तमसो दर्शनं ध्यानं हृत्कंपो नेत्रवैकृतम्॥
भ्रमो हृदयशून्यत्वं भाविनस्तस्य लक्षणम्।
पक्षाद्वा द्वादशाहाद्वा मासाद्वा कुपिता मलाः॥
अपस्माराय कुर्वंति वेगं किंचित्तथांतरे।
वातिकं वास्तिभिः प्रायः पैत्तिकं तु विरेचनैः॥
कफजं वमनैर्धीमानपस्मारमुपाचयेत्॥

निर्गुंडीसंभवं दारु नावनस्योपयोगतः ॥
उपैति सहसा नाशमपस्मारो महागदः ।
मनोह्वा तार्क्ष्यजं चैव शक्रपारावतस्य च ॥
अंजनं हंत्यपस्मारमुन्मादं च विशेषतः ।
श्वसृगालबिडालानां कपीनां च गवामपि ॥
पित्तानि नस्यतो दद्यादपस्मृतिनिवृत्तये ।
यष्टीहिंगुवचावाट्याशिरीषलशुनामजैः ॥
साजमूत्रमपस्मारे सोन्मादे नावनांजनम् ॥
कपित्थं शारदं मुद्गं मुस्तोशीरयवांस्तथा ॥
सव्योषां वस्तमूत्रेण पिष्ट्वा वर्तिं प्रकल्पयेत् ।
अपस्मारे तथोन्मादे सर्पदष्टे गरार्दिते ॥
पुष्योद्धृत शुनः पित्तमपस्मारप्रभंजनात् ।
तदेव सर्पिषा युक्तं धूपनं परमं स्मृतम् ॥
आभिः क्रियाभिः शुद्धाभिर्हृदयं संप्रबुध्यते ॥
स्रोतांसि चास्य शुध्यांति स्मृतिं संज्ञां च विंदति ॥
नकुलोलूकमार्जारगृध्रकीटादिकाकजैः ।
तुण्डैः पक्षैः पुरीषैश्च धूपनं कारयेद्भिषक् ॥

गोमूत्रसिद्धार्थकशिग्रुपर्णैरुद्वर्तनं तैरथवा प्रलेपः ।
पूतिश्च योमत्स्यकृतेन धूपो नस्यं चतीक्ष्णैरवबोधनार्थम्॥

मूलं वर्तिशिखाजं गोघृतलीढं नरस्य मांसेन ।
निश्शेषयत्यपस्मृतिमिति सिद्धं नात्र संदेहः ॥

-यः खादेत्क्षीरभक्ताशी माक्षिकेन वचारजः ।
अपस्मारं महाघोरं सुचिरोत्थं जयेद्ध्रुवम् ॥
इति कल्याणकारकात् ।
भार्ङ्गीकषायप्लुतमायासचूर्णमेत-
दिक्षोर्विकारकृतसन्मधुरं सुगन्धि ।
कुंभे निधाय विहितं बहुधान्यपल्ले-
ऽपस्मारमाशु विनिहंत्यसकृन्निपीतम् ॥
शुद्धसूतं द्विधा गधं खल्वे कृत्वा तु कज्जलीम् ।
द्वयोस्तुल्यं वलाचूर्णं मधुना सह भक्षयेत् ॥
निष्कमात्रं रसो ह्येष दुग्धभक्तप्रयोगतः ।
अपस्मारं महाघोरं चिरकालानुबंधिनम् ॥
मासमात्रान्निहंत्येष नात्र कार्या विचारणा ॥

इति श्रीतोमरवंशावतंसश्रीपृथ्वीपतिप्रभुतमेरव श्रीवीरसिंहदेवविरचिते
वीरसिंहावलोके ज्योतिश्शास्त्रकर्मविपाकायुर्वेद-
प्रयोगे अपस्माराधिकारः ॥

अथेदानीं ज्योतिश्शास्त्राभिप्रायेण वातव्याधिनिदानं तत्प्रतीकारं व्याख्यास्यामः । यदुक्तं जातके-

अतिमारुतरोगार्त्तः परस्वहारी विलोममतिचेष्टः ।
कर्कटकस्थे भानौ स्वपुत्रदृष्टे पुमान्पिशुनः ॥
अन्यच्च-
वातपित्तोद्भवा पीडा हीनजैः सह विग्रहः ॥
विदेशगमनं वापि सौरेभ्यो यदा शिखी ॥

कर्कटस्थितस्वपुत्रदृष्टसूर्यजनितवातव्याधिप्रतीकार-माह। तत्प्रीतये पूर्वोक्तमेव जपहोमदानादि सकलमेव विधिवद्विदध्यात् । अन्यच्च । शनैश्चरमध्यवर्तिकेतुजनितवातोद्भवपीडोपशांतये केतुप्रीतये जपहोमादिकं कुर्यात्। केतुकृण्वन्निति मन्त्रेण जपः।तिलाज्यकुशसमिद्भिर्जुहुयात्।ससुवर्णं छाग दद्यात्।शनेरिव असिततिलांजनेत्यादिभिरोषधैः स्नायात्।राजावर्त्तपरिधानं विदध्यात्॥

वातव्याधिगृहीत लोके दुष्ट प्रवासशीलं वा ।
क्षुद्र निंदितशीलं जनयति भौमेक्षित' सौर'॥

भौमेक्षितशनिजनितवातव्याध्युपशमनाय शनिप्रीतये पूर्वोक्त जपहोमादिक कुर्यात् । अथ वातव्याधेः कर्मविपाकमाह तत्प्रतीकार च । गुरुं प्रत्यर्थी वातरोगी शन्नोदेवीरिति मंत्रेण जपं कुर्वीत इति उमामहेश्वरसंवादे अभिधानात् । अन्यच्च वातरोगकारणं प्रकृत्यंतरं चोच्यते देवब्राह्मणस्वापहरणात्स्वामिद्रोहाद्वातरोगी भवति। अस्य प्रायश्चित्तं कृच्छ्रातिकृच्छ्रचान्द्रायणंकुर्यात् । अग्निरस्मीत्यृचं जपेत्। अनेन मंत्रेण होमं च कुर्यात्।

वात आवार्तमंत्रोय जप्यतेऽयुतसंख्यया ।
अग्निरस्मीत्यृचं वापि जपेद्वा जुहुयादपि ॥

इति वाचस्पतिवचनम्। विश्वस्तस्य विष दत्वाऽभक्ष्यभक्षी वा वासो हिरण्य दद्यात् ॥

यः पुनरक्षतयोनिमनिच्छंतीं परस्त्रियं बलादाक्रम्योपभुंक्ते स सर्वसंधिषु धनुर्वातरोगो वा विषमज्वरी वा तीव्रपीडावान्भवति । तदुपशांतये प्रतिरूपदानं महिषीदानं कृच्छ्रातिकृच्छ्रचांद्रायणानि कुर्यात् । उद्यन्नद्येत्यृचं जपेत् । तदुक्तं ब्रह्माण्डपुराणे ।

अपमृत्युप्रशांत्यर्थं प्रतिरूपं द्विजोत्तमे ।
प्रदद्यान्महिषीं कृष्णां सवत्सां पूजयेत्ततः ।
सहस्रनामस्तोत्रं वा सर्वं वारत्रयं जपेत् ।
मृत्युरोगप्रशांत्यर्थमात्मनश्च शुभाप्तये ॥

इतिमहाभारतवचनात् नामत्रयं जपेत् । नामत्रयस्य छंदोऋषिदेवताः प्रदर्श्यंते । उष्णिग्गायत्रीपुरुषप्रकृतीसुतल छंदांसि वसिष्ठकश्यपनारदा ऋषयः महाविष्णुर्महान्नृसिंहोमहावराहश्च देवता इति । सर्वरोगशांतयेऽयुतत्रयं जपेत् ।

अच्युतानंद गोविंदेत्येतन्नामत्रयं द्विजः ।
अयुतत्रयसंख्याकं जपं कुर्याद्धि शांतये ॥

इति शंकरगीतासु वचनात् । पुरुषसूक्तजपं कुर्यात् । ततः पापक्षयाद्रोगमोक्षो भवत्येव इति । धनुर्वातरोगे अन्यच्च वायुपुराणे ॥

वातव्याधियुतः स्तेयीत्याह बोधायनो मुनिः ।
हरिणं कारयेत्ताम्रं धेनुं तु दशभिः पलैः ॥
तदर्धेन तदर्धेन शृंगे रूप्यमये दृढे ।

तंडुलोपरि सस्थाप्य ब्राह्मणाय निवेदयेत् ॥
हाटकात्रितयं वापि तदर्धं वा स्वशक्तितः ।
चतुष्पादेषु संस्थाप्य कांस्यपात्रचतुष्टयम् ॥
वायुदैवतमन्त्रैश्च होम तत्र प्रकल्पयेत् ।
समिदाज्यचरुं हुत्वा शतमष्टोत्तरं द्विजः ॥
अष्टाविंशतिभिर्वाथ दानमंत्रेण कारयेत् ।
वायो चरसि भूतानामंतस्त्वं लोकपावनः ।
वाहनस्य प्रदानेन वातव्याधिं विनाशय ॥
अनेन कृतमात्रेण यथोक्तेन विधानत. ।
वातव्याधिविनिर्मुक्तो नीरोगः सुखमश्नुते ॥

इति वातव्याधिहरो मृगदानविधिः ।

अथ क्रमप्राप्तस्य वातव्याधेः सनिदान चिकित्सित माह रुग्विनिश्चयात् ॥

रूक्षशीताल्पलघ्वन्नव्यवायातिप्रजागरैः ।
विषमादुपचाराच्च दोषासृक्स्रावणादति ॥
लंघनप्लवनात्यर्थव्यायामअतिचेष्टितैः ।
धातूनां संक्षयाच्चिंताशोकरोगादिकर्षणात् ॥
वेगसधारणायासादभिघातादभोजनात् ।
मर्मबाधागजोष्ट्राश्वशीघ्रयानापतर्पणात् ॥
देहे स्रोतांसि रिक्तानि पूरयित्वानिलो बली ।
करोति

अव्यक्तं रूपं

आत्मरूपं तु यदव्यायामायासो लघुता पुनः ॥
संकोचः पर्वणां स्तंभो भंगोऽस्थ्नां पर्वणामपि ।
लोमहर्षः प्रलापश्च पारिपृष्ठशिरोग्रहः ॥
खांज्यं पांगुल्यकुब्जत्वे शोषोऽगानामनिद्रता ।
गर्भशुक्ररजोनाशः स्पंदनं गात्रसुप्तता ॥
शिरोनासाक्षिजत्रूणां ग्रीवायाश्चापि भंजनम् ।
भेदस्तोदार्तिराक्षेपो मोहश्चायास एव च ॥
एवंविधानि रूपाणि करोति कुपितोऽनिलः ।
हेतुस्थानविशेषाच्च भवेद्रोगविशेषकृत् ॥
तत्र कोष्ठाश्रिते दुष्टे निग्रहो मूत्रवर्चसोः ।
वर्ध्मंहृद्रोगगुल्मार्शः पार्श्वशूल च मारुते ॥
सर्वांगकुपिते वाते गात्रस्फुरणभंजनम् ।
वेदनाभिः परीताश्च स्फुटंतीव च सधयः ॥
ग्रहो विण्मूत्रवातानां शूलाध्मानाश्मशर्कराः ।
जंघोरुत्रिकहृत्पृष्ठरोगशोथा गुदे स्थिते ॥
रुक्पार्श्वोदरहृन्नाभितृष्णोद्गारविपूचिकाः ॥
कासः कंठास्यशोषश्च श्वासश्चामाशयस्थिते ॥
पक्वाशयस्थोऽऽत्रशूल शूलाटोपौ करोति च ।
कृच्छ्रमूत्रपुरीषत्वमानाहं त्रिकवेदनाम् ॥
श्रोत्रादिष्विंद्रियवधं कुर्यात्क्रुद्धः समीरणः ।

वृंदसंग्रहात्—

अभ्यंगः स्वेदनं बस्तिनस्य स्नेहं विरेचनम् ।

स्निग्धाम्ललवणं स्वादु वृष्यं वातामयापहम् ॥
पटोलफलकैर्यूषो वृष्यो वातहरो लघुः ।
वास्यालककृतो यूषः परं वातविनाशनम् ॥
पंचमूलीबलासिद्धं क्षीरं वातामयापहम् ।
शीतोष्णस्निग्धरूक्षाद्यैर्वातजो यो न शाम्यति ॥
विकारस्तत्र विज्ञेयो विषमो वातशोणितः ।
वाजिगंधा बला शिग्रुर्दशमूली महौषधम् ॥
गृध्रनखौ च रास्ना च गणो मारुतनाशनः ॥
अनूपमत्स्यामिषवेशवारैरुष्णैः प्रदेहः पवनापहः स्यात् ।
स्नेहैश्चतुर्भिर्दशमूलसिद्धैः प्रागेव वैश्वानिलहा प्रदेहः ॥
निरस्थिपिशितं पिष्टं स्विन्नं गुडघृतान्वितम् ।
कृष्णामरीचिसंयुक्तं वेशवार इति स्मृतः ॥
काकोल्यादिः सवातघ्नः सर्वाम्लद्रव्यसंयुतः ।
सानूपोदकमांसस्तु सर्वस्नेहसमायुतः ॥
सुखोष्णः सर्वलवणः साल्वणः परिकीर्तितः ।
तेनोपनाहं कुर्वीत सर्वदा वातरोगिणाम् ॥
काकोल्यादिगणो ग्राह्यो ह्यष्टवर्गैकसंज्ञकः ॥
वातघ्नो भद्रदार्व्यादिवर्गोऽम्लो दाडिमादिकः ॥
सर्वस्नेहश्चतुस्स्नेहो लवणं सैंधवादिकम् ।
अम्लादिभिश्च सस्कार्यं काकोल्यादित्रयं त्रिभिः॥
आमाशयगते वाते छर्दिताय यथाक्रमम् ।
देयः षट्चरणो योगः सप्तरात्रंसुराम्बुना ॥

चित्रकेंद्रयवा पाठा कटुकातिविषा क्षया ।
महाव्याधिप्रशमनो योगः पट्चरणः स्मृतः ॥
कर्षोऽष्टादशभिः पूर्वैर्धरणं त्र्यधिकैस्तु तैः ।
तेन पट्चरणो योगः सप्तरात्रं प्रयुज्यते ॥
पक्वाशयगते वाते कार्यं स्नेहविरेचनम् ।
बस्तयः शोधनीयाश्च प्राश्याश्च लवणोत्तराः ॥
कार्यो बस्तिगते वाते विधिर्बस्तिविशोधनः ॥
श्रोत्रादिषु प्रकुपिते कार्यश्चानिलहा विधिः ॥
स्नेहोऽभ्यंगोपनाहश्च मर्दनालेपनानि च ॥
त्वग्मांसासृक्सिराप्राप्ते कुर्याच्चासृग्विमोक्षणम् ॥
स्वेदोपनाहाग्निकर्मबंधनोन्मर्दनानि च ।
स्नायुसंध्यास्थिसप्राप्ते कुर्याद्वाते विचक्षणः ॥
निरूढेस्थिगते वायौ मणिमंथेन दारिते ।
नाडिं दत्वास्थिनि भिषक्चूषयेत्पवनं बली ॥
वक्षस्त्रिकस्कंधगतं वायुं मन्यागतं तथा ।
वमनं हंति नस्यं च कुशलेन प्रयोजितम् ॥
माषबलाशुकशिंबीकत्तृणरास्नाश्वगंधोरुबूकाणाम् ।
क्वाथः प्रातः पीतो रामठलवणान्वितः कोष्णः ॥
अपनयति पक्षघातं मन्यास्तंभं सकर्णनादयुतम् ।
दुर्जयमर्दितवातं सप्ताहाज्जयति चावश्यम् ॥
हिंगुसैंधवसंयुक्त पक्षघातनिवारणम् ।
पलमर्द्धपलं वापि रसोनस्य सकल्कितम ॥

हिंगुजीरकसिन्धूत्थैः सौवर्चलकटुत्रिकैः ।
चूर्णितैर्माक्षिकैर्मानैरवलोड्य विचूर्णितैः ॥
यथाग्निभक्षितं प्रातरुबूक्काथानुपानतः ।
दिनेदिने प्रयोक्तव्यं मासमेकं निरंतरम् ॥
वातरोगं निहंत्याशु अर्दितं चापतंत्रकम् ।
एकांगरोगिणे चैव तथा सर्वांगरोगिणे ॥
ऊरुस्तंभे च गृध्रस्यां क्रमिदोषे विशेषतः ।
कटिपृष्ठामय हन्याज्जठर च विशेपतः ॥
सहरिद्रा वचा कुष्टं पिप्पली विश्वभेषजम् ।
अजाजी चाजमोदा च यष्टीमधुकसैंधवम् ॥
एतानि समभागानि श्लक्ष्णं चूर्णानि कारयेत् ।
तच्चूर्णं सर्पिषालोड्य प्रत्यहं भक्षयेन्नरः ।
एकविंशतिरात्रेण भवेच्छ्रुतिधरो नरः ।
मेघदुंदुभिनिर्घोषो मत्तकोकिलनिस्वनः ॥
जडगद्गदमूकत्वं लेहः कल्याणको जयेत् ॥
इति कल्याणकावलेहः ।
तैलं घृतं चार्द्रकमातुलुंगरसं सचक्रं सगुडं पिबेद्यः ।
कट्यूरुपृष्ठत्रिकगुल्मशूलगृध्रस्युदावर्त्तहरः प्रदिष्टः ॥
कुंकुमं चंदनं पत्रमुशीर कुमुदोत्पलैः ॥
गोरोचना हरिद्रे द्वे मंजिष्ठा मधुयष्टिका ।
सारिवारोध्रपतंगं कुष्ठ गैरिककेसरे ॥
स्वर्णक्षीरी प्रियंगुश्च कालीयं रक्तचंदनम् ।

एभिरक्षसमैर्भागैस्तैलप्रस्थं विपाचयेत् ॥
अभ्यंगो राजपत्नीनां ये चान्ये धनिनो नराः ।
तिलकान्पिडकान्व्यगान्नीलिकान्मुखदूषकान् ॥
कार्श्यं चापि शरीरस्य दुश्छायां च विवर्णताम् ।
नाशयित्वाशु जनयेद्रूपं चापि मनोहरम् ॥
पद्मकेसरवर्णाभ मुखं भवति कांतिमत् ।

इति कुंकुमाद्यं तैलम् ।

बलाशतकषाये तु तैलस्यार्धाढकं पचेत् ॥
कल्कैर्मधुकमंजिष्ठाचंदनोत्पलपद्मकैः ॥
सूक्ष्मैलापिप्पलीकुष्ठत्वगेलागरुकेसरैः ।
ग धैश्च जीवनीयैश्च क्षीराढकसमायुतम् ॥
एतन्मृद्वग्निना पक्वं स्थापयेद्भाजने शुभे ।
सर्ववातविकारांश्च सर्वधात्वंतराश्रयान् ॥
तैलमेतत्प्रशमयेच्छिन्नाभ्राणीव मारुतः ।
बलातैलं महद्राहमेतज्ज्वरविकारनुत् ॥

अथ वातव्याधौ बलातैलम् ।

बलामूलकषायस्य दशमूलीकृतस्य च ।
यवकोलकुलत्थानां क्वाथस्यो पयसस्तथा ॥
अष्टावष्टौ शुभा भागास्तैलादेकं तदेकतः ।
पचेदवाप्य मधुरं गणसैंधवसंयुतम् ।
तथाऽगुरु सर्जरसं सरलं देवदारु च ॥
मंजिष्ठा चदनं कुष्ठमेलाकोलांजनं वरा ।

मांसी शैलेयकं पत्रं तगरं सारिवां वचाम् ॥
शतावरीमश्वगधां शतपुष्पां पुनर्नवाम् ।
तत्साधु सिद्धं सौवर्णे राजते मृन्मयेऽपि वा ॥
प्रक्षिप्य कलशे सम्यक्सुगुप्तं तं निधापयेत् ।
बलातैलमिद ख्यातं सर्ववातविकारनुत् ॥
यथाबलं तथा मात्रां सूतिकायै प्रदापयेत् ।
या च गर्भार्थिनी नारी क्षीणशुक्रश्च यः पुमान् ॥
धातुक्षीणे मर्महते मथितेऽभिहते तथा ।
भग्ने श्रमाभिपन्ने च सर्वथैवोपयुज्यते ॥
एतदाक्षेपकादीन्वै वातव्याधीन्व्यपोहति ।
हिक्कां श्वासमधिमंथ गुल्मं कास च दुस्तरम् ॥
षण्मासानुपयोज्य तदन्त्रवृद्धिं व्यपोहति ।
प्रत्यग्रधातुः पुरुषो भवेच्च स्थिरयौवनः ॥
राज्ञामेतद्धि कर्त्तव्य राजमान्याश्च ये नराः ।
सुखिन' सुकुमाराश्च धनिनश्चापि ये नरा· ॥

इति बलातैलम् ।

बिल्वोग्निमंथ' स्योनाक पाटला पारिभद्रकः ।
प्रसारिण्यश्वगधा च बृहती कंटकारिका ॥
बला चातिबला चैव श्वदंष्ट्रा सपुनर्नवा ।
एषां दशपलान्भागांश्चतुर्द्रोणांऽभस· पचेत् ॥
पादशेषं परिस्राव्य तैलपात्रं प्रदापयेत् ॥
शतपुष्पा देवदारु मांसी शैलेयकं वचा ॥

चंदनं तगरं कुष्ठमेलापर्णीचतुष्टयम् ।
रास्ना तुरगगंधा च सैंधवं सपुनर्नवम् ॥
एतान्द्विपलिकान्भागान्पेषयित्वाविनिःक्षिपेत् ।
शतावरीरसं चैव तैलतुल्यं प्रदापयेत ॥
आजं वा यदि वा गव्यं क्षीरं दद्याच्चतुर्गुणम् ॥
पाने बस्तौ तथाभ्यंगे भोज्ये नस्ये प्रशस्यते ।
अश्वो वा वातसंभग्नो गजो वा यदि वा नरः ॥
पंगुलः पीठसर्पी च तैलेनानेन सिध्यति ।
अधोभागे च ये वाताः शिरोमध्यगताश्च ये ।
दंतशूले हनुस्तंभे मन्यास्तंभे हनुग्रहे ।
एकांग शुष्यते यस्य गतिर्यस्य च विह्वला ॥
क्षीणेंद्रिया नष्टशुक्रा ज्वरक्षीणाश्च ये नराः ।
बधिरालसजिह्वाश्च मंदमेधाश्च ये तथा ॥
मंदप्रजा च या नारी या च गर्भं न विंदति ॥
वातार्तो वृषणो येषामंत्रवृद्धिश्च दारुणा ।
एतत्तैलवरं तेषां नाम्ना नारायणं स्मृतम् ।
इति नारायणतैलम् ।
समूलपत्रां पुष्पाढ्यां शरत्काले प्रसारिणीम् ।
कुट्टयित्वा पलशतं कटाहे समधिश्रयेत् ॥
वारि द्रोणसमायुक्तं चतुर्भागावशेषितम् ।
कषायसममात्र तु तैलमत्र प्रदापयेत् ॥
दध्नस्तत्राढकं दद्याद्द्विगुण चाम्लकांजिकम् ।

मांसीं शैलेयकं पत्रं तगरं सारिवां वचाम् ॥
शतावरीमश्वगधां शतपुष्पां पुनर्नवाम् ।
तत्साधु सिद्धं सौवर्णे राजते मृन्मयेऽपि वा ॥
प्रक्षिप्य कलशे सम्यक्सुगुप्तं तं निधापयेत् ।
बलातैलमिदं ख्यातं सर्ववातविकारनुत् ॥
यथाबलं तथा मात्रां सूतिकायै प्रदापयेत् ।
या च गर्भार्थिनी नारी क्षीणशुक्रश्च यः पुमान् ॥
धातुक्षीणे मर्महते मथितेऽभिहते तथा ।
भग्ने श्रमाभिपन्ने च सर्वथैवोपयुज्यते ॥
एतदाक्षेपकादींश्च वातव्याधीन्व्यपोहति ।
हिक्कां श्वासमधिमंथं गुल्मं कासं च दुस्तरम् ॥
षण्मासानुपयोज्य तदन्त्रवृद्धिं व्यपोहति ।
प्रत्यग्रधातुः पुरुषो भवेच्च स्थिरयौवनः ॥
राज्ञामेतद्धि कर्त्तव्यं राजमान्याश्च ये नराः ।
सुखिनः सुकुमाराश्च धनिनश्चापि ये नराः ॥

इति बलातैलम् ।

बिल्वोऽग्निमंथः स्योनाकः पाटला पारिभद्रकः ।
प्रसारिण्यश्वगंधा च बृहती कंटकारिका ॥
बला चातिबला चैव श्वदंष्ट्रा सपुनर्नवा ।
एषां दशपलान्भागांश्चतुर्द्रोणांऽभसः पचेत् ॥
पादशेषं परिस्राव्य तैलपात्रं प्रदापयेत् ॥
शतपुष्पा देवदारु मांसी शैलेयकं वचा ॥

चंदनं तगरं कुष्ठमेलापर्णीचतुष्टयम् ।
रास्ना तुरगगंधा च सैंधवं सपुनर्नवम् ॥
एतान्द्विपलिकान्भागान्पेषयित्वा विनिःक्षिपेत् ।
शतावरीरसं चैव तैलतुल्यं प्रदापयेत् ॥
आजं वा यदि वा गव्यं क्षीरं दद्याच्चतुर्गुणम् ॥
पाने बस्तौ तथाभ्यंगे भोज्ये नस्ये प्रशस्यते ।
अश्वो वा वातसंभग्नो गजो वा यदि वा नरः ॥
पंगुलः पीठसर्पी च तैलेनानेन सिध्यति ।
अधोभागे च ये वाताः शिरोमध्यगताश्च ये ।
दंतशूले हनुस्तंभे मन्यास्तंभे हनुग्रहे ।
एकांगं शुष्यते यस्य गतिर्यस्य च विह्वला ॥
क्षीणेंद्रिया नष्टशुक्रा ज्वरक्षीणाश्च ये नराः ।
बधिरालसजिह्वाश्च मंदमेधाश्च ये तथा ॥
मंदप्रजा च या नारी या च गर्भं न विंदति ॥
वातार्तो वृषणो येषामंत्रवृद्धिश्च दारुणा ।
एतत्तैलवरं तेषां नाम्ना नारायणं स्मृतम् ।

इति नारायणतैलम् ।

समूलपत्रां पुष्पाढ्यां शरत्काले प्रसारिणीम् ।
कुट्टयित्वा पलशतं कटाहे समधिश्रयेत् ॥
वारि द्रोणसमायुक्तं चतुर्भागावशेषितम् ।
कषायसममात्र तु तैलमत्र प्रदापयेत् ॥
दध्नस्तत्राढकं दद्याद्द्विगुण चाम्लकांजिकम् ।

भेषजानि तु पेष्याणि तत्रेमानि समापचेत् ॥
शुंठीपलानि पंचैव रास्नायाश्च पलद्वयम् ।
यवक्षारपले द्वे च सैन्धवस्य पलद्वयम् ॥
एतत्सर्व समालोड्य शनैर्मृद्वग्निना पचेत् ॥
एतदभ्यंजने श्रेष्टं नस्यकर्मणि शस्यते ।
पाने वस्तौ च दातव्य न क्वचित्प्रतिषिध्यते ॥
अशीति वातरोगाणां तैलमेतद्व्यपोहति ।
गृध्रसीमस्थिभंगं च मंदाग्नित्वं च नाशयेत् ॥
अपस्मारमथोन्मादं विद्रधि मंदगामिताम् ।
त्वग्गताश्चापि ये वाता सिरासंधिगताश्च ये ॥
जानुसंधिगताश्चैव पादपृष्ठगतास्तथा ।
अश्वं वा वातसभग्नं नरं वा जर्जरीकृतम् ॥
प्रसारणीतैलमिदं बलमांसविवर्धनम् ।
धन्य प्रजाकरं श्रेष्ठं वृद्धकाले च सेवितम् ॥
पंगुलः पीठसर्पी च पीत्वा तत्संप्रधावति ।
स्थिरीकरणमेतद्धि वलीपलितनाशनम् ॥
द्रियाणां बलकर वर्णोदार्यकर तथा ।
इति भेदाद्वातरोगे तैलमाहुः प्रसारणी ॥
बलाश्वगंधावृहतीश्वदंष्ट्रास्योनाकवात्यालकपरिभद्राः ।
क्षुद्राकपिछातिबलाग्निमंथारास्ना रणीक-कपिकच्छुराच॥
निर्गुंडिकैरंडकुरंटकानां मूलानि चैषां सरणियुतानि ।
मूलंविदध्यादथपाटलानां संकुच्यपादं विधिनोद्धृतानाम् ।

द्रोणैरपामष्टभिरेव पक्त्वा पादावशेषेण रसेन तेन ।
तैलाढकाभ्यां समदुग्धमत्र साजं निदध्यादथवापिगव्यम् ।
दद्याद्रसं चैव शतावरीणां तैलेन तुल्यं पुनरेव तत्र ।
पक्त्वा दिनैकं कृतवस्त्रपूतं कल्कानि चैषां हि समावपेतम्
रास्नाश्वगधामिसिदारुकुष्टपर्णीतुरुष्कागुरुकेसराणि ॥
सिंधूत्थमांसी रजनीद्वयं च शैलेयकं चंदनपुष्कराणि ॥
एला सयष्टीतगराब्दपत्र भृंगाष्टवर्गं च वचा पलाशम् ।
वृश्चीवथौणेयकचोरकाख्यं मूर्वांवचाकट्फलपद्मकं च ॥
मृणालजातीफलकेतकी च सनागपुष्पं सरलं मुरा च ॥
जीवंतिकाचदनकंह्युशीरदुरालभावानरिकानखं च ॥
कैवर्तिकं तालशिरः सतिक्तं खर्ज्जूरमुस्तं समभागमेषाम्
एतैः समेत्यार्धपलप्रमाणैर्भागानथाष्टौ खलुकालमेष्यम् ॥
एणः कुरंगो हरिणो मयूरो गोधाशशःशक्रकचक्रवाकौ ।
वर्तीरलावौ वरतित्तिरी च सत्सारसक्रौंचककंबुवर्णाः ॥
अजा सकूर्मा इह मांसपुष्टा क्रमात्क्षिपेच्चान्यथैवलाभम्
रोहीतकोथोसवनेत्र नामा कंसाढकौ मुद्गरशृङ्गिकौ च ॥
पाठीनकालीयकतोडिका च सशेखरा ये कुररादयश्च ।
एषां च यूपः क्रमलब्ध एव तैलेन योज्योविधिवद्विधिज्ञैः ।
ताम्रपात्रे वरमृत्तिके च कर्पूरकाश्मीरमृगांडजानाम् ।
दद्यात्सुगंधाय वदंतिकेचित्प्रस्वेददौर्गंध्यविनाशनाय ॥
वदंति केचिद्भिषजा समेतं शुभे तिथावृक्षमुहूर्तलग्ने ।
संतोष्य विप्रान् भिषजोर्थिनश्च सुभाजने यत्नधृतं तथैव ।

पाने च नस्ये च निरूहणे च भोज्येप्रयोज्यंतत एवनूनम् ।
अभ्यंगमादौ च सदा प्रशस्तं निवार्यते कर्मसुकेषु नैव॥
उन्मादशोपे क्षतरक्तपित्ते श्वासभ्रमप्लीहाविछर्दनानि ।
कासाग्निवाताहतदंतशूलक्रमान्समूर्छाननतोददाहान् ॥
सतालुशूलं श्रवणाक्षिशूलं वाधिर्यमेव ज्वरपीडितं च ।
मंदेंद्रियत्वं च तथाग्निमांद्यं प्रणष्टशुक्रत्वमथांगकण्डूम्॥
निहंति सर्वस्वगुणप्रभावात्कटिग्रहाय स्मृतिगृध्रसीं च ।
मन्याहनुस्तंभनपक्षवात सर्वांगकंपं रसनाग्रहं च ॥
शिरोगतान्संधिगतांश्च वातानधोगतानूर्ध्वंगतास्तथैव ।
मांसास्थिमज्जागतवातरोगानाक्षेपकश्चैनशिरोविकारान् ॥
तथाऽन्त्रशूलं वृषणार्तिमुग्रां वातोद्भवान्सर्वगताश्चरोगान् ।
श्लेष्मोद्भवान्द्वंद्वजामिश्रिताश्च एकांगजातानतिविह्वलांश्च
शिरश्चलन्मिन्मिनगद्गदांश्च पंगु ससंजस्त्वथ पीठसर्पी ।
प्रणष्टशुक्रो वलबुद्धिहीन सिद्ध्यंति तैलेननियोजितेन ॥
निदाघदग्धःप्रहतो द्रुमश्च वंध्याचनारीलभतेसुपुत्रम् ।
पराक्रमैर्विष्णुसमानरूपंपुण्योच्छ्रितराज्यवलोपयुक्तम् ।
विद्यासुबुद्धि वरमन्त्रवर्णविधिप्रयुक्त क्रमालितदेह॰ ।
नारायणंनामतत॰ प्रसिद्ध नारायणोक्तंच महाप्रभावम् ॥
इति महानारायणतैलम् ॥
तैल संकुचितेभ्यंगे मापसैधवसाधितम् ।
बाहुशीर्षगते नस्यं पानं चोपरिभाक्तिकम् ॥
इति मापतैलम् ।

मापात्मगुप्तातिरसोरुबूकरास्नाशताह्वैर्लवणैः सुपिष्टैः ।
चतुर्गुणे मापबलाकषाये तैलं कृतं हति विपक्षवातान् ॥
इत्यपरं मापतैलम् ।
मापक्वाथे बलाक्वाथे रास्नाया दशमूलजे ॥
यवकोलकुलत्थानां छागमांसरसे पृथक् ।
प्रस्थं तैलस्य च प्रस्थं क्षीरं दद्याच्चतुर्गुणम् ॥
रास्नात्मगुप्तासिधूत्थशताह्वैरंडमुस्तकैः ।
जीवनीयबलाव्योपैः पचेदक्षसमैर्भिषक् ॥
हस्तकंपे शिरःकंपे बाहुकंपेऽपबाहुके ।
वस्त्यभ्यंजनपानेषु नावने च प्रयोजयेत् ॥
मापतैलमिदं श्रेष्ठं मूर्द्धजन्तुगदापहम्
इति बृहन्मापतैलम् ॥
केतकिमूलबलातिबलानां यद्बहुलेन जलेन विपक्वम् ।
तैलमनल्पतुपोदकसिद्धं मारुतमास्थिगतं विनिहंति ॥
इति केतक्यादितैलम् ।
रास्नामृतैरंडसुराह्वविश्वं तुल्यं पुरेणाथ विमृद्य खादेत् ।
वातामयी कर्णशिरोगदी च नाडीयुतश्चैव भगंदरी च ॥
इति रास्नाद्यो गुग्गुलः ।
त्रिकटु त्रिफला मुस्तं विडंगं चव्यचित्रके ।
वचैला पिप्पलीमूलं हपुषा सुरदारु च ॥
तुंबुरू पौष्करं कुष्ठं विषा च रजनीद्वयम् ।
वाष्पिका जीरकं शुंठी पत्रं च सुदुरालभम् ॥

पाने च नस्ये च निरूहणे च भोज्येप्रयोज्यंततएवनूनम् ।
अभ्यङ्गमादौ च सदा प्रशस्तं निवार्यते कर्मसुकेषु नैव॥
उन्मादशोषे क्षतरक्तपित्ते श्वासभ्रमप्लीहविछर्दनानि ।
कासाग्निवाताहतदंतशूलकूर्मान्समूर्छाननतोददाहान् ॥
सतालुशूलं श्रवणाक्षिशूलं वाधिर्यमेव ज्वरपीडितं च ।
मंदेंद्रियत्वं च तथाग्निमांद्यं प्रणष्टशुक्रत्वमथांगकण्डूम्॥
निहंति सर्वस्वगुणप्रभावात्कटिग्रहाय स्मृतिगृध्रसीं च ।
मन्याहनुस्तंभनपक्षवात सर्वांगकंपं रसनाग्रहं च ॥
शिरोगतान्संधिगतांश्च वातानधोगतानूर्ध्वगतांस्तथैव ।
मांसास्थिमज्जागतवातरोगानाक्षेपकंचैवशिरोविकारान् ॥
तथांऽन्त्रशूलं वृषणार्तिमुग्रां वातोद्भवान्सर्वगतांश्चरोगान् ।
श्लेष्मोद्भवान्द्वंद्वजामिश्रितांश्च एकांगजातानतिविह्वलांश्च
शिरश्चलन्मिन्मिनगद्गदांश्च पङ्गुः सखंजस्त्वथ पीठसर्पी ।
प्रणष्टशुक्रो वलबुद्धिहीनः सिद्ध्यति तैलेननियोजितेन ॥
निदाघदग्धःप्रहतो द्रुमश्च वंध्याचनारीलभतेसुपुत्रम् ।
पराक्रमैर्विष्णुसमानरूपंपुण्योच्छ्रितंराज्यबलोपयुक्तम् ।
विद्यांसुबुद्धिं वरमन्त्रवर्णाविधिप्रयुक्त क्रमालिप्तदेहः ।
नारायणनामततः प्रसिद्ध नारायणोक्तंच महाप्रभावम् ॥

इति महानारायणतैलम् ॥

तैल सकुचितेभ्यंगे माषसैंधवसाधितम् ।
बाहुशीर्षगते नस्यं पानं चोपरिभाक्तिकम् ॥

इति माषतैलम् ।

मापात्मगुप्तातिरसोरुबूकरास्नाशताह्वैर्लवणैः सुपिष्टैः।
चतुर्गुणे मापबलाकषाये तैलं कृतं हंति विपक्षवातान् ॥
इत्यपरं मापतैलम्।

मापक्वाथे बलाक्वाथे रास्नाया दशमूलजे ॥
यवकोलकुलत्थानां छागमांसरसे पृथक्।
प्रस्थं तैलस्य च प्रस्थ क्षीरं दद्याच्चतुर्गुणम् ॥
रास्नात्मगुप्तासिंधूत्थशताह्वैरंडमुस्तकैः।
जीवनीयबलाव्योपैः पचेदक्षसमैर्भिषक् ॥
हस्तकंपे शिरःकंपे बाहुकंपेऽपबाहुके।
बस्त्यभ्यंजनपानेषु नावने च प्रयोजयेत् ॥
मापतैलमिदं श्रेष्ठं मूर्द्धजन्तुगदापहम्
इति बृहन्मापतैलम् ॥

केतकिमूलबलातिबलानां यद्बहुलेन जलेन विपक्कम्।
तैलमनल्पतुपोदकसिद्धं मारुतमस्थिगतं विनिहंति ॥
इति केतक्यादितैलम्।

रास्नामृतैरंडसुराह्वविश्वं तुल्यं पुरेणाथ विमृद्य खादेत्।
वातामयी कर्णशिरोगदी च नाडीयुतश्चैव भगंदरी च ॥
इति रास्नाद्यो गुग्गुलः।

त्रिकटु त्रिफला मुस्तं विडंग चव्यचित्रके।
वचैला पिप्पलीमूलं हपुषा सुरदारु च ॥
तुंबुरू पौष्करं कुष्ठं विषा च रजनीद्वयम्।
वाप्पिका जीरकं शुंठी पत्रं च सुदुरालभम् ॥

विडं सौवर्चलं क्षारौ सैंधवं हस्तिपिप्पली ।
भागानेतान्समान्कृत्वा तुल्य दत्वाच गुग्गुलुम् ॥
तदा वदरमात्रेण गुटिकां कारयेद्बुध' ।
तां भक्षयेत्तु मेधावी मधुना सह योजिताम् ॥
आम हन्यादुदावर्तमन्त्रवृद्धिगुदक्रुर्मान् ।
महाज्वरोपसृष्टानां भूतोपहतचेतसाम् ॥
आनाहं च तथोन्मादं कुष्टानि गुदजानि च ।
शोफप्लीहामयं मेह कामलामपची तथा ॥
नाम्ना द्वात्रिंशको ह्येप गुग्गुलु· कथितो ह्ययम् ।
धन्वंतरिकृतो योग' सर्वरोगनिपूदनः ॥
इति द्वात्रिंशको गुग्गुलु ।

इति श्रीतोमरवंशावतंसरिपुभूतभैरवश्रीवीरसिंहदेवविरचिते
वीरसिंहावलोके ज्योतिश्शास्त्रकर्मविपाकायुर्वेदमयोगे
वातव्याध्यधिकारः ॥

---

अथ ज्योतिश्शास्त्राभिप्रायेण वातरक्तदोपस्य कारणमाह
व्योमस्थाने महीपुत्र' शनिदृष्टो यदा भवत् ।
जन्मकाले यस्य जंतोः स वातरुधिरार्दितः ॥

इति वचनात् व्योमस्थानस्थितशनिदृष्टभौमजानितं-वातरक्तदोपोपशांतये मंगलप्रीतये पूर्वोक्तमेव जपहोम-दानादिकं कुर्यात् ॥

अथ वातरक्तरोगे कर्मविपाकहेतुमाह । वातरक्तोद्रेके

यथाह बोधायनः । सवर्णागमने वातरक्तवान् भवति । अस्य प्रायश्चित्तं चांद्रायणद्वयम् ।

अथ दानम् ।

लक्ष्मीनारायणं रूपं सुवर्णेन प्रकल्पयेत् ।
पलेन वा तदर्धेन तदर्धेनाथ वा पुनः ॥
लक्ष्मीनारायणं रूपं सर्वदा सर्वकामदम् ।
पद्मासनगतं कुर्याद्देवदेवं चतुर्भुजम् ॥
दक्षिणाधः करे पद्मं शंखमूर्ध्वकरे न्यसेत् ।
वामाधश्च भवेच्चक्रं लक्ष्मीपृष्ठे करं शुभम् ॥
वामोत्संगगता देवी रत्नपात्रकरा भवेत् ।
दक्षिणश्च भुजो देव्याः पृष्ठे देवस्य चक्रिणः ॥
गरुडं राजतं कुर्याद्देवदेवस्य वाहनम् ।
पक्षौ च तस्य सौवर्णौ सुवर्णेनैव नासिका ॥
वस्त्रैरत्यंतरुचिरैः परिधाप्यातिकौतुकम् ।
मुक्तादामपरिक्षिप्तं चंदनागरुलेपनम् ॥
अर्चयेत्कुसुमैर्युग्मं लक्ष्मीनारायणात्मकम् ।
प्रसन्नं रमणीयं च गरुडस्योपरिस्थितम् ॥
ततो विप्रं समाहूय सुशीलं लक्षणान्वितम् ।
आचारवन्तं धर्मज्ञं वेदवेदांगपारगम् ॥
प्रतिग्रहनिवृत्तं च श्रुतिस्मृतिपथे स्थितम् ।
स्वयं भक्त्या समानीय पूजयेद्वस्त्रकुंडलैः
कु० रुचिरैरंगुलीयकैः ।

पूर्वोक्तेन विधानेन होमं तत्र तु कारयेत् ॥
मन्त्रेणानेन त दद्यात्सर्वलोकनमस्कृतम् ।
लक्ष्मीपते देवकिनन्दनेश क्षीराब्धिशायिन्वचसामगम्य ॥
गोविंद दामोदर वातरक्तं विनाशयाशु क्षपितारिवर्ग ।
लक्ष्मीनारायणस्यैव मूर्तिं दद्यात्सुभक्तितः ॥
अरोगवान्सुखी नित्यं जायते नात्र संशय ।
इति वातरक्ते लक्ष्मीनारायणदानविधिः ॥

अथ क्रमप्राप्तस्य वातरक्तस्य सनिदानं चिकित्सित-माह रुग्विनिश्चयात् ।

उत्तानमवगाढं च द्विविधं वातशोणितम् ।
त्वग्मांसाश्रयमुत्तानं गंभीरं त्वंतराश्रयम् ॥
लवणाम्लकटुक्षारास्निग्धोष्णक्षीरभोजनैः ।
क्लिन्नशुष्काम्बुजानूपमांसपिण्याकमूलकैः ॥
कुलत्थमाषनिष्पावशाकादिपललेक्षुभिः ।
दध्यारनालसौवीरशुक्ततक्रसुरासवैः ॥
विरुद्धाध्यशनक्रोधदिवास्वप्नप्रजागरैः ।
प्रायश सुकुमाराणा मिथ्याहारविहारिणाम् ॥
स्थूलानां सुखिनां चापि कुप्यते वातशोणितम् ।
हस्त्यश्वोष्ट्रैर्गच्छतश्चाश्नतश्चाविदाह्यन्नं सविदाहाशनस्य॥
कृत्स्नरक्तंविदहत्याशु तच्चदुष्ट पाण्यो पादयोश्चीयते च ॥
तत्संयुक्तं वायुना दूषितेन तत्प्राबल्यादुच्यते वातरक्तम् ।
स्वेदोत्यर्थं तथा कार्श्यं स्पर्शाज्ञत्वं क्षतेतिरुक् ।

संधिशैथिल्यमालस्यं स्यंदनं पिडकोद्गमः ॥
जानुजंघोरुकट्यंसहस्तपादांगसंधिषु।
निस्तोदस्फुरण भेदो गुरुत्वं सुप्तिरेव च ॥
कंडूः संधिषु रुग्दाहो भूत्वा नश्यति वा सकृत्।
वैवर्ण्यं मंडलोत्पत्तिर्वातासृक्पूर्वलक्षणम् ॥

अथ वृंदसंग्रहात्—

वातशोणितिनो रक्त स्निग्धस्य बहुशो हरेत्।
अल्पाल्प रक्षयेद्वायुं यथादोषं यथाबलम् ॥
दिवास्वप्नं समं तापं व्यायामं मैथुनं तथा ॥
कटूष्णं गुर्वभिष्यंदि लवणाम्लं च वर्जयेत् ॥
पुराणा यवगोधूमा नीवाराः शालिषष्टिकाः ॥
आढक्यश्चणका मुद्गाः मसूराः समकुष्ठकाः ॥
सूपार्थं बहुसर्पिष्का· प्रशस्ता वातशोणिते ॥
वासागुडूचीचतुरंगुलानामैरंडतैलेन पिबेत्कषायम्।
क्रमेण सर्वांगजमप्यशेषं जयेदसृग्वातभव विकारम्॥
गुडूच्या· स्वरसं कल्कं चूर्णं वा क्वाथमव च।
प्रभूतकालमासेव्यं मुच्यते वातशोणितम् ॥
अमृतानागरधान्यककर्षत्रितयेन पाचनं सिद्धम्।
जयति सरक्त वात मास कुष्ठान्यशेषेण ॥
वत्सादन्युद्भव· क्वाथः पीतो गुग्गुलुमिश्रितः।
समीरणसमायुक्तं शोणितं संप्रणाशयेत ॥

तिस्रोथ वा पंच गुडेन पथ्या
जग्ध्वा पिबेच्छिन्नरुहाकषायम् ।
तद्वातरक्तं शमयत्युदीर्ण-
माजानुभिन्नं च्युतमप्यवश्यम् ॥
मारिवासर्ज्ञमजिष्टायष्टीसिक्थैः पयोऽन्वितैः ॥
तैल पक्त्वा प्रयोक्तव्यं पिंडाख्यं वातशोणिते ।

इति पिंडतैलम् ॥

वनमहिषलोचनोदरसन्निभवर्णस्य गुग्गुलोः प्रस्थम् ।
प्रक्षिप्य तोयराशौ त्रिफलामभृतांयथोक्तपरिमाणाम्॥
संसाधयेत्प्रयत्नाद्दर्व्या सघट्टयेच्च तद्यावत् ।
अर्द्धक्षपित जात तोयं ज्वलनस्य तापकात् ॥
अवतार्य वस्त्रपूतं पुनरपि ससाधयेदय· पात्रे ।
सान्द्रीभूते तस्मिन्नवतार्य हिमोपलस्पर्शे ॥
पथ्याचूर्णार्धपलं त्रिकटुकचूर्णं षडक्षपरिमाणम् ।
कृमिरिपुचूर्णार्द्धपलं कर्षंकर्ष त्रिवृद्दन्त्यो· ॥
पलमेकं छिन्नरुहां दत्त्वा संमूर्छ्य यत्नेन ।
संस्थापयेच्च गुप्ते स्निग्धे भांडे घृतेन सुरभीणाम्॥
आदाय तस्य मात्रां विहितातिथिदेवताप्रणतिः ।
खादेद्यथाग्नि मनुजो व्याधिवलापेक्षया सम्यक् ॥
इच्छाहारविहारो भेषजकालाश्च सर्वे स्युः ॥
तनुरोधिवातशोणितमेकद्विन्त्युल्वणचिरोत्थमपि ॥
भग्नक्षतपरिशुष्क स्फुटितमपि हि हति यत्नेन॥

व्रणकासकुष्ठगुल्मश्वयथूदरपांडुरोगमेदांसि ।
मंदाग्नित्वविबंधं प्रमेहदोषांश्च नाशयति ॥
सततं निषेव्यमाणं कालेन निहंति दोषगणम् ॥
अभिभूय जरादोषं करोति कैशोरकं रूपम् ॥

इति कैशोरको गुग्गुलुः ।

भूनिंबांबुदनिंबवत्सककणात्रायत्यनंतामृता-
तिक्ताभीरुफलत्रिकप्रतिविषामूर्वाविशालाजलैः ।
पाठापर्पटसारिवाद्वयनिशायुग्यष्टिकापद्मकैः
सोशीरैः सपटोलचंदनवचाशम्याकसतच्छदैः ॥
इत्येभिर्गदितैर्जलाष्टगुणितं प्रस्थं पचेत्सर्पिषो
गव्यस्यामलकीरसद्विगुणितं नाम्ना महातिक्तकम् ।
हंत्येतद्गलगंडमंडलरुजः कंडूं सपांड्वामयं
शोफश्लीपदवातरक्तविकृतीः कुष्ठानि चाष्टादश ॥

इति तिक्तकघृतम् ।

मंजिष्ठा कुटजामृता घनवचा शुंठी हरिद्राद्वयं
क्षुद्रारिष्टपटोलपत्रकटुकाभार्ङ्गीविडंगाग्निकम् ।
मूर्वा दारु कलिंगभृंगमगधा त्रायंति पाठावरी
गायत्री त्रिफला किरातकमहानिंबासनारग्वधम् ॥
श्यामा वल्गुजचंदनं वरुणकं पूतीरसास्फोटकं
वासापर्पटसारिवाप्रतिविषानंताविशालाजलम् ।
मंजिष्ठादिममुं कषायविधिना नित्यं पुमान्यः पिबेत्
त्वग्दोषा अचिरेण यांति विलयं कुष्ठानि चाष्टादश ॥

व्रणकासकुष्ठगुल्मश्वयथूदरपांडुरोगमेदांसि।
मदाग्नित्वविबंधं प्रमेहदोषांश्च नाशयति ॥
सतत निषेव्यमाणं कालेन निहंति दोषगणम् ॥
अभिभूय जरादोष करोति कैशोरकं रूपम् ॥

इति कैशोरको गुग्गुलुः।

भूनिंबांबुदनिंबवत्सककणात्रायंत्यनंतामृता-
तिक्ताभीरुफलत्रिकप्रतिविषामूर्वाविशालाजलैः।
पाठापर्पटसारिवाद्वयनिशायुग्मपटिकापद्मकैः
सोशीरैः सपटोलचंदनवचाशम्याकसतच्छदैः ॥
इत्येभिर्गदितैर्जलाष्टगुणितं प्रस्थं पचेत्सर्पिषो
गव्यस्यामलकीरसाद्विगुणितं नाम्ना महातिक्तकम्।
हन्त्येतद्गलगडमडलरुजः कडूं सपांड्वामयं
शोफश्लीपदवातरक्तविकृतीः कुष्ठानि चाष्टादश ॥

इति तिक्तकघृतम्।

मंजिष्ठा कुटजामृता घनवचा शुंठी हरिद्राद्वयं
क्षुद्रारिष्टपटोलपत्रकटुकाभार्ङ्गीविडंगाग्निकम्।
मूर्वा दारु कलिंगभृंगमगधा त्रायंति पाठावरी
गायत्री त्रिफला किरातकमहानिंबासनारग्वधम् ॥
श्यामा वल्गुजचंदन वरुणकं पूतीरसास्फोटकं
वासापर्पटसारिवाप्रतिविषानंताविशालाजलम्।
मंजिष्ठादिमसु कषायविधिना नित्यं पुमान्यः पिबेत्
त्वग्दोषा अचिरेण यांति विलयं कुष्ठानि चाष्टादश ॥

वातरक्ते प्रसुप्तौ च विसर्पे विद्रधौ तथा ।
सर्वेषु वातरोगेषु मंजिष्ठादिः प्रशस्यते ॥
इति मंजिष्ठादिक्काथः ।

इति श्रीतोमरवंशावतंसरिपुभूतभैरवश्रीवीरसिंहदेवविरचिते वीरसिंहावलोके ज्योतिश्शास्त्रे कर्मविपाकायुर्वेदोक्तप्रयोगे वातरक्ताधिकारः ॥

अथेदानीं ऊरुस्तंभामवातयो सामान्यदोषदूष्यत्वात् ज्योतिश्शास्त्राभिप्रायेण हेतुमाह तत्प्रतीकारं च । यदुक्तं जातके । अष्टमगोगुरुरामकर्ता च इति वचनात् अष्टमस्थानस्थगुरुजनितामवातरोगोपशांतये तत्प्रीतये पूर्वोक्तमेव होमपूजादानादिकं कुर्यात् । तेनोपशाम्यति । ऊरुस्तंभामवातोपसृष्टस्य कर्मविपाकमाह हुताग्निनिर्वापक आमवातवान् इति स्मरणात् तदुक्तदोषोपशांतये अयुतसंख्याको गायत्र्या जपस्तिलैराज्येन च होमः सुवर्णान्नदानम् ॥

यत्र यत्र च संकीर्णमात्मानं मन्यते द्विजः ।
तत्र तत्र तिलैर्होमो गायत्र्याश्च जपस्तथा ॥
इति स्मरणात् ।

अथ क्रमप्राप्तस्योरुस्तंभरोगस्य सनिदानं चिकित्सितमाह रुग्विनिश्चयात् ।

शीतोष्णद्रवसंशुष्कगुरुस्निग्धैर्निषेवितैः ।
जीर्णाजीर्णैस्तथायाससंक्षोभस्वप्नजागरैः ॥

सश्लेष्ममेदःपवनमाममत्यर्थसंचितम्।
अभिभूयेतर दोषमूरू चेत्प्रतिपद्यते॥
सक्थ्यस्थीनि प्रपूर्यातः श्लेष्मणा स्तिमितेन च।
तदा स्तम्भाति तेनोरू स्तब्धौ शीतावचेतनौ॥
परकीयाविव गुरू स्यातामतिभृशव्यथौ।
यत्स्यात्कफप्रशमनं तच्च मारुतकोपनम्।
तस्मात्तत्सर्वदा कार्यमूरुस्तंभस्य भेषजम्।
सर्वौषधक्रमः कार्यस्तत्रादौ कफनाशनः॥
पश्चाद्वातविनाशाय कृत्स्नः कार्यः क्रियाक्रमः।
क्षौद्रसर्षपवल्मीकमृत्तिकासयुतं भिषक्॥
गाढमाच्छादनं कुर्यादूरुस्तंभे सवेदने।
त्रिफलाचव्यकटुकाग्रथिकं मधुना लिहेत्॥
ऊरुस्तंभविनाशाय पुरं मूत्रेण वा पिबेत्।
लिह्याद्वा त्रिफलाचूर्णं क्षौद्रेण कटुकायुतम्॥
तत्सुखांबु पिबेद्वापि चूर्णं षड्चरणं नरः।
पिप्पलीवर्धमानं वा माक्षिकेण गुडेन वा॥
ऊरुस्तंभे प्रशंसाति गाडीरारिष्टमेव च।
सैंधवाद्यं हितं तैलममृताख्योपि गुग्गुलुः॥

इत्यूरुस्तंभाधिकारः।

अथामवातरोगस्य निदानं सचिकित्सितमाह रुग्विनिश्चायत्।

विरुद्धाहारचेष्टस्यमंदाग्नेर्निश्चलस्य च।

वातरक्ते प्रसुप्तौ च विसर्पे विद्रधौ तथा ।
सर्वेषु वातरोगेषु मंजिष्ठादिः प्रशस्यते ॥
इति मंजिष्ठादिक्काथ· ।

इति श्रीतोमरवंशावतसरिपुभूतभैरवश्रीवीरसिंहदेवावि-
रचिते वीरसिंहावलोके ज्योतिश्शास्त्रे कर्मवि-
पाकायुर्वेदोक्तप्रयोगे वातरक्ताधिकार· ॥

अथेदानीं ऊरुस्तंभामवातयो· सामान्यदोषदूष्यत्वात् ज्योतिश्शास्त्राभिप्रायेण हेतुमाह तत्प्रतीकारं च । यदुक्तं जातके । अष्टमगोगुरुरामकर्ता च इति वचनात् अष्टमस्थानस्थगुरुजनितामवातरोगोपशांतये तत्प्रीतये पूर्वोक्तमेव होमपूजादानादिकं कुर्यात् । तेनोपशाम्यति । ऊरुस्तंभामवातोपसृष्टस्य कर्मविपाकमाह हुताग्निनिर्वापक आमवातवान् इति स्मरणात् तदुक्तदोषोपशांतये अयुतसंख्याको गायत्र्या जपस्तिलैराज्येन च होमः सुवर्णान्नदानम् ॥

यत्र यत्र च संकीर्णमात्मानं मन्यते द्विजः ।
तत्र तत्र तिलैर्होमो गायत्र्याश्च जपस्तथा ॥
इति स्मरणात् ।

अथ क्रमप्राप्तस्योरुस्तंभरोगस्य सनिदानं चिकित्सितमाह रुग्विनिश्चयात् ।

शीतोष्णद्रवसंशुष्कगुरुस्निग्धैर्निषेवितै· ।
जीर्णाजीर्णैस्तथायाससंक्षोभस्वप्नजागरैः ॥

सश्लेष्ममेदःपवनमाममत्यर्थसंचितम् ।
अभिभूयेतरं दोषमूरू चेत्प्रतिपद्यते ॥
सक्थ्यस्थीनि प्रपूर्यांतः श्लेष्मणा स्तिमितेन च ।
तदा स्तभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ ॥
परकीयाविव गुरू स्यातामतिभृशव्यथौ ।
यत्स्यात्कफप्रशमनं तच्च मारुतकोपनम् ।
तस्मात्तत्सर्वदा कार्यमूरुस्तंभस्य भेषजम् ।
सर्वौषधक्रमः कार्यस्तत्रादौ कफनाशन' ॥
पश्चाद्वातविनाशाय कृत्स्नः कार्य· क्रियाक्रमः ।
क्षौद्रसर्षपवल्मीकमृत्तिकासयुतं भिषक् ॥
गाढमाच्छादनं कुर्यादूरुस्तंभे सवेदने ।
त्रिफलाचव्यकटुकाग्रथिकं मधुना लिहेत् ॥
ऊरुस्तंभविनाशाय पुरं मूत्रेण वा पिबेत् ।
लिह्याद्वा त्रिफलाचूर्णं क्षौद्रेण कटुकायुतम् ॥
तत्सुखाम्बु पिबेद्वापि चूर्णं पड्चरणं नर' ।
पिप्पलीवर्धमानं वा माक्षिकेण गुडेन वा ॥
ऊरुस्तंभे प्रशंसंति गांडीरारिष्टमेव च ।
सैंधवाद्यं हितं तैलममृताख्योपि गुग्गुलुः ॥

इत्यूरुस्तंभाधिकारः ।

अथामवातरोगस्य निदानं सचिकित्सितमाह रुग्विनिश्चायत् ।

विरुद्धाहारचेष्टस्यमंदाग्नेर्निश्चलस्य च ।

वातरक्ते प्रसुप्तौ च विसर्पे विद्रधौ तथा ।
सर्वेषु वातरोगेषु मञ्जिष्ठादिः प्रशस्यते ॥
इति मञ्जिष्ठादिक्काथः ।

इति श्रीतोमरवंशावतंसश्रीकमलसिंहभूपतिप्रभवश्रीवीरसिंहदेवविरचिते वीरसिंहावलोके ज्योतिश्शास्त्रे कर्मविपाकायुर्वेदोक्तप्रयोगे वातरक्ताधिकारः ॥

अथेदानीं ऊरुस्तंभामवातयोः सामान्यदोषदूष्यत्वात् ज्योतिश्शास्त्राभिप्रायेण हेतुमाह तत्प्रतीकारं च । यदुक्तं जातके । अष्टमगोगुरुरामकर्ता च इति वचनात् अष्टमस्थानस्थगुरुजनितामवातरोगोपशांतये तत्प्रीतये पूर्वोक्तमेव होमपूजादानादिकं कुर्यात् । तेनोपशाम्यति । ऊरुस्तंभामवातोपसृष्टस्य कर्मविपाकमाह हुताग्निनिर्वापक आमवातवान् इति स्मरणात् तदुक्तदोषोपशांतये अयुतसंख्याको गायत्र्या जपस्तिलैराज्येन च होमः सुवर्णान्नदानम् ॥

यत्र यत्र च संकीर्णमात्मानं मन्यते द्विजः ।
तत्र तत्र तिलैर्होमो गायत्र्याश्च जपस्तथा ॥
इति स्मरणात् ।

अथ क्रमप्राप्तस्योरुस्तंभरोगस्य सनिदानं चिकित्सितमाह रुग्विनिश्चयात् ।

शीतोष्णद्रवसंशुष्कगुरुस्निग्धैर्निषेवितैः ।
जीर्णाजीर्णैस्तथायाससंक्षोभस्वप्नजागरैः ॥

सश्लेष्ममेदःपवनमाममत्यर्थसंचितम्।
अभिभूयेतर दोषमूरू चेत्प्रतिपद्यते॥
सक्थ्यस्थीनि प्रपूर्यांतः श्लेष्मणा स्तिमितेन च।
तदा स्तभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ॥
परकीयाविव गुरू स्यातामतिभृशव्यथौ।
यत्स्यात्कफप्रशमनं तच्च मारुतकोपनम्।
तस्मात्तत्सर्वदा कार्यमूरुस्तंभस्य भेषजम्।
सर्वौषधक्रमः कार्यस्तत्रादौ कफनाशनः॥
पश्चाद्वातविनाशाय कृत्स्नः कार्यः क्रियाक्रमः।
क्षौद्रसर्षपवल्मीकमृत्तिकासयुतं भिषक्॥
गाढमाच्छादनं कुर्यादूरुस्तंभे सवेदने।
त्रिफलाचव्यकटुकाग्रथिकं मधुना लिहेत्॥
ऊरुस्तंभविनाशाय पुरं मूत्रेण वा पिबेत्।
लिह्याद्वा त्रिफलाचूर्णं क्षौद्रेण कटुकायुतम्॥
तत्सुखांबु पिबेद्वापि चूर्णं षट्चरणं नरः।
पिप्पलीवर्धमानं वा माक्षिकेण गुडेन वा॥
ऊरुस्तंभे प्रशंसांति गांडीरारिष्टमेव च।
सैंधवाद्यं हितं तैलममृताख्योऽपि गुग्गुलुः॥

इत्यूरुस्तंभाधिकारः।

अथामवातरोगस्य निदानं सचिकित्सितमाह रुग्विनिश्चायत्।

विरुद्धाहारचेष्टस्यमंदाग्नेर्निश्चलस्य च।

स्निग्ध भुक्तवतो ह्यन्न व्यायाम कुर्वतस्तथा ॥
वायुना प्रेरितो ह्यामः श्लेष्मस्थानं प्रधावति ।
तेनात्यर्थं विदग्धोऽसौ धमनीः प्रतिपद्यते ॥
धातूनामाश्रयो ह्येष आमसंज्ञोऽतिदारुणः ।
युगपत्कुपितावेतौ त्रिकसंधिप्रवेशकौ ॥
स्तब्धं च कुरुते गात्रमामवात स उच्यते ।

वृंदसंग्रहात्–

लंघन स्वेदन तिक्त दीपनानि कटूनि च ।
विरेचन स्नेहपानं वस्तयश्चाममारुते ॥
रूक्षस्वेदो विधातव्यो वालुकापुटकैस्तथा ।
उपनाहाश्च कर्त्तव्यास्तेऽपि स्नेहविवर्जिता ॥
शठीशुंठ्यभया चोग्रा देवदारु वृषामृता ।
कषायमामवातस्य पाचन रूक्षभोजनम् ॥
चित्रक कटुका पाठा कलिंगातिविषामृताः ।
देवदारुवचामुस्तानागरातिविषाभया ॥
पिबेदुष्णांबुना नित्यमामवातस्य भेषजम् ।
रास्नागुडूचीमेरंडदेवदारुमहौषधम् ॥
पिबेत्सर्वांगगे वाते सामे सध्यास्थिमज्जगे ।
इति रास्नापंचकम् ॥

रास्नामृतारग्वधदेवदारुत्रिकंटकैरंडपुनर्नवानाम् ॥
क्वाथंपिबेन्नागरचूर्णमिश्रजघोरुपृष्ठत्रिकपार्श्वशूली ॥
शुंठीगोक्षुरक क्वाथः प्रातः प्रातर्निषेवितः ।

आमवाते कटीशूले पाचनो रुक्प्रणाशनः ॥
दशमूलीकषायेण पिबेद्वा नागराम्भसा ।
कुक्षिबस्तिकटीशूले तैलमेरंडसंभवम् ॥
पलं शतं रसोनस्य तिलस्य कुडव तथा ।
हिंगु त्रिकटुक क्षारौ द्वौ पंच लवणानि च ॥
शतपुष्पा तथा कुष्ठ पिप्पलीमूलचित्रकम् ।
अजमोदा जवानी च धान्यकं चापि बुद्धिमान् ।
प्रत्येकं च पलं चैषां सूक्ष्मचूर्णानि कारयेत् ।
घृतभांडे दृढे चैव स्थापयेद्दिनषोडशम् ॥
प्रक्षिप्य तैलमान च प्रस्थार्धं कांजिकस्य च ।
खादेत्कर्षप्रमाण तु तोयं मद्य पिबेदनु ॥
आमवाते तथा वाते सर्वांगैकांगसंस्थिते ।
अपस्मारेनले मदे कासश्वासगरेषु च ॥
उन्मादे वातभग्ने च शूले जंतुषु शस्यते ।
इति रसोनपिण्डः ॥
पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
पाठाविडंगद्रयवैर्हिंगुभार्ङ्गीवचान्वितैः ॥
सर्षपातिविषाजाजीरेणुकाकृष्णजीरकैः ॥
गजकृष्णाजमोदा च मूर्वाकटुकामिश्रितैः ॥
समभागैः कृतैरेतैस्त्रिफला द्विगुणा भवेत् ।
त्रिफलासहितैः सर्वैः समो देयस्तु गुग्गुलु. ॥
एतच्चर्णीकृतं सर्वं मधुना च परिप्लुतम् ।

योगराजमिमं विद्वान्भक्षयेत्प्रातरुत्थितः ॥
अर्शांसि वातगुल्मं च पाण्डुरोगमरोचकम् ।
नाभिशूलमुदावर्तान्प्रमेहान्वातशोणितान् ॥
कुष्ठं क्षयमपस्मारं हृद्रोगं ग्रहणीगदम् ।
महातममग्निसादं च कासं श्वासं भगंदरम् ॥
रेतोदोषाश्च ये पुंसां योनिदोषाश्च योषिताम् ।
निहन्यादाशु तान्सर्वान्दुर्निवारान्न संशयः ॥
एष निष्परिहारस्तु पानभोजनमैथुने ।
सतताभ्यासयोगेन वलीपलितनाशनः ॥

इति योगराजो गुग्गुलुः ।

अमृतायाः कषायेण कल्केन च महौषधम् ।
मृद्वग्निना घृतं सिद्धं वातरक्तहरं परम् ॥
आमवाताद्यवातादीन्क्रिमिदुष्टव्रणानपि ।
अर्शांसि गुल्मांश्च तथा नाशयेदाशु योजितम् ॥

इति गुडूचीघृतम् ॥

इति श्रीतोमरवंशावतंसारिपुभूतभैरवश्रीवीरसिंहदेवविरचिते वीरसिंहावलोके ज्योतिश्शास्त्रकर्मविपाकायुर्वेदमयोगे आमवाताधिकारः ॥

---

अथ शूलरोगस्य ज्योतिश्शास्त्राभिप्रायेण हेतुं प्रतीकारं च व्याख्यास्यामः ।

शूलाद्विकलशरीरं मातुरनर्थावहं प्रियं दक्षम् ॥
क्षितितनयवीक्षिततनुर्जनयति चन्द्रो नरं कुलीरगृहे ।

अन्यच्च ॥

शिरसो रुग्गलरोगः श्वित्रं सहसा ज्वरः शूलः ।
तपनदशायां शुक्रे देशत्यागो भवेदरिभिः ॥

कर्कांशस्थितभूसुतावलोकिताष्टमस्थानस्थितचंद्रजनितशूलोपशांतये पूर्वोक्तमेव चंद्रप्रीतये सकलमपि कुर्यात् । किंच तपनदशायां शुक्रजनितशूलोपशांतये शुक्रप्रीतये प्रागुक्तमेव जपहोमदानादिकं कुर्यात् ।

अथ शूलरोगस्य कर्मविपाकमाह । याचितारमकिंचन ब्राह्मणं श्रुताध्ययनसंपन्नातिशांतमाहूय यो न प्रयच्छति स जठरशूलरोगवान्भवति कदाचिदाध्मानी भवति स कृच्छ्रातिकृच्छ्रचांद्रायणानि कुर्यात् वस्त्राणि दद्यात् अन्यच्च संध्योपासनादिभ्रष्टोऽन्यजन्मनि बास्तिशूली भवति । स्वर्णद्वादशक दद्यात् यथाविभवं ब्राह्मणभोजनं हिरण्य च दद्यात् । यो मातापितृभ्यां प्रवृत्त मैथुनं शृणोति स कर्णशूली भवति पश्चाद्बधिरः किंचिदेव शृणोति वा । तद्विष्णोरित्यष्टोत्तरायुतं जपेत् पुरुषसूक्तं वा । अपामार्जनस्तोत्राभिमंत्रित जलं पिबेत् ।

शूलेन शूली भवति मनुष्याणां च हिंसकः ।
पलेनाथ तदर्द्धेन तदर्द्धार्द्धेन वा कृतम् ॥
सौवर्णं राजतं वापि शूलं कुर्यात्प्रयत्नतः ।
ताम्रेण वाऽयसा वापि खादिरेणापि शक्तितः ।
रक्तवस्त्रेण संवेष्ट्य तिलानामुपरि न्यसेत् ॥

तिलाना तु परीमाणं द्रोणं वापि तदर्धकम् ।
तदर्धं वा यथाशक्त्या पूजयेद्ब्राह्मण शुचि· ॥
अर्घ्यादिमूलमंत्रेण षोडशैवोपचारकान् ।
क्रियाविद्ब्राह्मणः पूजां कृत्वा होमं प्रकल्पयेत् ॥
शूलस्य दक्षिणे पार्श्वे स्थंडिलाग्निः प्रणीयते ।
समिदाज्यतिलान्हुत्वा पुरुष एवेति मंत्रत· ॥
त्र्यंबकेणाज्यहोमं च विद्वांस्तत्र प्रकल्पयेत् ।
यत इंद्रभयामह इत्यनेन तिलान्पुन· ॥

ततः शांति प्रकल्पयेत् ।

तेनोदकेन चासिंचेच्छूलिनं रोगिणं नरम् ।
ततो हुतवते शूल सपूज्यैव स्वशक्तित· ॥
दद्यात्सदक्षिणं तं तु प्राङ्मुखाय उदङ्मुखः ।
मंत्रेणानेन परया भक्त्या सद्यो हरिं स्मरेत् ॥
त्व शूल ब्रह्मणा सृष्ट त्व पुरत्रयनाशन ।
दैत्यानां दानवाना च शकरस्यायुधं तथा ॥
कुक्षिस्थमथपार्श्वस्थमथ वा पृष्ठसगतम् ।
शूल विनाशय त्व मे महादेवेन धारित ॥

इति दानमत्र· ॥

तत· स्नात्वा तु भुंजीत ब्राह्मणैर्बंधुभि· सह ।
शूलहिंसासमुत्पन्नां वेदनामाशु नाशयेत् ॥
इति शूलरोगहर· त्रिशूलविधि· ॥

अथ क्रमप्राप्तस्य शूलरोगस्य सनिदानं चिकित्सितमाह रुग्विनिश्चयात् ।

दोषैः पृथक्समस्तामद्वन्द्वैः शूलोऽष्टधा भवेत् ।
सर्वेष्वेतेषु शूलेषु प्रायेण पवनः प्रभुः ॥

व्यायामयानादतिमैथुनाच्चप्रजागराच्छीतजलातिपानात् ।
कलायमुद्गाढकिकोरदूषादत्यर्थरूक्षाध्यशनाभिघातात् ॥
कषायतिक्तातिविरूढजान्नविरुद्धवल्लूरकशुष्कशाकात् ।
विट्शुक्रमूत्रानिलवेगरोधाच्छोकोपवासादतिहास्यभावात् ॥
वायुःप्रवृद्धोजनयेद्धि शूलं हृत्पार्श्वपृष्ठत्रिकबस्तिदेशे ।
जीर्णे प्रदोषे च घनागमे च शीते च कोपं समुपैति गाढम् ॥

अथ वृंदसग्रहात् ।

वमनं लघनं स्वेदः पाचनं फलवर्तय ।
क्षारचूर्णानि घुटिकाः शस्यते शूलशांतये ॥
आशुकारी हि पवनस्तस्मात्तं परिपाचयेत् ।
वातस्यानुजयेत्पित्तं पित्तस्यानुजयेत्कफम् ।
ज्ञात्वा तु वातशूलं हि स्नेहस्वेदैरुपाचरेत् ॥
पायसैः कृसरापिण्डैः स्निग्धैर्वा सिकतोत्कटैः ।
तस्य शूलाभिपन्नस्य स्वेद एव सुखावहः ॥
वातात्मकं हन्त्यचिरेण शूलं स्नेहेन युक्तस्तु कुलत्थयूषः ।
ससैंधवव्योषयुतः सलावः सहिंगुसौवर्चलदाडिमाढ्यः ॥
तुंबुरूण्यभया हिंगु पौष्करं लवणत्रयम् ।

पिबेदुष्णांबुना वापि शूलगुल्मापतन्त्रके ॥
विश्वमेरंडतैलं वा क्राथयित्वा जलं पिबेत् ।
हिंगु सौवर्चलोपेत सद्य शूलनिवारणम् ॥
हिंगुपुष्करमूलाभ्यां हिंगुसौवर्चलेन वा ।
विश्वैरंडयवक्राथः सद्यः शूलनिवारणः ॥
गुडं शाल्यिर्यवक्षार सर्पि' पान विरेचनम् ।
जांगलानि च मांसान भेषज पित्तशूलिनः ॥
वामयेत्पित्तशूलार्त पटोलेक्षुरसादिभिः ।
पश्चाद्विरेचयेत्सम्यक् पित्तहृद्भिर्विरेचनैः ॥
शीतावगाढाः पुलिनाः सवाता
भांडानि कांस्यानि जलप्लुतानि ।
अन्यानि शस्तानि च शीतलानि
सचन्दनार्द्राश्च करा' सुशीतलाः ॥
मणिराजतताम्राणि भाजनानि च सर्वशः ।
परिपूर्णानि तोयेन शूलार्त्युपरि निक्षिपेत् ॥
विरेचनं पित्तहरं च शस्तं
रसाश्च शस्ता शशलावकानाम् ।
संतर्पण लाजमधूपपन्न
योगाः सुशीता मधुसम्प्रयुक्ता· ॥
शतावरीक्षुपष्टयाह्ववाव्याकुलशगोक्षुरैः ।
शृतं शीत पिबेत्तोयं सगुडक्षौद्रशर्करम् ॥
पित्तासृग्दाहशूलघ्न सद्यो ग्रहज्वरापहम् ।

धान्या रस विदार्या वा त्रायती गोस्तनांबुना ।
पिवेत्सशर्करं सद्य पित्तशूलनिपूदनम् ।
लवणत्रयसंयुक्तं पञ्चकोल सरामठम् ॥
कोष्णेन चाम्बुना पीत कफशूल प्रणाशयेत् ।
विल्वमूलमथैरण्डाचित्रकं विश्वभेपजम् ॥
हिंगुसैन्धवसंयुक्त कफशूलहरं परम् ।
मातुलिंगरसो वापि शिग्रुक्वाथस्तथापरः ॥
सक्षारो मधुना पीत पार्श्वहृद्वस्तिशूलनुत् ।
श्लेष्मशूलहरा पेया पचकोलेन साधिता ॥
विदारीदाडिमरसः सव्योपो लवणान्वितः ।
क्षौद्रयुक्तो जयत्याशु शूलं दोपत्रयोद्भवम् ॥

एरंडबिल्वबृहतीद्वयमातुलिंग-
पापाणभित्त्रिकटुमूलकृतः कपायः ।
सक्षारहिंगुलवणोरुबुतैलमिश्र-
श्रोण्यंसमेढ्रहृदयस्तनरुक्प्रशान्त्यै ॥

इत्येरंडसप्तकम् ।

हिंगु सौवर्चलं पाठा द्वौ क्षारौ लवणत्रयम् ।
चूर्णीकृत्य प्रदातव्य भिपजा लशुनेन च ॥
हृच्छूले पार्श्वशूले च मन्यास्तंभे च दारुणे ।
प्रयोज्यं कुक्षिशूले तु कोष्ठशूले विशेपत ॥
व्यायामं मैथुनं मद्यं लवणं कटुकानि च ।
वेगरोधं शुक्ररोधं शूली जह्याच्च वैदलम् ॥

वेदना च तृषा मूर्च्छा सानाहा वेदनारुचिः ।
कासः श्वासश्च हिक्का च शूलस्योपद्रवाः स्मृताः॥

अथ क्रमप्राप्तस्य परिणामशूलस्य सनिदानं चिकित्सितमाह–

भुक्ते जीर्यति यच्छूलं तदेव परिणामजम् ।
तस्य लक्षणमित्येतत्समासेनाभिधीयते ॥
आध्मानाटोपविण्मूत्रविबंधारतिवेपनैः ।
स्निग्धोपशमनोपायं वातिकं तद्वदेद्भिषक् ॥
स्वैर्निदानैः प्रकुपितो वायुः सन्निहितस्तथा ।
कफपित्ते समावृत्य शूलकारी भवेद्बली ॥
लंघनं प्रथमं कुर्याद्वमनं सविरेचनम् ।
वास्तिकर्मपरं चात्र पक्तिशूलोपशांतये ॥
कृष्णाऽभयालोहचूर्णं लिह्यात्समधुशर्करम् ।
परिणामभवं शूलं सद्यो हंति सुदारुणम् ॥
पथ्यालोहरजःशुंठीचूर्णं माक्षिकसर्पिषा ।
परिणामरुजं हंति वातपित्तकफात्मिकाम् ॥
त्रिफलालोहचूर्णं तु यष्टीमधुकमेव च ।
मधुसर्पिर्युतं लिह्याच्छूलं हंति त्रिदोषजम् ।
सपिप्पलीगुडं सर्पिः पचेत्क्षीरं चतुर्गुणम् ।
ज्वरं पित्तं निहंत्याशु शूलं च परिणामजम् ॥

इति श्रीतोमरवंशावतंसरिपुभूतभैरवश्रीवीरसिंहदेवकृते वीरसिंहावलोके परिणामशूलाधिकारः ॥

अथेदानीम् आध्मानोदावर्तरोगयोर्वातप्राबल्यात् साकल्येनैव ज्योतिश्शास्त्राभिप्रायेण प्रकारोऽभिद्योत्यते तथोक्तम् ।

मध्ये पापग्रहयोश्चंद्रे मदनस्थितेर्कजे जतोः ॥
श्वासक्षयविद्रधिना गुल्मप्लीहादिपीडितः ॥

अत्रादिशब्देन आध्मानोदावर्तरोगावपि गृह्येते । ततः पापग्रहद्वयांतर्वर्तिचंद्रजनिताध्मानोदावर्तरोगोपशांतये पूर्वोक्तमेव जपहोमदानादि कुर्यात् ॥ अथाध्मानोदावर्तरोगयो कर्मविपाकमाह तत्प्रतीकारं च । देवद्विजक्षेत्रतडागवल्मीककूपादीनां यो भेद करोति तं वायसो नाम ग्रहो गृह्णाति । तत्क्षणमाध्मानी उदावर्ती ज्वरी अरुचिमान् पाददाही च जायते । अस्य प्रायश्चित्तं कृच्छ्रमाचरेत् । व्याहृतिभिराज्येन जुहुयात् हिरण्यं च दद्यात् । श्वेतकृष्णपीताद्यनेकवर्णध्वजादिभिर्दीपादिभिः सह प्रदोपे चतुष्पथे बलिमंत्रेण निदध्यात् । अनेन मंत्रेण—

प्रगृह्णीष्व बलिं चेम वायसाख्य महाग्रह ।
आतुरस्य सुखं सिद्धिं प्रयच्छ त्वं महाबल ॥
इत्याध्मानोदावर्त्तरोगहरकर्मविपाकविधिः ॥

अथ क्रमप्राप्तस्योदावर्तरोगस्य सनिदानं चिकित्सितमाह रुग्विनिश्चयात् ॥

वातविण्मूत्रजृंभाश्रुक्षवोद्गारवमींद्रियैः ।
क्षुत्तृष्णोच्छ्वासनिद्राणां धृत्योदावर्त्तसंभवः ॥

वातमूत्रपुरीषाणां सगोध्मान क्रमो रुजः ।
जठरे वातजाश्चान्ये रोगाः स्युर्वातनिग्रहात् ।
आमं सकृद्वा निचित क्रमेण
भूयो निबद्धं विगुणानिलेन ।
प्रवर्तमानं न यथास्त्रमेनं
विकारमानाहमुदाहरति ॥

बृंदसंग्रहात् ।

हरीतकी यवक्षार' फलिनी त्रिफला तथा ।
चूर्णयेत्सर्षिपा पीतमुदावर्तविनाशनम् ॥
हिंगु कुष्टं वचा सर्जिविड चेति द्विरुत्तरम् ।
पीत मद्येन तच्चूर्णमुदावर्त्तहरं परम् ॥
मदन पिप्पलीमूल कुष्टं गौराश्च सर्षपा· ।
गुडक्षारसमायुक्ता फलवर्त्तिं' प्रशस्यते ॥
सुरां सौवर्चलवता मूत्रे त्वभिहिते पिबेत् ।
पंचमूलीश्रित क्षीरं द्राक्षारसमथापि वा ॥
मूत्रकृच्छ्राश्मरीविधे प्रयुंजीत भिपक्सदा ।
स्नेहस्वेदैरुदावर्त्तं जृंभण समुपाचरेत् ॥
अश्रमोक्षोऽस्रजे कार्यं स्निग्धस्वेदश्च यत्नतः ।
क्षवजे मूत्रवर्त्यां च घ्राणस्थेनानयेत्क्षवम् ॥
उद्गारजे क्रमश्चात्र स्नैहिक धूममाचरेत् ।
छर्दिजाते यथादोपं तैलस्नेहादिभिर्जयेत् ॥
वस्तिशुद्धकरं वापि चतुर्गुणजल पयः ।

आवारिनाशात्कथितं पीतं तच्च प्रकामतः ॥
रमयेयुः प्रिया नार्यः शुक्रोदावर्तिनं नरम् ।
अत्राभ्यंगावगाहाश्च मदिराश्चरणायुधाः ।
शालिः पयोनिरूहाश्च हन्ति मैथुनमेव च ॥
क्षुद्विघाते हितं स्निग्धमुष्णमल्पं च भोजनम् ।
तृष्णाघाते पिबेन्मद्यं यवागूं वा सुशीतलाम् ।
निद्राघाते पिबेत्क्षीरं श्रोत्रयाश्चाद्भुताः कथाः ।
आनाहे तु प्रयुंजीत उदावर्तहरक्रियाम् ॥
द्विरुत्तरं हिंगुवचा च कुष्टं सुवर्चिका चैव विडंगचूर्णम् ।
सुखांबुनानाहविषूचिकार्तिहृद्रोगगुल्मोर्ध्वसमीरणघ्नम् ।
हिंगूग्रगंधा विडशुंठ्यजाजी हरीतकी पुष्करमूलकुष्टम् ।
भागोत्तरं चूर्णितमेतदिष्ट गुल्मोदरानाहविषूचिकासु ॥
राजिधूमविडव्योपगुचपत्रविपाचितम् ।
गुदेऽङ्गुष्ठसमावर्तिर्विबंधानाहशूलनुत् ॥
स्तंभ'कटीपृष्ठपुरीपमूत्रैः शूलोऽथ मूर्छा शकृतश्च छर्दिः ।
श्वासश्चपकाशयजे भवंति तथालसोक्तानिच लक्षणानि ॥
तृष्णाछर्दिपरिक्लिन्नक्षीणं शूलैरुपद्रुतम् ।
सकृद्वमंत मतिमानुदावर्तिनमुत्सृजेत् ॥
इति श्रीतोमरवंशा० वीरसिंहावलोके उदावर्ताधिकारः ॥

---

अथ गुल्मरोगस्य ज्योतिश्शास्त्राभिप्रायेण प्रतीकारो लिख्यते । यदुक्तं जातके–

मध्ये पापग्रहयोश्चंद्रे मदनस्थितेऽब्जे जंतो । 
श्वासक्षयविद्रधिभिर्गुल्मप्लीहादिपीडितः स नरः॥

अत्र पापद्वयाभ्यंतरवर्तिचंद्रजनितगुल्मरोगोपशमनाय पूर्वोक्तमेन कुर्यात् तेनोपशाम्यति ।

अथ गुल्मरोगस्य कर्मविपाके प्रकारमाह तत्प्रतीकारं च यथाक्रमम्। गुरुप्रत्यर्थी वातगुल्मवान्भवति। अस्य प्रतिक्रिया वातगुल्मवान्यदि भवति तर्हि मासमेकं पयोव्रतमाचरेत् । मुंचामीत्यनेन सूक्तेन प्रत्यृचं चरुघृताभ्यामयुतं जुहुयात्। वात आवातुभेषजमिति जपेत्। अन्नदानं च कुर्यात् । प्रकारांतरमपि दर्शयति पद्मपुराणे गुल्मी स्यादत्यजागमने । बोधायनः–

सौवर्णं राजतं ताम्रं कारयेत्कांस्यतोऽपि वा ।
तथार्कमूलकाष्ठेन विघ्नेशं कल्पयेन्नरः ॥
पुष्करं कारयेद्धैमं सौवर्णं लोचनद्वयम् ।
आखुं प्रकल्पयेत्तस्य यथा देवविनिर्मितम् ॥
नागयज्ञोपवीतं च कल्पयेत्तस्य गुल्मवान् ।
अनंतरं सुवासोभिश्चंदनागरुधूपितम् ॥
सहिरण्यं ब्राह्मणाय स्वशक्त्या पूजिताय च ।
कृतहोमाय शांताय सर्वशास्त्रार्थवेदिने॥
मंत्रेणानेन विधिवद्दक्षिणाभिमुखाय च ।
विनायक गणेश त्वं सर्वदेवनमस्कृत ॥
पार्वतीनंदन श्रेष्ठ मम गुल्मं विनाशय ।
इति दानमंत्रः ॥

कृतहोमने दानेन नीरोगो जायते नरः ॥
इति गुल्मरोगहरविनायकदानविधिः।

अथ क्रमप्राप्तस्य गुल्मरोगस्य सनिदान चिकित्सितमाह रुग्विनिश्चयात्–

दुष्टा वातादयोऽत्यर्थमिथ्याहारविहारतः।
कुर्वंति पंचधा गुल्मं कोष्ठांतर्ग्रंथिरूपिणम् ॥
तस्य पंचविधं स्थानं पार्श्वहृन्नाभिवस्तयः।
हृद्वस्त्योरन्तरे ग्रंथिः सचारी यदि वाऽचलः ॥
वृत्तश्चयोपचयवान्स गुल्म इति कीर्त्तितः।
सव्यस्तैर्जायते दोषैः समस्तैरपि वोच्छ्रितैः ॥
पुरुषाणां तथा स्त्रीणां ज्ञेयो रक्तेन चादरः ॥

उद्गारबाहुल्यपुरीषबंधतृप्त्यक्षमत्वांत्रविकूजनानि।
आटोपमाध्मानमपक्तिशूलमासन्नगुलमस्य वदंति चिह्नम् ॥

अरुचिः कृच्छ्रविण्मूत्रं मारुतान्त्रविकूजनम्।
आनाहं चोर्ध्ववात च सर्वगुल्मेषु लक्षयेत्।

बृंदसंग्रहात्।

लंघन दीपनं स्निग्धमुष्ण वातानुलोमनम्।
बृंहणं च भवेदन्नं तद्धितं सर्वगुल्मिनाम् ॥
सौवर्चलं शृगवेरं दाडिमं चाम्लवेतसम्।
श्वासहृद्रोगशमनं स्यादेतद्धिगुपंचकम् ॥
सर्ज्जिकाकुष्ठसहितः क्षार· केतकिजोऽपि वा।

पीतस्तैलेन शमयेद्गुल्मं पवनसंभवम् ॥
सुखोष्णो जांगलरसः सुस्निग्धो व्यक्तसैंधवः ।
कटुत्रिकसमायुक्तो हितः पानेषु गुल्मिनाम् ॥
पिबेदेरंडतैलेन वारुणीं मंडमिश्रिताम् ।
तदेव तैलं पयसा वातगुल्मी पिबेन्नरः ॥
यदि कुप्यति वा पित्तं विरेकस्तत्र भेषजम् ।
दोषघ्नैरपि शीतेषु गुल्मशोणितमोक्षणम् ॥
काकोल्यादिसुसिद्धेन सर्पिषा पित्तगुल्मिनाम् ।
स्नेहितं संसृत पश्चाद्योजयेद्बस्तिकर्मणा ।
स्नेहोपनाहनस्वेदस्तीक्ष्णस्रसनवस्तिभिः ॥
योगैश्च वातगुल्मोक्तैः श्लेष्मगुल्ममुपाचरेत् ।
पंचमूलीशृतं तोयं पुराण वारुणीरसम् ।
कफगुल्मी पिबेत्काले जीर्णमाध्वीकमेव च ॥
यवानीचूर्णितं तक्रं विडेन लवणीकृतम् ।
पिबेत्सदीपनं हृद्यं वातवर्चोऽनुलोमनम् ।
त्रिफला त्रिवृता दंती दशमूलं पलोन्मितम् ॥
जले चतुर्गुणे पक्त्वा चतुर्भागस्थिते रसे ।
सर्पिरेरंडजं तैलं क्षीरं चैकत्र साधयेत् ॥
संसिद्धो मिश्रिकस्नेहः सक्षौद्रं कफगुल्मनुत् ।
कफवातविकारेषु कुष्ठप्लीहोदरेषु च ॥
प्रयोज्यो मिश्रिकस्नेहो योनिशूलेषु चाधिकम् ।
इति मिश्रिकस्नेहः ।

व्यामिश्रदोषे व्यामिश्र एष एव क्रियाक्रमः।
सन्निपातोत्थिते दोषे त्रिदोषघ्नो विधिर्हितः॥
पूतीकपत्रगजचिर्भटचव्यवह्नि-
व्योषं च संस्तरयुतं लवणोपधानम्।
दध्ना विचूर्ण्य दधिमस्तुयुतं प्रयोज्यं
गुल्मोदरश्वयथुपांडुगदोद्भवेषु॥
वचा हरितकी हिंगु सैंधवं चाम्लवेतसम्।
यवक्षारं यवानी च पिबेदुष्णेन वारिणा॥
एतद्धि गुल्मनिचयं सशूलं सपरिग्रहम्।
भिनत्ति सप्तरात्रेण वह्नेर्दीप्तिकरं परम्॥
नादेयीकुटजार्कशिग्रुबृहतीत्रिग्बिल्वभल्लातक-
व्याघ्रीकिंशुकपारिभद्रकजटापामार्गनीपाग्निकान्।
वासामुष्ककपाटला सलवणा दग्ध्वा जले पाचितं
हिंग्वादिप्रतिवापमेतदुचितं गुल्मोदराष्ठीलिषु॥
इति नादेयीक्षारः।
वल्लूर मूलक मत्स्यान् शुष्कशाकानि वैदलम्।
न खादेद्वालुकं गुल्मी मधुराणि फलानि च॥
विडंगाजातिकाचव्यात्रिफलाव्योषचित्रकैः।
द्वौ क्षारौ पंचलवणं ग्रंथिक पुष्करं सटी॥
यवान्यः कुंचिका कुष्ठ विशाला धान्यकं वचा।
शतपुष्पाश्वगंधा च हेमक्षीरी सनीलिका॥
हपुषा त्रिवृता दंती सताला द्विगुणोत्तरा।

चूर्ण नाराचकं पीत मद्यमांसाम्लकांजिकैः ॥
गुल्मार्शोग्रहणीरोगश्वासकासोदरं जयेत् ।
इति श्रीतोमर०वीरसिंहावलोके गुल्माधिकारः ।

---

अथ ज्योतिःशास्त्राभिप्रायेण हृद्रोगस्य हेतुमाह तत्प्रतीकारं च । यथोक्तं जातके ।

पीडितहृदयो हिबुके निर्वाहनबांधवार्थमतिसौख्यः ।
बाल्ये व्याधितदेहो नखरोमधुरो भवेत्सौरेः ।

अन्यच्च ।

हृद्रोगी बहुपुत्र सुखान्वितो दृढविरोधरोपश्च ।
परदाराणां सुभगः कर्मसु विनिश्चितो भवति॥

कुंभधरेऽर्के जात इति शेषः । अथ चतुर्थस्थानस्थितस्य शनिजनितहृद्रोगोपशांतये पूर्वोक्तमेव शनिप्रीतये जपहोमादि विधान विदध्यात् । तेनोपशांतिर्भवति ।

अथ हृद्रोगस्य कर्मविपाके प्रकारमाह तत्प्रतीकारं च । यथोक्तम् । परहृदयपीडाकरो हृद्रोगी च जायते । तस्य प्रायश्चित्तमेकं प्राजापत्यं कुर्यात् । तदशक्तौ गां सुवर्ण च दद्यात् । उद्यन्नद्येति सूक्त जपेत् । तिलाज्येन च जुहुयात् । सहस्रनामस्तोत्रं जपेत् । नामत्रयं वा जपेत् कूष्मांडहोम च कुर्यात् ।

इति हृद्रोगहरः कर्मविपाकप्रकारः ।

अथ क्रमप्राप्तस्य हृद्रोगस्य सनिदान चिकित्सितमाह रुग्विनिश्चयात् ।

अत्युष्णगुर्वन्नकषायतिक्तैः श्रमाभिघाताध्यशनप्रसंगैः ।
संचिंतनैर्वेगविधारणैश्च हृदामयः पंचविधः प्रदिष्टः ॥

शोषयित्वा रसं दोषा विगुणा हृदयं गताः ।
हृदि बाधां प्रकुर्वंति हृद्रोगं तं प्रचक्षते ॥
वातोपसृष्टे हृदये वामयेत्स्निग्धमातुरम् ।
द्विपंचमूलीक्वाथेन सस्नेहलवणेन च ॥
तगरं वा पिबेदुष्णं कषायं वाग्निवर्द्धनम् ॥
कासश्वासानिलहरं शूलहृद्रोगनाशनम् ॥
श्रीपर्णीमधुकक्षौद्रसितागुडजलैर्वमेत् ।
पित्तोपसृष्टे हृदये वमेत्त मधुरैः शृतम् ॥

शीताः प्रदेहाः परिषेचणानि तथा विरेको हृदि पित्तदुष्टे ।
द्राक्षासिताक्षौद्रपरूषकैश्च शुद्धेथ पित्तापहमन्नपानम् ॥
घृतेन दुग्धेन गुडांभसावा पिबंति चूर्णं ककुभत्वचो ये ।
हृद्रोगजीर्णज्वररक्तपित्तं हत्वा भवेयुश्चिरजीविनरस्ते ॥

अर्जुनस्य त्वचा सिद्धं क्षीरं योज्यं हृदामये ॥
वचाहिंगुकषायाभ्यां वाते हृदि कफोत्थिते ।
वातहृद्रोगहृच्चूर्णं पिप्पल्यादि च पाचयेत् ॥
चूर्णं पुष्करजं लिह्यान्माक्षिकेण समायुतम् ।
हृच्छूलश्वासकासघ्नं ककुभस्य च वल्कलम् ॥

हिंगूग्रगधाविडशुंठिकृष्णाकुष्ठाभयाचित्रकयावशूकम् ।
पिबेत्ससौवर्चलपुष्कराढ्यं यवांभसा शूलहृदामयघ्नम् ।

कृमिजे च पिबेन्मूत्रं विडंगाभयसंयुतम् ॥
हृदि स्थिताः पतंत्येवं मध्यस्थाः कृमयो नृणाम् ।
पार्थस्य कल्केन रसेन सिद्धं शस्तं घृतं सर्वहृदामयेषु ॥

इति वीरसिंहावलोके हृद्रोगाधिकारः ।

अथ मूत्रकृच्छ्ररोगस्य जातकाभिप्रायेण अभिप्रायोऽभिव्यज्यते तत्प्रतीकारश्च । यदुक्तम् ॥

जन्मकाले यदा यस्य स्मरे भवति भास्करिः ।
राहुदृष्टः प्रकुरुते मूत्रकृच्छ्रादिका रुजः ॥

सप्तमस्थानस्थितराहुदृष्टशनिजनितरोगोपशांतये शनिप्रीतये पूर्वोक्तेनैव विधिना जपहोमदानादिकं कुर्यात् ।

इदानीं मूत्रकृच्छ्ररोगस्य कर्मविपाकप्रकारमाह तत्प्रतिकारं च । गुरुणा सार्द्धं सततं मत्सरकृत् स्त्रीदिवागामी मूत्रकृच्छ्रवान्भवति गुरुतल्पातिदेशप्रायश्चित्तं कुर्यात् । अन्यच्च वायुपुराणे । 'सुरापो मूत्रकृच्छ्री स्यात्' इति । अथाह बोधायन' ।

सौवर्णं कारयेत्पद्मं पलेनार्द्धपलेन वा ।
यथावन्मतिमान् कुर्यात्पद्ममष्टदलं शुभम् ॥
वित्तशाठ्यं न कुर्वीत भवेन्निष्फलमन्यथा ।
द्रोणे तिलाढके वापि ताम्रपात्रं जलान्वितम् ॥
तस्य मध्ये तु तत्पद्मं विदध्यात्कुंकुमान्वितम् ।
ब्राह्मणं श्रुतिसंपन्नं दरिद्रं चाग्निहोत्रिणम् ॥
आहूय गंधमाल्याद्यैर्विधिना चातिभक्तित. ।

ततः स्वर्णमयं पद्मं दद्यान्मन्त्रेण संयुतम् ॥
भगः पूषा पतंगोऽसौ द्वादशात्मा त्रयीतनुः।
पद्मेनानेन दत्तेन प्रीतो भवतु भास्करः ॥
इतिदानमंत्रः।
कृतेनानेन मनुजो मूत्रकृच्छ्रात्प्रमुच्यते।
मूत्रकृच्छ्रातुरस्तस्मादेतत्कुर्यात्प्रयत्नतः।
इति मूत्रकृच्छ्रहरस्तिलपद्मदानविधिः ॥

अथ क्रमप्राप्तस्य मूत्रकृच्छ्ररोगस्य सनिदानं चिकित्सितमाह—रुग्विनिश्चयात्।

व्यायामतीक्ष्णौषधरूक्षमद्य-
प्रसंगनित्यद्रुतपृष्ठयानात्।
आनूपमत्स्याध्यशनादजीर्णात्-
स्युर्मूत्रकृच्छ्राणि नृणां तथाष्टौ ॥
पृथङ्मला वै कुपिता निदानैः
सर्वेऽथवा कोपमुपेत्य बस्तौ।
मूत्रस्य मार्गं परिपीडयंति
यदा तदा मूत्रयतीह कृच्छ्रात् ॥
अश्मरीशांतिविधयो य उक्ताः प्रसमीक्ष्य तान्।
यथायोगं प्रयुंजीत स्नेहादिमपि च क्रमम् ॥
अभ्यंजनस्नेहनिरूहबस्तिस्वेदोपनाहोत्तरबस्तिसेकान्।
स्थिरादिभिर्वातहरैश्च सिद्धान्दद्याद्रसांश्चानिलमूत्रकृच्छ्रे।
अमृतां नागरं धात्रीं वाजिगंधां त्रिकंटकम्।
प्रपिबेद्वातरोगार्त्तः शूलवान्मूत्रकृच्छ्रवान् ॥

कृमिजे च पिबेन्मूत्र विडगाभयसंयुतम् ॥
हृदि स्थिता पतंत्येवं मध्यस्थाः कृमयो नृणाम् ।
पार्थस्य कल्केन रसेन सिद्ध शस्त घृत सर्वहृदामयेषु ॥
इति वीरसिंहावलोके हृद्रोगाधिकार· ।

अथ मूत्रकृच्छ्ररोगस्य जातकाभिप्रायेण अभिप्रायोऽभिव्यज्यते तत्प्रतीकारश्च । यदुक्तम् ॥

जन्मकाले यदा यस्य स्मरे भवति भास्करि· ।
राहुदृष्टः प्रकुरुते मूत्रकृच्छ्रादिका रुजः ॥

सप्तमस्थानस्थितराहुदृष्टशनिजनितरोगोपशांतये शनिप्रीतये पूर्वोक्तेनैव विधिना जपहोमदानादिकं कुर्यात् ।

इदानीं मूत्रकृच्छ्ररोगस्य कर्मविपाकप्रकारमाह तत्प्रतिकारं च । गुरुणा सार्द्धं सततं मत्सरकृत् स्त्रीदिवागामी मूत्रकृच्छ्रवान्भवति गुरुतल्पातिदेशप्रायश्चित्तं कुर्यात् । अन्यच्च वायुपुराणे । 'सुरापो मूत्रकृच्छ्री स्यात् 'इति । अथाह बोधायन· ।

सौवर्णं कारयेत्पद्मं पलेनार्द्धपलेन वा ।
यथावन्मतिमान् कुर्यात्पद्ममष्टदलं शुभम् ॥
वित्तशाठ्यं न कुर्वीत भवेन्निष्फलमन्यथा ।
द्रोणे तिलाढके वापि ताम्रपात्र जलान्वितम् ॥
तस्य मध्ये तु तत्पद्मं विदध्यात्कुंकुमान्वितम् ।
ब्राह्मण श्रुतिसंपन्न दरिद्रं चाग्निहोत्रिणम् ॥
आहूय गंधमाल्याद्यैर्विधिना चातिभक्तितः ।

ततः स्वर्णमयं पद्मं दद्यान्मन्त्रेण संयुतम् ॥
भगः पूषा पतंगोऽसौ द्वादशात्मा त्रयीतनुः ।
पद्मेनानेन दत्तेन प्रीतो भवतु भास्करः ॥

इतिदानमंत्रः ।

कृतेनानेन मनुजो मूत्रकृच्छ्रात्प्रमुच्यते ।
मूत्रकृच्छ्रातुरस्तस्मादेतत्कुर्यात्प्रयत्नतः ।

इति मूत्रकृच्छ्रहरस्तिलपद्मदानविधिः ॥

अथ क्रमप्राप्तस्य मूत्रकृच्छ्ररोगस्य सनिदानं चिकित्सितमाह-रुग्विनिश्चयात् ।

व्यायामतीक्ष्णौषधरूक्षमद्य-
प्रसगनित्यद्रुतपृष्ठयानात् ।
आनूपमत्स्याध्यशनादजीर्णात्-
स्युर्मूत्रकृच्छ्राणि नृणा तथाष्टौ ॥
पृथङ्मला वै कुपिता निदानैः
सर्वेऽथवा कोपमुपेत्य बस्तौ ।
मूत्रस्य मार्गं परिपीडयति
यदा तदा मूत्रयतीह कृच्छ्रात् ॥

अश्मरीशांतिविधयो य उक्ताः प्रसमीक्ष्य तान् ।
यथायोग प्रयुंजीत स्नेहादिमपि च क्रमम् ॥

अभ्यजनस्नेहनिरूहवस्तिस्वेदोपनाहोत्तरवास्तिसेकान् ।
स्थिरादिभिर्वातहरैश्च सिद्धान्दद्याद्रसांश्चानिलमूत्रकृच्छ्रे ।

अमृता नागर धात्री वाजिगधा त्रिकंटकम् ।
प्रपिबेद्वातरोगार्त्तं शूलवान्मूत्रकृच्छ्रवान् ॥

शोकावगाहाः शिशिराः प्रदेहाः श्रेष्ठोविधिर्वस्तिपयोविरेकैः।द्राक्षाविदारीक्षुरसैर्घृतैश्च कृच्छ्रेषु पित्तप्रभवेषु कार्यः॥

कुशः काशः शरो दर्भो रजश्चेति तृणोद्भवम् ।
पित्तकृच्छ्रहर पंचमूलं वस्तिविशोधनम् ।
एतत्सिद्धं पयः पीतं मेढ्रगं हति शोणितम् ॥

हरीतकीगोक्षुरराजवृक्षपाषाणभिद्धन्वयवासकानाम् ।
क्वाथं पिबेन्माक्षिकसंप्रयुक्त कृच्छ्रे सदाहे सरुजे विबधे ॥

मूत्रेण सुरया वापि कदलीस्वरसेन वा ।
कफकृच्छ्रविनाशाय सूक्ष्म पिष्ठा त्रुटि पिबेत् ॥

तक्रेण युक्त शितिमारकस्य बीजं पिबेत्कृच्छ्रविनाशहेतोः
पिबेत्तथा तण्डुलधावनेन प्रवालचूर्णं कफमूत्रकृच्छ्री ॥

गुडेन मिश्रितं क्षीरं कदुष्णं कामतः पिबेत् ।
मूत्रकृच्छ्रेषु सर्वेषु शर्करारोगनुत्तथा ॥
यवक्षारसमायुक्त पिबेत्तक्रं च कामतः ।
मूत्रकृच्छ्रविनाशाय तथवाश्मरिनाशनम् ॥
तथापि घातजे कुर्यात्सद्यो व्रणचिकित्सितम् ॥
लेह्यं शुक्रविबन्धोत्थे शिलाजतु समाक्षिकम् ॥
एलाश्मभेदकशिलाजतुपिप्पलीनां
चूर्णानि तंडुलजलैर्लुडितानि पीत्वा ।
यद्वा गुडेन सहितान्यवलिह्य सद्य
आसन्नमृत्युरपि जीवति मूत्रकृच्छ्री ॥

सितातुल्यो यवक्षारः सर्वकृच्छ्रविनाशनः।
निदिग्धिकारसो वाथ सक्षौद्रः कृच्छ्रनाशनः।
शतावरीकाशकुशश्वदंष्ट्राविदारकेक्ष्वामलकेन सिद्धम्।
घृतं च कृच्छ्राणि निहंति सद्यःपीत कुलुत्थप्रसवैस्तुयूपैः॥

इति वीरसिंहावलोके मूत्रकृच्छ्रविनाशनाऽधिकारः॥

अथ मूत्राघातस्य सनिदान चिकित्सितमाह रुग्विनिश्चयात्—

जायंते कुपितैर्दोषैर्मूत्राघातास्त्रयोदश।
प्रायो मूत्रविघाताद्यैर्वातकुंडलिकादयः॥
रौक्ष्याद्वेगविघाताद्वा वायुर्बस्तौ सवेदनः॥
मूत्रमाविश्य चरति विगुण कुंडलीकृतः।
मूत्रमल्पाल्पमथवा सरुजं संप्रवर्तते॥
वातकुंडलिकां तां तु व्याधिं विद्यात्सुदारुणाम्।

वृंदसंग्रहात्—

पटोला यावशूकाश्च पारिभद्रा तिला अपि।
क्षारोदकेन मदिरां त्वगेलोपणसयुताम्॥
पिबेद्गुडोदकं सम्यग्लिह्याच्चैतान्पृथक्पृथक्।
त्रिफलाकल्कसंयुक्तं लवणं वापि यः पिबेत्॥
निदिग्धिकायाः स्वरसं पिबेद्वा तंडुलांबुना।
जले कुंकुमकल्कं च सक्षौद्रं भक्षितं निशि॥
सतैलं पाटलाभस्म क्षाराद्वापि परिश्रितम्।
धान्याम्लयुक्तं पीत्वैव मूत्राघाताद्विमुच्यते॥

रसं दुरालभायाश्च कषाय वासकस्य च।
त्रिकंटकैरंडशतावरीणां रसं पयो वा तृणपंचमूलैः।
गुडप्रगाढसघृतं पयो वा रोगेषु कृच्छ्रादिषु शस्तमेतत्
स्त्रीणामतिप्रसंगेन शोणित यस्य सिच्यते।
मैथुने परमस्तस्य बृंहणीयो विधिर्हित ॥
चित्रकं सारिवा चैव बला कालानुसारिवा।
द्राक्षाविशालापिप्पल्यस्तथा च त्रिफला भवेत्।
तथैव मधुकं दद्यात्पुष्पान्यामलकानि च।
घृताढक पचेदेतैः कल्कैरक्षसमन्वितैः ॥
क्षीरद्रोणे जलद्रोणे तत्सिद्धमवतारयेत्।
शीत परिश्रितं चैव शर्कराप्रस्थसयुतम् ॥
तुगाक्षीर्याश्च तत्सर्वं मतिमान्परिमिश्रयेत्।
ततो मितं पिबेत्काले यथादोष यथाबलम् ॥
वातरेताः पित्तरेताः श्लेष्मरेताश्च यो भवेत्।
रक्तरेता ग्रथिरेताः पिबेदच्छिन्नरोगताम् ॥
संजीवनं तु वृष्य च सर्पिरेतन्महागुणम्।
प्रजाहितं च धन्यं च सर्वरोगहर शिवम् ॥
सर्पिरेतत्प्रयुञ्जाना स्त्री गर्भं लभतेऽचिरात्।
असृग्दोषाश्च ये चापि योनिदोषाश्च संतताः ॥
मूत्रदोषेषु सर्वेषु कुर्यादेतच्चिकित्सितम्।
इति चरकाच्चित्रकाद्यं घृतम्।
इति वीरसिंहावलोके मूत्राघाताधिकार ।

अथ ज्योतिश्शास्त्राभिप्रायेण अश्मरीरोगस्य हेतुमाह तत्प्रतीकार च ॥

शूरं प्रमेहपीडितमश्मर्योपहतमानसं शांतम् ।
जनयति रविणा दृष्टो जीवगृहे चंद्रजः पुरुषम् ॥

गुरुगृहे वर्तमानरविदृष्टबुधजनिताश्मरीरोगप्रतीकाराय बुधप्रीतये पूर्वोक्तमेव जपहोमस्नानादिकं कुर्यात् ।

अथाश्मरीरोगस्य कर्मविपाके हेतुमाह तत्प्रतीकारं च । यथोक्त–यो हठात्परस्त्रीगामी स अश्मरीवान्भवति अश्मरीवान्कृच्छ्रत्रय चाद्रायणत्रय वा कुर्यात् । यद्यपि काण्वोक्ताश्मरीहरत्वे दानं नाभिहितं तथापि स्वर्णदानं कर्तव्यम् ॥ तस्य सर्वपापहरत्वात् तथोक्त ब्रह्मांडपुराणे 'सर्वरोगोपशमन सौवर्ण दानमुच्यते' ॥

इत्यश्मरीरोगहरं स्वर्णदानम् ।

अथ क्रमप्राप्तस्याश्मरीरोयस्य सनिदानं चिकित्सितमाह रुग्विनिश्चयात् ।

वातपित्तकफैस्तिस्रश्चतुर्थी शुक्रजाश्मरी ॥
प्रायः श्लेष्माशयाः सर्वा अश्मर्यः स्युर्यमोपमाः॥
विशोधयेद्वस्तिगतं सशुक्रं मूत्रं सपित्तं पवनं कफं च ॥
यदा तदाश्मर्युपजायतेऽत्र क्रमेण पित्तेष्विव रोचना गोः॥
नैकदोषाश्रयाः सर्वाः अथास्याः पूर्वलक्षणम् ।
वस्त्याध्मानं तदासन्नदेशेषु परितोऽतिरुक् ।
मूत्रे वास्तिसगंधित्वं मूत्रकृच्छ्रं ज्वरोऽरुचिः ॥

सामान्यलिंगं रुग्नाभिस्वेवनीवस्तिमूर्द्धसु ।
विशीर्णधारं मूत्र स्यात्तथा मार्गनिरोधने ॥
तद्व्यपायात्सुखं मेहेदच्छं गोमेदकोपमम् ॥
वरुणस्य त्वचं श्रेष्ठां शुंठीगोक्षुरसंयुताम् ॥
यवक्षार गुडं दत्वा क्वाथयित्वा पिबेद्धिताम् ।
अश्मरीं वातजां हंति चिरकालानुबंधिनीम् ॥

सुश्रुतात् ।

वीरतरुसहचरद्वयदर्भवृक्षादनीगुंजानलकुशकाशाश्मभेदाग्निमंथमोरटवसुकवसिरंभाभल्लूककुरटकेन्दीवरकपोतवकश्वदंष्ट्रा श्चेति वीरतर्वादिरित्येष गणो वातविकारनुत् ।

अश्मरीशर्कराकृच्छ्रमूत्राघातरुजापहः ।
त्रपुसोर्वारुकादीनां वीजैश्चैवापि तं शुभम् ॥
वीरतर्वादिकं क्वाथ तृणपंचसमान्वितम् ।
भिनत्ति पित्तसभूतामश्मरीं क्षिप्रमेव तु ॥
वरुणत्वक्छिलाभेद· शुंठीगोक्षुरकै· कृत· ।
कषायः क्षीरसंयुक्तः शर्करा च भिनत्त्यपि ॥
वरुणत्वक्कषायं च पीतं तु गुडसंयुतम् ।
अश्मरीं पातयत्याशु वस्तिशूलविनाशनम् ॥

एलोपकुल्यामधुकाश्मभेदकौतीश्वदंष्ट्रावृषकोरुबूकैः ।
श्रितं पिबेदश्मजरुक्प्रगाढ सशर्करं साश्मरिमूत्रकृच्छ्रे ॥
कुलुत्थसिंधूत्थविडगसारं सशर्करं सातलियावशूकम् ।

बीजानि कूष्मांडकगोक्षुराभ्यां घृतं पचेत्तद्वरुणस्य तोये।
दुस्साध्यसर्वाश्मरिमूत्रकृच्छ्रमूत्राभिघातं च समूत्रबंधम्।
एतानि सर्वाणि निहंति शीघ्रं प्ररूढवृक्षानिव वज्रपातः॥
इति कुलुत्थाद्य घृतम्॥

इति श्रीवीरसिंहावलोके अश्मर्यधिकारः।

---

अथ प्रमेहरोगस्य ज्योतिश्शास्त्राभिप्रायेण हेतुं दर्शयति तत्प्रतीकारं च यथोक्तम्।

शूर प्रमेहपीडितमश्मयोपहतमानसं शातम्।
जनयाति रविणा दृष्टो जीवगृहे चन्द्रज पुरुषम्॥

गुरुगृहवर्तमानबुधजनितप्रमेहरोगोपशांतये बुधप्रीतये सकलमपि विधानं विधेयम्। तेनोपशांतिर्भवति॥

अथ प्रमेहरोगस्य कर्मविपाके हेतुमाह तत्प्रतीकारं च कन्यागामी वातप्रमेही भवति। स चांद्रायणत्रयं कुर्यात्। प्रतिरूपदानम्॥

मातृगामी स्वसृगामी मधुमेही भवेन्नरः।
भ्रातृभार्याभिगामी च जलमेही नराधिप॥
यो गच्छेद्भगिनीं नित्यमिक्षुमेहीति निश्चितम्।

इति वचनात्। प्रोक्ताधिकं प्रायश्चित्त प्रकल्प्यम् मात्रादीनामातिमात्रनिषिद्धत्वात्। यत्राशक्त तत्र कृच्छ्रत्रयं प्रतिदिन चत्वारिंशद्ब्राह्मणभोजनं कारयेत्। पुरुष-

सूक्तं सहस्रनामस्तोत्र गायत्रीं वा जपेत् । आर्तरौद्रसूक्ते-नाज्याहुतिहोम जपं वा अष्टोत्तरसहस्रं कारयेत् । चाडालीगामी सर्वमेहव्याधिमान्भवति सततं क्षुत्पिपासातुरश्च । स पिपीलिकामध्यचांद्रायणानि कुर्यात् । इदमापः प्रवहतोदुत्तमं वरुणेत्यादिभिमन्त्रैर्जपेज्जुहुयाच्च । तिर्यग्गामी प्रमेही शूली स सांतपनानि कुर्यात् । व्याधिगुरुलघुत्वभावेन प्रायश्चित्ते गुरुलघुभावौ द्रष्टव्यौ इति ॥ सर्वप्रमेहेषु वायुपुराणे – 'ब्राह्मणस्वर्णहारी च प्रमेही जायते ध्रुवम्' । ब्राह्मणस्वर्णहरणप्रायश्चित्ताभिप्रायेण नारायणव्याख्यानम् ।

अथ वृद्धगौतम' ।

धेनुं स्वर्णमयीं कुर्यात्पूर्वेण विधिना तत' ।
स्वर्णशृंगीं च रत्नाढ्यां तथा रौप्यखुरान्विताम् ॥
तथैव तर्णकं कुर्यादष्टभागेन पूर्ववत् ।
ब्राह्मण श्रुतिसंपन्नं वैष्णवं च कुटुंबिनम् ॥
आचारवन्तं धर्मिष्टं द्विजशुश्रूषणे रतम् ।
गृहमाहूय विधिवत्पूर्ववत्पूजयेत्तु तम ॥
होमांते ता प्रदद्यात्तु मंत्रेणानेन मेहवान् ।
चक्र सुदर्शन यस्य राजतेऽब्जं तथैव च ॥
प्रमेहं हर मे क्षिप्र विष्णो गरुडवाहन ।

इतिदानमंत्र' ।

दानं प्रमेहरोगघ्नमेतत्कार्यं मनीषिभिः।
कृतेनानेन शाम्यति प्रमेहा दारुणा अपि॥
अत्र पूर्ववदिति ज्ञेयम्।

इति प्रमेहहरस्वर्णधेनुदानविधिः।

अथ दानकर्मप्राप्तस्य प्रमेहरोगस्य सनिदानं चिकित्सितमाह रुग्विनिश्चयात्।
आस्यासुखस्वप्नसुखंदधीनि ग्राम्योदकानूपरसाःपयांसि।
नवान्नपानं गुडवैकृतं च प्रमेहहेतुः कफकृच्च सर्वम्॥
मेदश्च मांसं च शरीरजं च क्लेदं कफो वस्तिगतः प्रदूष्य।
करोति मेहान्समुदीर्णमुष्णैस्तानेव पित्तं परिदूष्य चापि॥
क्षीणेषु दोषेषु विकृष्य धातून्सन्दूष्य मेहान् कुरुतेऽनिलश्च।
साध्याः कफोत्था दश पित्तजाः षट् याप्या न साध्याः पवनाच्चतुष्काः॥ समक्रियत्वाद्विषमक्रियत्वान्महाक्रियत्वाच्च यथाक्रमं ते। कफः सपित्तः पवनश्च दोषा मेदश्च शुक्राम्बुवसालसीकाः। मज्जारसौजः पिशितं च दूष्य प्रमेहिनां विंशतिरेव मेहाः॥

दंतादीनां मलाढ्यत्वं प्राग्रूपं पाणिपादयोः।
दाहश्चिक्कणता देहे तृट्श्वासश्च प्रजायते॥
सामान्यलक्षणं चैषां प्रभूताविलमूत्रता।
दोषदूष्याविशेषेण तत्संयोगविशेषतः॥
मूत्रवर्णादिभेदेन भेदो मेहेषु कल्पयेत्।

शराविका कच्छपिका जालिनी विनताल्जी ॥
मसूरिका सर्षपिका पुत्रिणी च विदारिका ।
विद्रधिश्चेति पिटिकाः प्रमेहापेक्षया दश ।
संधिमर्मसु जायंते मांसलेषु च धामसु ॥

अथ वृंदसंग्रहत् ।

श्यामाककोद्रवोद्दालगोधूमाश्चणकास्तथा ।
आढक्यश्च कुलुत्थाश्च पुराणा मेहिनां हिताः ॥
मेहिनां तिक्तशाकानि जांगला हरिणांडजाः ।
यवान्नविकृतिर्मुद्गाः शस्यंते शालिषष्टिकाः ॥
पारियात्रजटानिंबवाह्लिगायत्रिणी पृथक् ।
पाठाया· सगुडाः पीता वयस्था· शारदस्य च ॥
जलेक्षुमध्यसिकताः शनैर्लवणपिष्टकान् ।
सांद्रमेहान् क्रमाद्धन्ति क्वाथाःश्रेष्ठाःसमाक्षिकाः॥
त्रिफलादारुदार्व्यब्दक्वाथः क्षौद्रेण मेहहा ।
कुटजासनदार्व्यब्दफलत्रयमयोऽथवा ॥
गुडूच्याः स्वरसः पेयो मधुना सर्वमेहजित् ॥
निशाकल्कयुतो धात्रीरसो वा माक्षिकान्वितः ।
मधुना त्रिफलाचूर्णमथवाश्मजतूद्भवम् ।
कटकटेरीत्रिफलाचित्रकैश्च समैं कृतः ॥
क्वाथः क्षौद्रेण पातव्य· प्रमेहानां विनाशनः ।
फलत्रिक दारुनिशा विशालां
मुस्तां च नि·क्वाथ्य निशाशकल्कम् ।

पिबेत्कषायं मधुसंप्रयुक्तं
सर्वप्रमेहेषु समुत्थितेषु ॥
न्यग्रोधोदुंबराश्वत्थस्योनाकारग्वधासनम् ॥
आम्रं कपित्थं जंबू च प्रियालं ककुभं धवम् ॥
मधूकं मधुकं रोध्रं वरुणं पारिभद्रकम् ।
पटोलं मेषशृंगी च दन्ती चित्रकमाढके ॥
करंजं त्रिफलाशक्रभल्लातकफलानि च ।
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत् ॥
न्यग्रोधाद्यमिदं चूर्णं मधुना सह लेहयेत् ।
फलत्रयं चानुपिबेत्तेन मूत्रं विशुध्यति ॥
एतेन विंशतिर्मेहा मूत्रकृच्छ्राणि यानि च ।
प्रशमं यांति योगेन पिटका च न जायते ।
इति न्यग्रोधाद्यं चूर्णम् ॥
मासि शुक्रे शुचौ वापि शिलाः सूर्यांशुतापिताः ।
जतुप्रकाशं स्वरसं शिलाभ्यः प्रस्रवेदिति ।
शिलाजत्विति विख्यातं महाव्याधिविनाशनम् ।
तत्र यत्कृष्णममलं स्निग्धं निश्शर्करं च यत् ।
गोमूत्रगंधि नीलं च तत्प्रधानं प्रचक्षते ॥
शालसारादिक्वाथेन तद्धि पेयं यथाबलम् ।
जांगलेन रसेनान्नं तस्मिञ्जीर्णे तु भोजनम् ।
मासमेकं प्रयोक्तव्यमश्मजं तु रसायनम् ।
विनाश्य मधुमेहाख्यमंतकं रोगसंकरम् ॥

क्रांतिवर्णवलोपेतं शनं जीवत्यनामयः ।
दधिमत्स्यकुलुत्थांश्च कपोतांश्च विवर्जयेत् ॥
इति मधुमेहे शिलाजतुप्रयोगः ॥

त्रिकंटकाश्मंतकसोमवल्कैर्भल्लातकैः सातिविषैः सलोध्रैः
वचापटोलार्जुननिंबमुस्तैर्हरिद्रया पद्मकदीपकैश्च ॥
मंजिष्ठपाठागरुचंदनैश्च व्यस्तैः समस्तैः कफवातजेषु ।
मेहेषु तैलं विपचेद्घृतं तु द्वंद्वेषु मिश्रं त्रिषु लक्षणेषु ॥
इति वीरसिंहावलोके त्रिकंटकाद्यं घृतं तैलं यमकं च ॥

शराविकाद्याः पिटिकाः साधयेच्छोफवद्भिषक् ।
पक्त्वा चिकित्सेद्व्रणवत्तासां पानेषु शस्यते ॥
क्वाथो वनस्पतेर्बास्तं तीक्ष्णं मूत्रं च शोधनम् ।
...ादिकेन कुर्वीत तैलं च व्रणरोपणम् ॥
...दारुद... सौरक सुरामुक्तं तैलं क्षीरं गुडं घृतम् ।
...नदाव्य... भूरसजान्पिष्टान्यनुपानीं च वर्जयेत् ॥
...ः स्वरसः ... त्रिकत्रिलवणक्षिसारचव्यानल
...युतो धात्री ... मूलमुस्तकसटीमाक्षीकधान्यत्वच
...फलाचूर्णमथवा ... शरणकणाभूनिंबदंतीनिशा
...त्रिफलाचित्रकैश्च ... मितयो लोहस्य कर्षाष्टक
...द्रेण पातव्य प्रमेहानां ... दशपलान्यष्टौ
...दारुनिशा। विशालां ... टिकाः सयोत्र
...निःक्वाथ्य निशांशकल्कम् । ... रोद्रेषु ...

अर्शांसि प्रदरं ज्वरं सुविषमं नाडीव्रणानश्मरीं
कृच्छ्रं विद्रधिमग्निमांद्यमुदरं पांड्वामयं कामलाम् ।
यक्ष्माणं सभगंदरं सपिटक गुल्म प्रमेहारुची
रेतोदोषमुरःक्षतं कफमरुत्पित्तार्त्तिमुग्रां जयेत् ॥
वृद्धं संजनयेद्युवानमसमौजस्कं बल वर्धये-
देतस्मान्न निषिद्धमन्नमसकृन्नाध्वागमं मैथुनम् ।
विख्याता घुटिकेयमचिततरा चद्रप्रभा नामतः
सांद्रानंदकरी करोति रुचिरा चद्रेण तुल्यां तनुम् ॥

इति चद्रप्रभा घुटिका ।

इति श्रीतोमर० वीरसिंहावलोके प्रमेहमधुमेहपिटिकाधिकारः ।

---

अथ मेदोरोगस्य ज्योतिश्शास्त्राभिप्रायेण हेतुमाह । यथोक्त जातके ॥

अलस सुखिनं स्थूल पतित मिष्टाशनं भृगोस्तनयः ।
शयनोपचारकुशलं द्वादशगः स्त्रीजितं जनयेत् ॥

व्ययभावगतशुक्रजनितमेदःप्रशमनार्थं पूर्वविधानं विधेयम् । अथ मेदोरोगस्य कर्मविपाके हेतुमाह तत्प्रतीकारं चाह ।

दधिचौर्येण पुरुषो जायते मेदसा युतः ।
दधिधेनुः प्रदातव्यः तेन विप्राय शुद्धये ॥
एवं कृच्छ्र च कुर्यात् ॥

अथ क्रमप्राप्तस्य मेदोरोगस्य सनिदान चिकित्सितमाह रुग्विनिश्चयात् ॥

कांतिवर्णबलोपेतं शतं जीवत्यनामयः ।
दधिमत्स्यकुलुत्थांश्च कपोतांश्च विवर्जयेत् ॥
इति मधुमेहे शिलाजतुप्रयोगः ॥

त्रिकंटकाश्मंतकसोमवल्कैर्भल्लातकैः सातिविषैः सलोधैः ।
वचापटोलार्जुननिंबमुस्तैर्हरिद्रया पद्मकदीपकैश्च ॥
मंजिष्ठपाठागरुचंदनैश्च व्यस्तैः समस्तैः कफवातजेषु ।
मेहेषु तैलं विपचेद्घृतं तु द्वंद्वेषु मिश्रं त्रिषु लक्षणेषु ॥
इति वीरसिंहावलोके त्रिकंटकाद्य घृत तैल यमक च ॥

शराविकाद्याः पिटिकाः साधयेच्छोफवद्भिषक् ।
पक्त्वा चिकित्सेद्व्रणवत्तासां पानेषु शस्यते ॥
क्वाथो वनस्पतेर्वास्तं तीक्ष्णं मूत्रं च शोधनम् ।
फ्..ादिकेन कुर्वीत तैलं च व्रणरोपणम् ॥
सौ..रिक सुरासुक्त तैलं क्षीरं गुड घृतम् ।
आ..पुरसजान्पिष्टान्यनुपानी च वर्जयेत् ॥
वेल्लव्योप..लात्रिकात्रिलवणद्विक्षारचव्यानल-
श्यामापिप्प..मूलमुस्तकसटीमाक्षीकधान्यत्वचम् ।
षड्ग्रंथामरदा..गरणकणाभूनिंबदंतीनिशा-
पत्रैलातिविषाः । ..समितयो लोहस्य कर्षाष्टकम् ॥
त्वक्क्षीरी पलिका .. दशपलान्यष्टौ शिलाजन्मनो
मीनांडी कुडवो..मितैर्.. ..टिका संयोज्य कुर्याद्भिषक् ।
तत्रैकां प्रतिवासरं सह विषं..रौद्रेण लिह्याद्दिन
तक्रं मस्तु पयो रसं मधु तत..ात्पिबेन्मात्रया ॥

अर्शांसि प्रदरं ज्वरं सुविषमं नाडीव्रणानश्मरीं
कृच्छ्रं विद्रधिमग्निमांद्यमुदरं पांड्वामयं कामलाम् ।
यक्ष्माणं सभगदरं सपिटकं गुल्मं प्रमेहारुची
रेतोदोषमुरःक्षतं कफमरुत्पित्तार्तिमुग्रां जयेत् ॥
वृद्धं संजनयेद्युवानमसमौजस्कं बलं वर्धये-
देतस्मान्न निषिद्धमन्नमसकृन्नाध्वागमं मैथुनम् ।
विख्याता घुटिकेयमचिततरा चंद्रप्रभा नामतः
सांद्रानंदकरी करोति रुचिरा चंद्रेण तुल्यां तनुम् ॥

इति चंद्रप्रभा घुटिका ।

इति श्रीतोमर० वीरसिंहावलोके प्रमेहमधुमेहपिटिकाधिकारः ।

---

अथ मेदोरोगस्य ज्योतिश्शास्त्राभिप्रायेण हेतुमाह । यथोक्तं जातके ॥

अलसं सुसिनं स्थूलं पतितं मिष्टाशनं भृगोस्तनयः ।
शयनोपचारकुशलं द्वादशगः स्त्रीजितं जनयेत् ॥

व्ययभावगतशुक्रजनितमेदःप्रशमनार्थं पूर्वविधानं विधेयम् । अथ मेदोरोगस्य कर्मविपाके हेतुमाह तत्प्रतीकारं चाह ।

दधिचौर्येण पुरुषो जायते मेदसा युतः ।
दधिधेनुः प्रदातव्य' तेन विप्राय शुद्धये ॥

एवं कृच्छ्रं च कुर्यात् ॥

अथ क्रमप्राप्तस्य मेदोरोगस्य सनिदानं चिकित्सितमाह रुग्विनिश्चयात् ॥

अव्यायामदिवास्वप्नश्लेष्मलाहारसेविनः ।
मधुरान्नरसप्रायस्स्नेहान्मेदो विवर्धते ॥
मेदोमांसातिवृद्धित्वात्स्थूलस्फिगुदरस्तनः ।
अयथोपचयोत्साहो नरोऽतिस्थूल उच्यते ॥

अथ वृंदसंग्रहात् ।

पुराणाः शालयो मुद्गाः कुलत्थोद्दालकोद्रवाः ॥
लेखना वस्तयश्चैव सेव्या मेदस्विना सदा ॥
श्रमचिंताव्यवायाश्च क्षौद्रवारिरणप्रियः ।
हरत्यश्वगश्चातिस्थौल्याद्यवश्यामाकभोजनः ॥
प्रातर्मधुयुतं वारि सेवितं स्थौल्यनाशनम् ।
सचव्यजीरकव्योषहिंगुसौवर्चलानलाः ॥
मस्तुना सक्तव पीता मेदोघ्ना वह्निदीपनाः ।
क्षारं वा तालपत्रस्य हिंगुयुक्तं पिबेन्नरः ॥
मेदोवृद्धिविनाशाय भक्तं मंडसमन्वितम् ।
पत्रांबुलोहाभयचंदनानां शरीरदौर्गंध्यहरः प्रदेहः ॥
वासादलरसोपेतैः शंखचूर्णेन संयुतः ।
बिल्वपत्ररसो वापि गात्रदौर्गंध्यनाशनः ॥
हरीतकी लोध्रमरिष्टपत्रं चूतत्वचा दाडिमवल्कलं च ।
एषोऽङ्गरागः कथितोऽङ्गनानां जंबूकषायश्च नराधिपानाम् ।
व्योषाग्निमुस्तत्रिफलाविडंग गुग्गुलुः समम् ।
खादेत्सर्वाञ्जयेद्व्याधीन्मेदःश्लेष्मामवातजान् ।

इति श्रीतो०वीरसिंहावलोके मेदोऽधिकारः संपूर्णः ।

अथ ज्योतिश्शास्त्राभिप्रायेण उदररोगस्य हेमातुह तत्प्रतीकारं च । यथोक्त जातके–

सिंहस्थो द्विजनाथःकरोति जात रदनजठररोगार्त्तम् ।
स्त्रीद्वेषिणं च पुरुष तथा पिपासाक्षुधाविष्टम् ॥

अथान्यच्च–

स्थूलास्थिस्फीतरोमा पृथुवदनगलो ह्रस्वपिंगाक्षियुग्मः
स्त्रीद्वेषी क्षुत्पिपासाजठरगदरुजा पीडितो मांसभुक् च ।
पांडुस्तीक्ष्णोऽल्पपुत्रो विपिननगरुचिर्मातृवश्यः सुवक्ता
विक्रांतोऽकार्यकोप· शशिभृतिरविभे गर्भगंभीरदृष्टिः ।

अपरं च–

प्रचुरामित्रस्तीक्ष्णो मृदुकायाग्निर्मंदालसश्चंद्रे ॥
षष्ठे चोदररोगैः प्रपीडितः पुमान्भवति ।
गंडोदराक्षिरोगा· स्युः पाशबंधनक भवेत् ॥
उन्मादश्च भवेत्क्लेशो यदा शुक्रगतो रविः ।

क्षीणचंद्रांतर्दशायामप्येवं सिंहांशस्थितचंद्रजनितोदररोगोपशांतये पूर्ववद्रानुप्रीतये जपहोमादिकं कुर्यात् ।

अथोदररोगस्य कर्मविपाके हेतुमाह तत्प्रतीकारं च । यो ब्रह्मविष्णुमहेशानामुत्तमभावेन भेदं साधयति स उदरव्याधिमान्भवति । तच्छांतये कृच्छ्रातिकृच्छ्रचांद्रायणानि कुर्यात् । महेश्वरस्य सहस्रकलशाभिषेकं कुर्यात् । उद्यन्नद्येति ऋचमयुत जपेत् ॥ आतेरौद्रसूक्तेन चरुघृताभ्यामष्टोत्तरसहस्रं जुहुयात् । मधुघृतप्लुताहिरण्य दद्यात् ।

धर्मनिश्चयार्थं स्वामिना नियुक्तस्य ततो व्ययमाचरतः प्राड्विवाकस्य मंत्रिणो वा जलोदरत्वं तस्य प्रायश्चित्तं मासत्रयं पयोव्रतं शतब्राह्मणभोजनं कारयेत् । महादेवस्य सहस्रकलशाभिषेकं कुर्यात् इति ॥

जलोदरे पद्मपुराणे-

उदरव्याधियुक्तस्तु भवेद्धर्मगनागमे ।
चांद्रायणत्रयं कुर्यात्तस्य पापस्य शांतये ॥

बौधायनः-

कुर्यात्तु मकरं सम्यग्राजतं ताम्रमेव च ।
पलत्रयेण द्वाभ्यां च तथैकेन तथा शुभम् ॥
पुच्छे रत्नानि देयानि कटि रौप्येण कारयेत् ।
नेत्रे स्वर्णमये कार्यें जिह्वा रीत्या प्रकल्पयेत् ॥
पादयोः प्रक्षिपेत्तत्र घृतपात्र पुनर्द्वयो' ॥
कृष्णवस्त्रेण संवेष्ट्य चंदनागरुचर्चितम् ॥
ताम्रे वै जलपात्रे तु स्थापयेन्मकर शुभम् ।
ब्राह्मणं वृत्तसंपन्नं वृद्धं दांतमलोलुपम् ॥
वस्त्रै' कटककेयूरै' पूजयेदगुलीयकै' ।
होमो वरुणदैवत्यैरत्राध्यायोक्तमार्गत· ॥
ततश्चौदरिको विप्रे मकरं विनिवेदयेत् ।
जलाधिदेव देवेश पश्चिमाशापते विभो ॥
उदरव्याधिनाशं मे कुरु दानेन तोषित ।

इति जलोदरे मकरदानविधि ।

अथ क्रमप्राप्तस्य उदररोगस्य सनिदानं चिकित्सितमाह रुग्विनिश्चयात्—

रोगाः सर्वेऽतिमदाग्नौ सुतरामुदराणि च ।
अजीर्णान्मलिनैश्चान्नैर्जायंते मलसंचयात् ॥
रुध्वा स्वेदांबुवाहीनि दोषाः स्रोतांसि संचिताः ।
प्राणाग्न्यपानान्संदूष्य जनयन्त्युदरं नृणाम् ॥
तत्पूर्वरूपं बलवर्णकांक्षावलीविनाशो जठरे च रेखाः ।
जीर्णापरिज्ञानविदाहयुक्त्यावस्तौरुजःपादगतश्च शोफः ॥
आध्मानगमनेऽशक्तिर्दौर्बल्यं दुर्बलाग्निता ।
शोफः सदनमंगानां संगो वातपुरीषयोः ॥
दाहस्तंद्रा च सर्वेषु जठरेषु भवंति हि ।
पृथग्दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः ॥
संभवत्युदराण्यष्टौ तेषां लिंगं पृथक्पृथक् ।
शूनाक्षं कुटिलोपस्थमुपक्लिन्नतनुत्वचम् ॥
बलशोणितमांसाग्निपरिक्षीणं च वर्जयेत् ।
अथ वृंदसंग्रहात् ॥
रक्तशालियवा मुद्गा जांगलाश्च रसा हिताः ॥
विरेकास्थापनं शस्तं सर्वेषु जठरेषु च ॥
क्षारैरेरंडजं तैलं पिबेन्मूत्रेण चासकृत् ।
ज्योतिष्मत्या. पिबेत्तैलं पयसा च दिनेदिने ॥
सर्वेभ्योऽप्युदरेभ्यस्तु द्रुतं मुच्येत मानवः ।
वातोदरी पिबेत्तक्रं पिप्पलीलवणान्वितम् ॥

शर्करामरिचोपेतं स्वादु पित्तोदरी पिबेत् ।
यवानीसैन्धवाजाजीव्योषयुक्तं कफोदरी ॥
सन्निपातोदरी तक्रं त्रिकटुक्षारसैंधवैः ।
स्नुहीपयोभावितैस्तैस्तण्डुलचूर्णविनिर्मितो यूपः॥
उदरमुदारं हन्याद्योगोऽय सप्तरात्रेण ।
स्नुहीपयोभावितानां पिप्पलीनां पयोऽश्नतः ॥
सहस्रमुपयुंजीत शक्तितो जठरामयी ।
मुक्तरोगश्चिरंजीवेद्गलवणसमन्वितः ॥
पिप्पलीवर्धमानं वा कल्पदृष्टं प्रयोजयेत् ।
जठराणां विनाशाय नास्ति तेन समं भुवि ॥
त्रिभिरथ परिवृद्धं पंचभिः सप्तभिर्वा
दशभिरथ विवृद्धं पिप्पलीवर्धमानम् ।
इति पिबति पयो यस्तस्य न श्वासकास-
ज्वरजठरगदाशींवातरक्तक्षया स्युः ॥
पटोलमूलं रजनी विडंगं त्रिफलात्वचम् ।
काम्पिल्लकं च नालिनीं त्रिवृत चेति चूर्णयेत् ॥

कृष्णचूर्ण ततो मुष्टिं
विरिक्तोजांगलरसैर्भुंज
मंडपेयां च पी
श्रितं पिबेत

हंति सर्वोदराण्येव चूर्णं जातोदकान्यपि ॥
कामलं पाण्डुरोगं च श्वयथुं चापकर्षति ।

इति पटोलाद्य चूर्णम् ।

यवानीहपुषाधान्यत्रिफला सोपकुंचिका ।
कारवी पिप्पलीमूलमजगंधा सठी वचा ॥
शताह्वा जीरकं व्योषं स्वर्णक्षीरी सचित्रिका
द्वौ क्षारौ पौष्करं मूल कुष्ठं लवणपंचकम् ॥
विडंगं च समांशानि दंतीभागत्रयं तथा ।
त्रिवृद्विशाले द्विगुणे शीतला स्याच्चतुर्गुणा ॥
एष नारायणो नाम चूर्णो रोगगणापहः ।
एनं प्राप्य निवर्त्तंते रोगा विष्णुमिवातुराः॥
तक्रेणोदरिभिः पेयो गुल्मिभिर्बदराम्बुना ।
आनद्धवाते सुरया वातरोगे प्रसन्नया ॥
दधिमंडेन विड्भेदे दाडिमाम्बुभिरर्शसि ।
परिकर्तति वृक्षाम्लैरुष्णाम्बुभिरजीर्णके ॥
भगंदरे पांडुरोगे कासे श्वासे गलग्रहे ॥
हृद्रोगे ग्रहणीदोषे कुष्ठे मंदानले ज्वरे ।
दंष्ट्राविषे मूलविषे सगरे कृत्रिमे विषे ।
यथार्हं स्निग्धकोष्ठेन पेयमेतद्विरेचनम् ।

इति नारायणचूर्णम् ।

त्रिवृता त्रिफला पाठा दंती कटुकरोहिणी ॥
चतुरंगुलमज्जा च तथा च कटुकत्रकम् ।

चित्रकं च बृहत्यौ च तथा च गजपिप्पली ॥
स्नुहीक्षीर पलं दद्याद् घृतस्याष्टौ प्रदापयेत् ।
यावत्पिबति तद्बिंदूंस्तावद्वेगाद्विमुच्यते ॥
एतद्बिन्दुघृतं सिद्धऋषिभिः समुदाहृतम् ।
इति बिन्दुघृतम् ।
पातः प्लीहोदरं हन्ति पिप्पलीमरिचान्वितः ।
अम्लवेतससंयुक्तः शिग्रुक्वाथः ससैंधवः ॥
पालाशक्षारतोयेन भाविता पिप्पली शुभा ।
गुल्मप्लीहोदरं हंति वह्नेर्दीपनकारिका ॥
अर्कपत्रं सलवणं पुटदग्धं सुचूर्णितम् ।
निहंति मधुना पीतं प्लीहानमतिदारुणम् ॥
शरपुंखामूलकल्कः पीतस्तक्रेण नाशयत्यचिरात् ।
चिरतरकालसमुत्थं प्लीहानं रूढमवगाढम् ॥
हरीतकीनागरदेवदारु पुनर्नवाच्छिन्नरुहाकषायः ।
सगुग्गुलुर्मूत्रयुतश्च पेयः शोफोदराणां प्रवरः प्रयोगः ॥
रोहीतकाभयाशुंठीः पिबेन्मूत्रेण शक्तितः ।
सर्वोदरहरः प्लीहमेहार्शः कृमिगुल्मनुत्
पातव्यो युक्तितः क्षारः क्षीरेणोदरियुक्तितः ।
पयसा च प्रयोक्तव्याः पिप्पल्यः प्लीहशांतये ।
एरण्डतैलं दशमूलमिश्रं गोमूत्रमिश्रास्त्रिफलारसो वा ।
निहंति वातोदरशोफशूले क्वाथः समूत्रो दशमूलजो वा ॥
गोमूत्रयुक्तं महिषीपयश्च क्षीरं गवां वा त्रिफलाविमिश्रम् ।

क्षीराम्लभुक्केनलमेव गव्यं मूत्रं पिबेद्वा श्वयथूदरेषु ॥
उदकानूपजं मांस शाकं पिष्टकृतं तिलम् ।
व्यायामाध्वदिवास्वप्नपानाजर्णि विवर्जयेत् ॥
तथोष्णलवणाम्लानि विदाहीनि गुरूणि च ।
नाद्यादन्नानि जठरी तोयपानं च वर्जयेत् ॥

इति वीरसिंहावलोके उदरप्लीहोदरशोफोदराधिकारः ॥

---

अथ श्वयथुरोगस्य ज्योतिश्शास्त्राभिप्रायेण हेतुमाह तत्प्रतीकारं च । 'नीचस्थगुरुदशायां गात्रे श्वयथुर्गुह्यकर्णरोगाश्च ' इति दर्शनात् । तत्प्रतीकारार्थं बृहस्पतिप्रीतये जपहोमादिकं सकलमपि कार्यम् ॥

अथ श्वयथुरोगस्य कर्मविपाकाभिप्रायेण हेतुमाह तत्प्रतीकारं च । मार्गे पुलिने पर्वताग्रे कपित्थच्छायामधिरुह्य विष्टां मुंचति तत्र ष्ठीवति आमवातश्वयथुभिः पाड्यमानोऽनिशं मूर्छितो भवति ।

पर्वताग्रे नदीतीर छायामारुह्य वा नरः ॥
मूत्रं पुरीषमथवा यः प्रक्षिपति वा जले ।
श्वयथुव्याधिमाप्नोति इत्याह भगवाञ्छिवः ॥

स इद पोविश्वत· शरीर इत्यादिना अष्टोत्तरशतायुतत्रयजपं कुर्यात् ।आपोहिष्ठामयोभुव इत्यनेन चरुघृताभ्यामष्टोत्तरायुतशतत्रयं होमं कुर्यात् । अत्र व्याधि गुरुलघुभावौ च द्रष्टव्यौ । तथा च वृद्धबोधायनः ।

विघ्नकर्ता च भोक्तृणां शोफी भवति मानवः ॥
तस्य कर्मविपाकोत्थव्याधिनाशनमुत्तमम् ।
दानं वक्ष्याम्यशेषेण सर्वशोफविनाशनम् ॥
क्षौमवस्त्र समानीय बहुमूल्यं च यद्भवेत् ।
मुक्ताफलानि बध्नीयाद्वस्त्रप्रांते समंततः ॥
कुंकुमेनाञ्चितं सम्यक्कर्पूरागरुधूपितम् ।
तंडुलोपरि संस्थाप्य तंडुलांश्च स्वशक्तितः ॥
उपचारैः षोडशभिराचार्यं पूजयेत्ततः ।
युवासुवासामन्त्राभ्यां पूजनं च ततो भिषु ॥

युवं वस्त्राणि इत्येको युवा सुवासा इत्यपरो मंत्रः

होमं चापि प्रकुर्वीत समिदाज्यतिलैरपि ॥

उद्बुध्यस्वेदं विष्णुसप्तर्षिमन्त्रैः क्रमेण जुहुयात् ।
स्विष्टकृच्च यदस्यकर्मणोऽत्यरीरिचमिति मंत्रेण होमः ।

हुत्वाथ संस्रवात्पूर्वं पात्रे सर्वान्निवेश्य च ।
संख्या चाष्टोत्तरशतमष्टाविंशतिरेव च ॥
सपातेनांगमार्ज्जनं सर्वमेव हि रोगिणः ।
अक्षीभ्यामिति सूक्तेन यथा लिंगं तथैव हि ॥
वाससा मार्जनं कुर्यात्स याजी दर्भमुष्टिना ।
आचार्याय तु तद्वस्त्रं दद्यात्सोऽपि सदक्षिणम् ॥
मंत्रेणानेन विधिवद्दक्षिणाभिमुखः शुचिः ।

ऋषीणां प्रवरोऽगस्त्यो लोपामुद्रापतिः प्रभुः ॥
क्षौमवस्त्रप्रदानेन तुष्टो व्याधिं व्यपोहतु ।

इति दानमंत्रः ॥

ब्राह्मणेभ्यस्तथान्येभ्यो दद्याच्छक्त्या च दक्षिणाम् ।
ततः स्नातः शुचिर्भूत्वा वस्त्रमाल्योपशोभितः ॥
ब्राह्मणैर्बहुभिः सार्द्धं भुञ्जीतातीव भक्तितः ।

इति शोफहरक्षौमदानविधिः ॥

अथ क्रमप्राप्तस्य शोफरोगस्य सनिदानं चिकित्सितमाह रुग्विनिश्चयात् ।

रक्तपित्तकफान्वायुर्दुष्टो दुष्टान्बहिःशिरान् ।
नीत्वा रुद्धगतिस्तैर्हि कुर्यात्त्वङ्मांससंश्रयम् ॥
उत्सेधं संहतं शोफं तमाहुर्निश्चयादथ ।
सर्वंहेतुविशेषैस्तु रूपभेदं नवात्मकम् ॥
दोषैः पृथग्द्वयैः सर्वैरभिघाताद्विषादपि ।
तत्पूर्वरूपं दवथुः शिरायां मांसगौरवम् ॥
शुद्ध्यामयाभक्तकृशाबलानां
क्षाराम्लतीक्ष्णोष्णगुरूपसेवा ।
दध्यामभृच्छाकविरोधि दुष्टं
गरोपसृष्टान्ननिषेवणं च ॥
अर्शास्यचेष्टा न च देहशुद्धि-
र्मर्मोपघातो विषमा प्रसूतिः ।
मिथ्योपचारः प्रतिकर्मणां च

नियम्यहेतुः श्वयथोः प्रदिष्टः ॥
ऊर्ध्वगामी नरः पद्भ्यामधोगामी मुखात्स्त्रियम् ।
उभयोर्वस्तिसंजातः शोफो हंति न संशयः ॥
छर्दिः श्वासोऽरुचिस्तृष्णा ज्वरातीसार एव च ।
सप्तकोऽयं सदौर्बल्यः शोफोपद्रवसंग्रहः ॥

वृन्दसंग्रहात् ।

शुंठीपुनर्नवैरंडपंचमूलीश्रितं जलम् ।
वातिकश्वयथौ शस्तं पानाहारपरिग्रहे ॥
पटोलत्रिफलारिष्टदार्वीक्वाथः सगुग्गुलुः ।
हंति पित्तकृतं शोथं तृष्णाज्वरसमन्वितम् ॥

शोफे कफोत्थे महिषाक्षयुक्तं मूत्रं पिबेद्वा सलिलं तथैव ।
कफे तु कृष्णासिकतापुराणपिण्याकशिग्रुत्वगनुप्रलेपः ॥
गुडार्द्रकं वा गुडनागरं वा गुडाभयां वा गुडपिप्पलीं वा ।
कर्षाभिवृद्ध्यात्रिपलप्रमाणं खादेन्नरः पक्षमथापि मासम् ॥
शोफप्रतिश्यायगलास्यरोगान् सश्वासकासारुचिपीनसादीन् । जीर्णज्वरार्शोग्रहणीविकारान् हन्यात्तथान्यान्कफवातरोगान् ॥ आर्द्रकस्वरसः पीतः पुराणगुडमिश्रितः । अजाक्षीराशिना शीघ्रं सर्वशोफहरो भवेत् ॥ कृष्णासविश्वघनजीरककंटकारी पाठानिशाकरिकणामगधाजटानाम् । चूर्णं कवोष्णसलिलेन विलोड्य पीतं नातः परं श्वयथुरोगहरं नराणाम् ॥ द्विपंचमूलस्य तुला कषाये

कंसं भयानां च शतं गुडाच्च । लेहे सुसिद्धे च विनीय चूर्णं व्योषं त्रिसौगंध्यमथो सुशांतम् ॥ प्रस्थार्द्धमात्रं मधुनः सुशीते किंचिच्च चूर्णीकृतयावशूकम् । एकाभयां प्राप्य ततश्च लेहाच्छुक्तिं निहंति श्वयथुं प्रवृद्धम् ॥ श्वासं जरारोचकमेहगुल्मान्प्लीहत्रिदोषोदरपांडुरोगान् । कार्श्यामवातं त्वसृगम्लपित्तं वैवर्ण्यमूत्रानिलशुक्रदोषान् ॥

इति कंसहरीतकी ।

विदाहि चाम्लं लवणानि मद्यं मृदं दिवास्वप्नमजांगलं च । स्त्रियो घृतं तैलपयोगुरूणि शोफं जिहासुः परिवर्जयेच्च॥

इति वीरसिंहावलोके शोफाधिकारः ॥

---

अथ ज्योतिश्शास्त्राभिप्रायेण अंत्रवृषणमुष्करोगाणां हेतुमाह तत्प्रतीकारं च यदुक्तम् ॥

रोगैर्भगंदराद्यैः संततो बंधुभिः सह निरुद्धः ।
कर्के विनतानाथे भौमेन निरीक्षिते तपने ॥

अन्यच्च—

अर्जितो गुह्यरोगार्तो मीनस्थेऽर्केऽरिदर्शनात् ।
कुटदाभार्याद्वेषा वधनिष्ठो दद्रुणो दरिद्रश्च ॥
आलिनि सिते भवति पुमान् गृहीतशिल्पः सगुह्यगदः ।

शुक्रपूजादिकं विधिवत् विदध्यात् । अत्र आद्यशब्देनेति मुष्कपीडादयोऽपि गृह्यंते । तदुपशांतये कर्कटसं-

नियम्यहेतुः श्वयथोः प्रदिष्टः ॥
ऊर्ध्वगामी नरः पद्भ्यामधोगामी मुखात्स्त्रियम्।
उभयोर्वस्तिसंजातः शोफो हंति न संशयः॥
छर्दिः श्वासोऽरुचिस्तृष्णा ज्वरातीसार एव च।
सप्तकोऽय सदौर्बल्यः शोफोपद्रवसंग्रहः ॥

वृन्दसंग्रहात्।

शुंठीपुनर्नवैरंडपंचमूलीशृतं जलम्।
वातिकश्वयथौ शस्तं पानाहारपरिग्रहे ॥
पटोलत्रिफलारिष्टदार्वीक्वाथः सगुग्गुलुः।
हंति पित्तकृतं शोथं तृष्णाज्वरसमन्वितम् ॥

शोफे कफोत्थे महिषाक्षयुक्तं मूत्रं पिबेद्वा सलिलं तथैव।
कफे तु कृष्णासिकतापुराणपिण्याकशिग्रुत्वगनुप्रलेपः ॥
गुडार्द्रकं वा गुडनागरं वा गुडाभयां वा गुडपिप्पलीं वा।
कर्षाभिवृद्ध्या त्रिपलप्रमाणं खादेन्नरः पक्षमथापि मासम् ॥
शोफप्रतिश्यायगलास्यरोगान् सश्वासकासारुचिपीनसादीन्। जीर्णज्वरार्शोग्रहणीविकारान् हन्यात्तथान्यान्कफवातरोगान् ॥ आर्द्रकस्वरसः पीतः पुराणगुडमिश्रितः। अजाक्षीराशिना शीघ्रं सर्वशोफहरो भवेत् ॥
कृष्णासविश्वघनजीरककंटकारी पाठानिशाकरिकणामगधाजटानाम्। चूर्णं कवोष्णसलिलेन विलोड्य पीतं नातः परं श्वयथुरोगहरं नराणाम् ॥ द्विपंचमूलस्य तुला कषाये

कंसं भयानां च शतं गुडाच्च। लेहेसुसिद्धेचविनीयचूर्णंव्योपं त्रिसौगंध्यमथोसुशांतम् ॥ प्रस्थार्द्धमात्रं मधुनः सुशीते किंचिच्च चूर्णीकृतयावशूकम् । एकाभयां प्राप्य ततश्च लेहाच्छुक्तिंनिहंतिश्वयथुंप्रवृद्धम् ॥ श्वासं जरारोचकमेहगुल्मान्प्लीहत्रिदोषोदरपांडुरोगान् । कार्श्यामवातं त्वसृगम्लपित्तं वैवर्ण्यमूत्रानिलशुक्रदोषान् ॥

इति कंसहरीतकी ।

विदाहि वाम्ल लवणानि मद्यं मृदं दिवास्वप्नमजांगलं च ।
स्त्रियो घृतं तैलपयोगुरूणि शोफं जिहासुः परिवर्जयेच्च॥

इति वीरसिंहावलोके शोफाधिकारः ॥

---

अथ ज्योतिश्शास्त्राभिप्रायेण अत्रवृषणमुष्करोगाणां हेतुमाह तत्प्रतीकारं च यदुक्तम् ॥

रोगैर्भगंदराद्यैः संततो बंधुभिः सह विरुद्धः ।
कर्के विनतानाथे भौमेन निरीक्षिते तपने ॥

अन्यच्च-

ऊर्जितो गुह्यरोगार्तो मीनस्थेर्केऽरिदर्शनात् ।
कुलटाभार्याद्वेषा वधनिघ्नो दद्रुणो दरिद्रश्च ॥
आलिनि सिते भवति पुमान् गृहीतशिल्पः सगुह्यगदः ।

शुक्रपूजादिकं विधिवत् विदध्यात् । अत्र आद्यशब्देनेति मुष्कपीडादयोऽपि गृह्यंते । तदुपशांतये कर्कटसं-

स्थितमंगलावलोकितमीनस्थसूर्यजनितमुष्करोगोपशांतये पूर्ववत जपहोमदानादिकं कुर्यात् ॥

अथ वृषणरोगस्य कर्मविपाके हेतुमाह तत्प्रतीकारं च। तत्र स्नुषागामी वातवृषणः। अथ प्रायश्चित्त आत्मजाभ्रियम् असकृदज्ञानाद्गत्वा चांद्रायणत्रयाच्छुध्येत्। ज्ञानात्सकृद्गमने कृच्छ्राद्वा शुद्धिः। आसामेका बुद्धिपूर्वकं बहुदिनेषु गत्वा अग्निं प्रविश्य मृतः शुद्धयत्। अपरं च अपराधमंतरेण यो नृपो भृत्यादीनां हस्तपादादींश्छेदयति तस्य मुष्कमग्निना दग्धमिव शिलापिष्टमिव वृषणं जायते पश्चाद्रुधिर स्रवति। स रुद्रसंहितामष्टोत्तरसहस्रं जपेत्। प्रतिरोग चांद्रायणत्रयं कुर्यात्। गां दद्यात्।

जायते वृषणे यस्य व्याधिः परमदारुणः।
जपित्वा दशसाहस्रं मुच्यते रुद्रसंहिताम् ॥

इति विष्णुवचनात्।

इति वृषणव्याधिप्रतीकारः।

अथान्त्ररोगे विशेषतया कर्मविपाके हेतुमाह तत्प्रतीकार च। पूर्वजन्मनि वैश्यहतुरन्त्राणि छिन्नानीव भवंति। पश्चाच्छीतज्वरमनंतरमुष्णज्वरमपानदाहश्च भवति। शतनामणभोजन च उद्यन्नद्येति ऋचमयुतत्रयं जपेत्। आतेरौद्रसूक्तेन मधुघृताभ्यां जुहुयात्। अथवा महिषीं

प्रतिरूपां च दद्यात् । इति ॥ सोपद्रवायां पीडायां ब्रह्मणोक्तं च ॥

यज्ञे विघ्नकरो मर्त्यो जायते चांत्रवृद्धिमान् ।
वक्ष्यामि तत्प्रतीकार दानहोमादिकर्मणा ॥
कुर्यात्स्वर्णमयीं धेनु शुभां नारायणस्य तु ।
व्यावहारिकनिष्काभ्यामेकेनापि तदर्द्धतः ॥
नारायणलक्षणं तूक्त हेमहस्तिरथदाने ।
प्रक्षाल्य पंचगव्येन स्थापयेत्कुंकुमोपरि ॥
श्वेतवस्त्रेण संवेष्ट्य गंधमाल्यैः समर्चयेत् ।
उपचारैः षोडशभिराचार्यो वैष्णवः शुचिः ॥
सर्वशास्त्रार्थतत्त्वज्ञो ब्रह्मविद्यासु निश्चितः ।
होमं च कारयेत्तत्र ह्याग्नेयां दिशि शास्त्रतः ॥
समिदाज्यतिलैश्चैव नमो नारायणाय च ।
तिलान्व्याहृतिभिर्जुहुयात् ॥
रोगी तथार्चयेद्देवं नारायणमनामयम् ।
मूलमंत्रेण विधिवन्नैवेद्यं चरुरिष्यते ॥
नमोऽतं नाम सोङ्कारं मूलमंत्रः प्रकीर्तितः ।
ततस्तां प्रतिमां दिव्यां प्राङ्मुखाय ह्युदङ्मुखः ॥
मंत्रेणानेन विधिवद्भक्त्या परमया युतः ।
नारायण जगन्नाथ शंखचक्रगदाधर ॥
पूर्वजन्मनि यज्ञादिविघ्नाद्यद्धे कृत मया ।

अंत्रवृद्धि महारोगं दानेनानेन तोषितः ॥
चक्रहस्त गदापाणे शमयाशु जगत्पते
इति दानमंत्रौ ॥
एवं कृत्वा तु तं देवं क्षमाप्य ब्राह्मण ततः ।
विप्राणां भोजन दद्यात्स्नात्वा भुंजीत वाग्यतः॥
एवं कृत्वा समाप्नोति नीरोगत्वं नरो भुवि ।
आरोग्ययुक्तो नित्यं हि सुचिर सुखमेधते ॥
इति अंत्रवृद्धिहरनारायणदानविधिः ॥

अथ क्रमप्राप्तस्य मुष्कवृद्धिरोगस्य सनिदान चिकित्सितमाह रुग्विनिश्चयात् ॥

क्रुद्धोऽनूर्ध्वगतो वायुः शोफशूलकरश्चरन् ।
मुष्कौ वंक्षणतः प्राप्य फलकोशाभिवाहिनीः ॥
प्रपीड्य धमनीवृद्धिं करोति फलकोशयोः ।
दोषास्रमेदोमूत्रांत्रैः सवृद्धिः सप्तधा गदः ॥
गुग्गुलु रुबुतैलं वा गोमूत्रेण पिबेन्नरः ।
वातवृद्धिं निहत्याशु चिरकालानुबंधिनीम् ॥
सक्षीरं वा पिबेत्तैलं मासमेरंडसंभवम् ।
तैलं नारायणं योज्यं पानाभ्यंजनबस्तिषु ॥
त्रिफलाक्काथगोमूत्रं पिबेत्प्रातरतन्द्रितः ।
कोष्ठवातोद्भवं शोफं निहन्याद्वृषणोद्भवम् ॥
चंदनं मधुकं पद्ममुशीरं नीलमुत्पलम् ।
क्षीरपिष्टैः प्रलेपः स्याद्दाहशोफरुजापहः ॥

पंचवल्कलकल्केन सघृतेन प्रलेपनम्।
सर्वं पित्तहरं कार्यं रक्तजे रक्तमोक्षणम्॥
वचासर्षपतैलेन प्रलेपः शोफनाशनः।
शिग्रुत्वक्सर्षपैः पिष्टैः शोफश्लेष्मानिलापहः॥
तैलमेरंडजं पीतं बलासिद्धं पयोऽन्वितम्।
आध्मानशूलोपचितामंत्रवृद्धिं जयेन्नरः॥

गोमूत्रसिद्धां रुबुतैलभृष्टां हरीतकीं सैंधवचूर्णयुक्ताम्।
खादेन्नर कोष्णजलानुपानान्निहंति वृद्धांचिरजांत्रवृद्धिम्।
गव्य घृत सैंधवचूर्णयुक्तं शबूकभाण्डे निहितं प्रयत्नात्।
सप्ताहमादित्यकरैर्विपक्व निहंति कौरंडकमंत्रवृद्धिम्॥

इति कुरंडकघृतम्।

अत्यभिष्यदिगुर्वम्लसेवनान्निचयं गतः।
करोति ग्रथिवच्छोफ दोषो वंक्षणसंधिजः॥
ज्वरःशूलांगदाहाढ्यं तं वघ्मामिति निर्दिशेत्।
मूल बिल्वकपित्थयोररुलकस्याग्नेर्बृहत्योर्द्वयोः
श्यामापूतिकरंजशिग्रुकतरोर्विश्वौषधारुष्करम्।
कृष्णाग्रथिकचव्यपचलवणक्षाराजमोदान्वितं
पीतकांजिककोष्णतोयमथितैश्चूर्णीकृतं वघ्मजित्॥
भृष्ट एरंडतैलेन कल्क पथ्यासमुद्भव.।
कृष्णासैंधवसंयुक्तो वघ्मरोगहर. परः॥

अविक्षीरेण गोधूमचूर्णं कुंदुरुकस्य च ।
प्रलेपनं सुखोष्णं स्याद्वृध्मरोगहरं परम् ॥

इति वृध्माधिकारः ।

इति श्रीवीरसिंहावलोके मुष्कवृद्ध्यन्त्रवृद्धिवर्ध्माधिकारः ।

अथ ज्योतिश्शास्त्राभिप्रायेण गलगंडगण्डमालाऽपचीरोगहेतुमाह तत्प्रतीकारं च ।

गंडोदराक्षिरोगैः क्षितिपतिना बंधनादिभिस्त्रस्तः ।
शुक्रदशायां सूर्ये विचरति नूनं भवेत्पुरुषः ॥

अपरं च-

शिरसो रुग्गलरोगः श्वित्रं सहसा ज्वरः शूलम् ।
तपनदशायां शुक्रे देशत्यागो भवेदरिभिः ॥

अपरं च-

शिरोरुग्गलरोगश्च ज्वरातीसारशूलकैः ।
शरीरक्लेशमाप्नोति सूर्यस्यांतर्गते भृगौ ॥

अपरं च-

शिरोरोगो गलग्राहो नानाक्लेशाविमर्दनम् ।
चोरातंकभयव्याधिर्बुधस्यांतर्गते कुजे ॥

शुक्रांतर्वर्तमानसूर्यजनितगलगंडगंडमालारोगप्रतीकाराय सूर्यप्रीतये यथोक्तमपि सकलं कुर्यात् । तथाच सूर्यांतर्वर्तमानशुक्रजनितगलगंडगंडमालोपशांतये शुक्रोक्तं कार्यम् ।

अन्यच्च ॥

बुधोतश्शुक्रजनितगलग्रहरोगप्रतीकाराय भौमप्रीतये यथोक्तं कुर्यात् । तेनोपशांतिः । गुरुद्वेषी परचित्तदुः- खकारी गुल्मी गंडमालाव्याधिमांश्च जायते । एतद्बा- र्हस्पत्येऽभिहितम् ॥

अपरं च-

ब्राह्मण प्रतार्य योऽध्यापयति शिष्यश्च गुरु वंच- यित्वा योऽधीते स गडमाली भवति । अस्य प्रायश्चित्त- मनुक्तनिष्कृतित्वाचान्द्रायणं कुर्यात् । एतन्मानवेऽभिहि- तम् ॥ गंडमालागलगंडोपशांतये पुरुषसूक्तम् ऋषिच्छं- दोदैवतानि ज्ञात्वैव जपेत् ।

अविदित्वा ऋषिच्छंदो दैवतं यज्ञमेव च ।
योऽध्यापयेज्जपेद्वापि पापीयाञ्जायते तु सः ॥

इतिवचनात् । तस्माच्छदऋषिदैवतानि ज्ञात्वैव जपेत् । एतच्चाधीतब्राह्मणविषयम् । कृच्छ्रचांद्रायणब्र- ह्मभोज्यानि च कारयेत् । अभक्ष्यभक्षी चैव ।

अथ ज्योतिश्शास्त्राभिप्रायेण रक्तार्बुदरोगव्रणस्य हेतुमाह तत्प्रतीकारं च ।

मूर्च्छाशोणितदोषः शाखाच्छेदो व्रणश्चापि ।
पित्तसमुत्थैदोषैरभिभूतो मानवो भवति ॥

अथ भौमदशाजनितार्बुदरोगव्रणप्रतीकाराय भौम- प्रीतये पूर्वोक्तमेव सकलं कुर्यात् । तेनोपशांतिर्भवति ।

अथार्बुदरोगस्य कर्मविपाकहेतुमाह तत्प्रतीकारं च। पूर्वजन्मनि विधवया सार्द्धं रममाणः रक्तार्बुदवान्भवति। 'विधवागमने नित्यं नरो रक्तार्बुदी भवेत्' इति नारदीयवचनात्॥ रक्तार्बुदी नरः कुर्यात्प्रायश्चित्तं प्रशांतये॥ इतिवचनात् कृच्छ्रातिकृच्छ्रचांद्रायणानि समस्तानि व्यस्तानि वा गुरुलघुभावापेक्षया समाचरेत्॥ सुवर्णदानं च दद्यात्। ब्राह्मणभोजनं च कारयेद्विभवापेक्षया। इति रक्तार्बुदव्रणहरणे।

अथ क्रमप्राप्तानां गलगंडगंडमालापचीग्रंथ्यर्बुदानां सनिदानं चिकित्सितमाह रुग्विनिश्चयात्।

निबद्धश्वयथुर्यस्य मुष्कवल्लंबते गले।
महान्वा यदि वा ह्रस्वो गलगडं तमादिशेत्॥
यवमुद्गपटोलानि कटुरूक्षं च भोजनम्।
छर्दिं सरक्तमुक्तिं च गलगंडे प्रयोजयेत्॥
निचुलं शिग्रुबीजानि शणबीजातसीयवान्।
मूलकस्य च बीजानि तक्रेणाम्लेन पेषयेत्॥
गंडानि ग्रंथयश्चैव गंडमालाः समुत्थिताः।
प्रलेपात्तेन नश्यंति विलयं यांति वाचिरात्॥
जीर्णकर्कारुकरसो बिडसैंधवसंयुतः।
नस्येन तरुणं हंति गलगडं न संशयः।
जलकुंभिकजं भस्म पक्कं गोमूत्रगालितम्।
पिबेत्कोद्रवभस्माशी गलगंडोपशांतये॥

श्वेतापराजितामूलं प्रातः पिष्ट्वा पिबेन्नरः।
सर्पिषा निहिताहारो गलगंडप्रशांतये॥
तिक्तालाबूफले पक्वे सप्ताहमुषितं जलम्।
मद्यं वा गलगंडघ्नं पानात्पथ्याशु शीलितैः॥
कर्कंधुकोलामलकप्रमाणैः कक्षांसमन्यागलवंक्षणेषु।
मेदःकफाभ्यां चिरमंदपाकैःस्याद्गंडमाला बहुभिस्तु गंडैः॥
तेग्रंथयः केचिदवाप्तपाकाःस्रवंति नश्यंतिभवन्ति चान्ये।
कालानुबंधं चिरमादधाति तामापचीति प्रवदंति केचित्॥
माक्षिकाढ्यः सकृत्पीतः क्वाथो वरुणमूलकः।
गंडमालां निहंत्याशु चिरकालानुबंधिनीम्॥
विडंगानलसिंधूत्थरास्नोग्राक्षारदारुभिः।
तैलं चतुर्गुणं सिद्धं कटुतुंबीरसे शुभे।
गंडमालाहरं श्रेष्ठं गलगंडे प्रशस्यते॥
इति तुंबीतैलम्॥
व्योष विडंगं मधुकं सैंधवं देवदारु च।
तैलमेभिः शृतं सम्यक्कृच्छ्रामप्यपचीं हरेत्॥
इति व्योषाद्यं तैलम्।
छुच्छुन्दर्या विपक्वं तु क्षणात्तैलं परं ध्रुवम्।
अभ्यंगान्नाशयेन्नृणां गंडमालां सुदारुणाम्॥
इति छुच्छुन्दरीतैलम्।
सौभांजनं देवदारु कांजिकेन सुपेषितम्॥
कोष्णं प्रलेपतो हंति गंडमालां सुदारुणाम्।

नवकार्पासिकामूलं तन्दुलैः सह पेषितम् ॥
पक्त्वा तु पलिकं खादेदपचीनाशनाय च ।
वातादयो मांसमसृक्प्रदुष्टाः संदूष्य मेदश्च तथा शिराश्च ।
वृत्तोन्नतं ग्रथिनरुत्कफोत्थं कुर्वन्त्यथो ग्रथिरिति प्रदिष्टः॥
हिंस्रा सरोऽरण्यमृता च भार्ङ्गी
स्योनाकबिल्वागुरुकृष्णगंध्या ।
गोक्षीरपिष्टा सह तालपत्र्या
ग्रंथौ विधेयोऽनिलजे प्रलेपः ॥
जलायुकाः पित्तकृते हितास्तु क्षीरोदकाभ्यां परिषेचनं च ।
द्राक्षारसेनेक्षुरसेन वापि चूर्णं पिबेच्चापि हरीतकीनाम् ॥
मधूकजम्ब्वर्जुनवेतसानां त्वग्भिः प्रदेहानवचारयेत ॥
हृतेषु दोषेषु यथानुपूर्वं ग्रंथौ भिषक् श्लेष्मसमुत्थिते तु ।
स्विन्नस्य विम्लापनमेव कुर्यादङ्गुष्ठलोहोपलवेणुदंडैः ।
विकंकतारग्वधकाकदंतीकाकादनीतापसवृक्षमूलैः ।
आलेपयेत्पिंडफलार्कभार्ङ्गीकरंजकालामदनैश्च विद्वान् ॥
अममंजातं शमनं प्रयातमपक्वमेवापहरेद्द्विरायें ॥
दहेत् स्थिते वासृजि सिद्धकर्मा
सद्यःक्षतोक्तं च विधिं विदध्यात् ।
या मांसकं च कठिना बृहत्य-
स्तास्वेव योज्यश्च निर्विर्निधिर्न. ॥
शस्त्रेण चापाट्य सुपक्वमाशु प्रक्षालयेत्पथ्यतमैः कषायैः ।
संशोधनैस्तं च विशोधयेच्च क्षारोत्तरे क्षौद्रघृतनगाढे ॥

शुद्धे च तैलं त्ववचारणीयं विडंगपाठारजनीविपक्कम्।
मेदः समुत्थेतिलकल्कदिग्धंकृत्वोपरिणाद्विगुणं पटांतम्॥
हुताशतप्तेनमुहुः प्रमृज्याल्लोहेन धीमान् दहनं हिताय।
प्रलिप्य दार्वीमथ लाक्षया वा प्रतप्तया स्वेदनमस्य कार्यम्
निपात्य वाशस्त्रमपोह्य मेदो दहेत्सुपक्के त्वथवा विदार्यम्॥
ससैन्धवैः क्षौद्रघृतप्रगाढैः क्षारोत्तरैरेनमभिप्रशोध्य।
तैलंविदध्याद्विकरंजगुंजावंशावलेपंगुदमूत्रसिद्धम्॥
जीमूतकीकोशवतीफलैश्चदतीद्रवंतीत्रिवृतासु चैव।
सर्पिः कृतं हन्त्यपचीं प्रवृद्धां द्विधाप्रवृत्त तदुदारवीर्यम्॥
निर्गुंडिजातीवहुपुष्पयुक्तं जीमूतकं माक्षिकसैंधवाज्यम्।
कर्कारुकौर्वारुकनालिकेरप्रियालपंचांगुलवीजचूर्णैः॥
वातार्बुदं क्षीरघृताम्लसिद्धैरुष्णैः सतैलैरुपनाहयेत्तु।
कुर्याच्चमुल्यान्युपनाहनानि सिद्धैश्च मांसैरथ वेशवारैः॥
स्वेदंविदध्यात्कुशलश्च नाड्याः शृंगेण युक्तं बहुशो हरेच्च।
वातघ्ननिर्यूहपयोम्लभावैः सिद्धं शताख्यत्रिवृतंपिवेद्वा॥
स्वेदोपनाहामृदुवत्सुपथ्यं पित्तार्बुदे कायविरेचनं च।
विकृष्य चोदुंबरशाकगोजीपत्रैर्भृशं क्षौद्रयुतं विलिपेत्॥
श्लक्ष्णीकृतैः सर्जरसप्रियंगुपतंगरोध्रांजनयष्टिकाह्वैः।
विस्राव्यचारग्वधगोजिसोमाः श्यामाप्रयोज्याकुशलेनलेपे
श्यामागिरिह्वांजलिकारसेषु द्राक्षारसे सप्तलिकारसे च।
घृतंपिवेत्क्षीतकसंप्रसिद्धं पित्तार्बुदी तज्वरी च जंतुः॥
शुद्धस्यजंतोःकफजेऽर्बुदे तु रक्ते च सिक्के तु ततोऽर्बुदततः

द्रव्याणियान्यूर्ध्वमधश्चदोषान्हरंतितैः कल्ककृतैः प्रदिह्यात् । कपोतपारावतविड्विमिश्रैः सकांस्यनीलैःशुकलांगलाख्यैः । मूलैस्तु काकादनिमूलमिश्रैः क्षारप्रसिद्धैरथ वा प्रदिह्यात् ॥ निष्पावपिण्याककुलुत्थकल्कैर्मांसैः प्रगाढैर्दधिमस्तुयुक्तैः । लेप विदध्यात्कृमयो यथात्र मूर्छंति मुंचति च मक्षिकाश्च ॥ अल्पावशिष्टैः कृमिभिः कृतेच लिखेत्ततोऽग्नि विदधीतपश्चात् । यदल्पमूलं त्रपुताम्रसीसपट्टै समावेष्ट्य तदायसैर्वा ॥ क्षाराग्निशस्त्राण्यसकृद्विदध्यात्प्राणादिहिंसाभयतोऽप्रमत्तः । आस्फोटजातीकरवीरपत्रैः कषायमिष्टं व्रणशोधनार्थम् ॥ शुद्धे च तैल विदधीत भार्गीविडंगपाठात्रिफलाविपक्कम् । यदृच्छया चोपमतानुपाकं पाकक्रमेणोपचरेद्भिषिग्न्नः ॥ मेदोऽर्बुदंस्विन्नमथो विदाय विशोध्य सीव्येद्धृतरक्तमाशु । ततो हरिद्रागृहधूम्ररोध्रपतगचूर्णैः समन शिलालैः ॥ व्रणं प्रतिग्राह्य मधुप्रगाढैः करंजतैलं विदधीत शुद्धो । सशेषदोषाणि हियोर्बुदानि करोति तान्याशु पुनर्भवन्ति। तस्मादशेषाणिसमुद्धरेत्तु हन्यु- सशेषाणियथाहि वह्निः ॥

इत्यर्बुदचिकित्सा ।

इति वीरसिंहावलोके गलगडगडमालापचीग्रथ्यर्बुदाधिकारः ॥

अथ ज्योतिश्शास्त्राभिप्रायेण श्लीपदरोगस्य हेतुमाह तत्प्रतीकारं च ।

अकुलीनो विकलांगश्चपलो धृष्टश्च जायते मनुजः ।
मुखरो नित्यं श्लीपदी कुजबुधभृगुनंदनैः सहितैः ॥

अथ मंगलबुधशुक्रोपजनितश्लीपदरोगबाधोपशांतये ग्रहत्रयप्रीतये यस्ययस्य यदुक्तं तत्प्रागुक्तमेव कार्यम् । अथ श्लीपदरोगस्य कर्मविपाकहेतुमाह तत्प्रतीकारं च । स्वगोत्रक्षयभिगामी स्याद्योऽन्यां वा श्लीपदी भवेत् अस्य प्रायश्चित्तम् । असौ चांद्रायणमेकं पयोव्रतं च कुर्यात् । तदनुकल्पेन सुवर्णं दद्यात् । पंचाशद्ब्राह्मण-भोजनं कारयेत् । इति वचनात् ।

अथ क्रमप्राप्तस्य श्लीपदरोगस्य सनिदान चिकित्सि-तमाह रुग्विनिश्चयात् ॥

यः सज्वरोवंक्षणजो भृशार्तिः शोफो नृणांपादगतः क्रमेण ।
सश्लीपदःस्यात्करकर्णनेत्रशिश्नोष्ठनासास्वपिकेचिदाहुः ।

लंघनैर्वमनैः स्वेदै रेचनै रक्तमोक्षणैः ।
प्रायः श्लेष्महरैरुष्णैः श्लीपदं समुपाचरेत् ॥
धत्तूरैरंडनिर्गुंडीवर्षाभूशिग्रुसर्षपैः ।
प्रलेपः श्लीपदं हंति चिरोत्थमपि दारुणम् ॥
हितमालेपनं नित्यं चित्रको देवदारु वा ।
सिद्धार्थकः शिग्रुकल्कः सुखोष्णो मूत्रपेषितः ॥
मंजिष्ठां मधुकं रास्नां सहिंस्रां सपुनर्नवाम् ।
पिष्ट्वारनालैर्लेपोयं पित्तश्लीपदशांतये ॥

पलाशमूलस्वरस पिबेद्वा तैलेन तुल्यं सितसर्षपाणाम् ।
मूत्रेण पथ्यामरदारुविश्व सगुग्गुलं श्लीपदिभिर्निषेव्यम् ॥
कृष्णचित्रकदंतीनां कर्षमर्द्धपलं पलम् ।
विंशतिश्च हरीतक्यो गुडस्य तु पलद्वयम् ॥
मधुना मोदकं खादेच्छ्लीपदं हंति दुस्तरम् ।

इति श्रीतोमरवंशावतंसमणिभूपतिभैरवश्रीवीरसिंहविरचिते वीरसिंहावलोके श्लीपदाधिकारः ॥

---

अथ ज्योतिश्शास्त्राभिप्रायेण विद्रधिरोगस्य हेतुमाह तत्प्रतीकारं च ।

मध्ये पापग्रहयोश्चंद्रे मदनस्थितेऽर्कजे जंतो: ।
श्वासक्षयविद्रधिभिर्गुल्मप्लीहादिपीडा स्यात् ॥

अथ पापग्रहांतर्वर्तमानचंद्रजनितविद्रधिनाशाय चंद्रप्रीतये पूर्वोक्तमेव कार्यम् ।

अथ विद्रधिरोगस्य कर्मविपाकहेतुमाह तत्प्रतीकारं च ॥

विद्रधी फलहर्ता स्यान्मनुष्यो ब्राह्मणस्य तु ।
वक्ष्यामि तत्प्रतीकारं दानहोमादिभि: पुन: ॥
यथाविभवतो वापि कुर्यादाम्रतरुं शुभम् ॥
स्निग्धं तथैव शाखाभि: सर्वत: संस्कृतं शुभम् ॥
श्वेतवस्त्रेण संवेष्ट्य फलैरपि सुकल्पितै: ।
गंधपुष्पै: समभ्यर्च्य तंडुलोपरि विन्यसेत् ॥
तंडुलानां परीमाणं द्रोणानां च चतुष्टयम् ।

तदर्धमथवा ग्राह्यं यथाविभवतो नरः ॥
आचार्योऽथ विधिज्ञश्च सर्वशास्त्रार्थतत्त्ववित् ।
धर्मज्ञः सत्यवादी च कुलीनो लोकसंमतः ॥
आहूय परया भक्त्या तेन पूजादि कारयेत् ।
वनस्पते रशनयेत्येतया पूजनादिकम् ।
आग्नेय्यां दिशि होमश्च समिदाज्यतिलैर्भवेत् ।
मंत्रांश्च शास्त्रतो दृष्ट्वा दाता च श्रद्धयान्वितः ॥
तिलहोमो व्याहृतिभिरष्टोत्तरसहस्रकम् ।
यद्देवा इति मंत्रेण चाग्नौ होमः प्रशस्यते ॥
ग्रहशांतिश्च कर्तव्या गृह्योक्तविधिना ततः ।
हुत्वा तु संस्रवान् पात्रे पात्रेऽन्यस्मिन्निधापयेत् ।
तस्यैव विद्रधिर्गच्छेद्व्याधिस्तस्याप्रयत्नतः ।
अग्नेरुत्तरतो भागे विधिज्ञो ब्राह्मणः शुभम् ॥
स्थापयेदव्रणं कुंभ सितवस्त्रेण वेष्टयेत् ।
क्षिप्रेत्तत्र च रत्नानि मृत्तिकाः पंच रोचनम् ॥
अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् ।
पंचत्वक्पल्लवान्क्षिप्त्वा पूरयेत्तीर्थवारिणा ॥
ततोऽभिषेकं कुर्वीत आपोहिष्ठादिभिः क्रमात् ।
हिरण्यवर्णेति त्र्यृचा पवमानेति चैव हि ॥
भद्रासनोपविष्टस्य त्वभिषेकं च कारयेत् ॥
ततः शुक्लांबरधरः शुक्लगंधानुलेपनः ।
सुवर्णमात्र वृक्षे तं प्रदद्यात्प्राङ्मुखाय च ॥

वस्त्रैर्गंधैः पूजिताय रोगी स्वयमुदङ्मुखः ।
आम्र त्वं ब्रह्मणा सृष्टः सर्वप्राणिहिताय च ॥
वृक्षाणामादिभूतस्तु देवानां प्रीतिवर्धन ।
फलचौर्येण यत्प्राप्तं वैरूपं पूर्वजन्मजम् ।
सौवर्णवृक्षदानेन तुष्टाः सर्वाश्च देवताः ॥
विद्रधिं च शरीरोत्थं बाह्यमाभ्यंतरं तथा ॥
विनाशयंतु सकलं स्वोच्चं कुर्वंतु सर्वदा ।
एवं दत्वा तु तद्दानमाचार्यायातिभक्तितः ॥
शनैः शतपदं गत्वा प्रणिपत्य विसर्जयेत् ।
अन्येभ्यो ब्राह्मणेभ्यश्च दद्याच्छक्त्या तु दक्षिणाम् ॥
ब्राह्मणान्भोजयित्वा तु स्वयं भुंजीत बंधुभिः ।
इति विद्रधौ आम्रदानविधिः ।

अथ क्रमप्राप्तस्य विद्रधिरोगस्य सनिदानं चिकित्सितमाह रुग्विनिश्चयात् ॥

त्वग्रक्तमांसमेदांसि प्रदूष्यास्थिसमाश्रिताः ।
दोषाः शनैः शनैर्घोरं जनयत्युद्धता भृशम् ॥
महाशूलं रुजावंतं वृत्तं चाप्यथ वायतम् ।
स विद्रधिरिति ख्यातो विज्ञेयः षड्विधश्च सः ॥
पृथग्दोषैः समस्तैश्च क्षतेनाप्यसृजा तथा ।
मुष्टिप्रमाणो गुल्मस्तु विद्रधिस्तु ततः परम् ।
गुल्मास्तिष्ठंति दोषेषु विद्रधिर्मांसशोणिते ॥
विद्रधिः पच्यते तस्माद्गुल्माख्यो न विपच्यते ।

आध्मानं बद्धनिष्यंदं छर्दिहिक्कातृषान्वितम् ॥
रुजाश्वाससमायुक्तं विद्रधिर्नाशयेन्नरम् ।

वृंदसंग्रहात्–

जलौकापातनं शस्तं सर्वस्मिन्नेव विद्रधौ ।
मृदुर्विरेको लघ्वन्नं स्वेदः पित्तांतरं विना ॥
वातघ्नौषधिकल्कैस्तु वसातैलघृतप्लुतैः ।
सुखोष्णो बहलोपेतः प्रयोज्यो वातविद्रधौ ॥
स्वेदोपनाहः कर्तव्यः शिग्रुमूलसमन्वितः ।
यवगोधूममुद्गैश्च स्विन्नपिष्टैः प्रलेपयेत् ॥
विलीयते क्षणेनैव चापक्वश्चैव विद्रधिः ॥
पैत्तिकः शर्करालाजामधुकैः सारिवायुतैः ।
प्रदिह्यात्क्षीरिपिष्टैर्वा पयस्योशीरचंदनैः ॥
पिबेद्वा त्रिफलाक्काथं त्रिवृताकल्कसंयुतम् ।
इष्टिकासिकतालोहगोशकृत्तुषपांसुभिः ॥
गोमूत्रपिष्टैः सततं स्वेदयेच्छ्लेष्मविद्रधिम् ।
सौभांजनकनिर्यूहो हिंगुसैंधवसंयुत ॥
अचिराद्विद्रधिं हंति प्रातःप्रातर्निषेवितः ।
श्वेतवर्षाभुवो मूलं मूलं वरुणकस्य च ।
जलेन क्वथितं पीतमपक्वं विद्रधिं जयेत् ॥
कासीससैंधवशिलाजतुहिंगुचूर्ण-
मिश्रीकृतो वरुणवल्कलजः कषायः ॥
अभ्यंतरोत्थितमपक्वमतिप्रमाणं

व्रणामयं जयाति विद्रधिमुग्रशोफम् ॥
अपक्वे त्वेतदुद्दिष्टं पक्वे तु व्रणवत्क्रिया ॥

इति श्रीतोमर० वीरसिंहावलोके विद्रधिचिकित्साधिकारः ॥

अथ क्रमप्राप्तस्य व्रणरोगस्य ज्योतिश्शास्त्राभिप्रायेण हेतुमाह तत्प्रतीकारं च । यथोक्तं जातके-
व्रणितांग. स्त्रीलोलश्चौर' कांत. सुसंमतः स्त्रीणाम्
भौमशशांकसुरेज्यैरेकस्थैश्चंडरोगश्च ।
भौमदशायामपि व्रणोद्भव इति दर्शनात् । अन्यच्च-

कौमारदारमाढ्यं हेमालंकारभूषितं प्राज्ञम् ।
शूरं सव्रणगात्रं रुधिराङ्गनिरीक्षितो जीवः ॥

भूसुतशशिसुरगुरुसंयोगजनितव्रणवेदनाविघाताय ग्रहत्रयप्रीतये पूर्वोक्तमेव कार्यम् । भौमविलोकितगुरुव्रणशांत्यै पूर्वोक्तं गुरुपूजादिकं कार्यम् ।

अथ कर्मविपाके हेतुमाह तत्प्रतीकारं च । जलाग्न्युद्बंधनादिना म्रियते स उदरव्रणी भवति । गोद्वयं दद्यात् पंचाशद्ब्राह्मणभोजनं कारयेत् । दक्षिणां च दद्यात् ।
तथाच-

अतिमानादतिक्रोधादतिस्नेहाद्भयादपि ।
यो धर्मनिश्चयं जानन्नन्यथा कुरुते तु यः ।
स पूयशोणितवहद्व्रणी भवति मानवः ॥

तच्छांतये तप्तकृच्छ्रं कुर्यात्तिलप्रस्थदो भवति । दर्भाज्यतिलैर्व्याहृतिभिरष्ट सहस्रं जुहुयात् । पंचाशद्ब्राह्म-

णभोजनं तु कारयेत्।तथा च महाफलतस्करः पादव्रणी भवति।तथा च यश्चांडालादिवचः शृण्वन्स्वयं भुंक्ते स पित्तोद्रेकाद्व्रणवान्भवति। स कृच्छ्रातिकृच्छ्रं कुर्याद्यथा विभवं तिलान्दद्यात्। सर्पिर्मधुयुतं चाष्टोत्तरशतं होमं कुर्यात्। यदुक्तम्।

यमसूक्तेन विप्रेन्द्रः सर्पिषा मधुसयुतम्
जुहोत्यष्टोत्तरशतं यमप्रीत्यर्थमेव हि॥

इति। पद्मपुराण वचनात्।

इति पित्तोद्रेके विधिः।

पलेन वा तदर्धेन तदर्धार्धेन वा पुनः॥
कारयेद्वाहनं हैमं चतुर्दंतं च वारणम्।
दंताः स्वर्णमयाः कार्या रत्नैर्नानाविधैर्युताः॥
सर्वाभरणसयुक्त कारिण चोपकल्पयेत्।
यत्र सर्वं प्रदेयं हि तस्य पार्श्वे समाहितः॥
निदध्याद्विधिवत्प्राज्ञः सर्वव्रणविशुद्धये।
उपचारैः षोडशभिरर्चयेद्गधपुष्पकैः॥
ततो ब्राह्मणमाहूय सर्वशास्त्रार्थकोविदम्।
श्रुतवृत्तोपसंपन्नमनुद्वेगकर नृणाम्॥
भक्त्या सम्पूज्य वस्त्राद्यैर्होमं तेन च कारयेत्।
मन्त्रैः पौराणिकैः सम्यक्सहिताशास्त्रकोविदैः॥
चत्वारो दिग्गजा ये च पुष्पदंतादयश्च ये।
सार्वभौमादयो ये च ह्याहुत्या तोपयामि तान्॥

सामिदाज्यतिलैर्होमो गजस्य प्रीतये भवेत् ।
तस्मै हुतवते सम्यग्व्रणी प्रीत्यर्थमादृतः ॥
मन्त्रेणानेन विधिवद्दद्याद्भक्तिसमन्वितः ।

प्राङ्मुखस्स व्रणी उदङ्मुखायेंद्रस्य वाहनं दद्यात् ।

ऐरावतश्चतुर्दंतो गजानां नायकः स्वयम् ।
दिग्दंतिनां पूज्यतमो व्रणं क्षपयतु प्रभुः ॥
अनंतरमनुव्रज्य तमाचार्यं मुदान्वितः ।
ब्राह्मणान्भोजयित्वा च स्वयं भुंजीत वाग्यतः ॥
एवंकृते व्रणव्याधिस्तत्क्षणादेव नश्यति ।
तैः सर्वव्रणिभिर्नूनं कार्यमारोग्यहेतवे ॥

इति सर्वव्रणप्रगजदानविधिः ।

परव्रतभेदी व्रणकीलकी भवति स कृच्छ्रं कृत्वा आयसं दद्यात् ॥

अथ चर्मकीलकव्रणरोगे सशोफे सनिदानं चिकित्सितमाह रुग्विनिश्चयात् ।

एकदेशोत्थितः शोफो व्रणानां पूर्वलक्षणम् ॥
षड्विधः स्यात्पृथक्सर्वदोषैस्त्वागंतुकस्तथा ।
शोफाः षडेते विज्ञेयाः प्रागुक्ते शोफलक्षणे ॥
विशेषः कथ्यते चैषां पक्वापक्वविनिश्चये ।
विषमः पच्यते वातात्पित्तोत्थश्चाचिरं चिरात् ॥
कफजः पित्तजः शोफो रक्तजंतुसमुद्भवः ।
मेदोष्मताल्पशोफत्वं काठिन्यं त्वक्सवर्णता ॥
मंदवेदनता चैव शोफानामादिलक्षणम् ।

नत्तेऽनिलाद्रुङ्नविना चपित्तं पाकः कफंचापि विनानपूयः
तस्माद्धिसर्वेपरिपाककालेदोषैस्त्रिभिर्यातिगदोविपाकम् ।
कक्षं समासाद्य यथैव वह्निर्वातेरितः सदहति प्रसह्य ॥
तथैव पूयो ह्यविनिस्सृतो हि मांसंशिराः स्नायुचखादतीह
आदौ विम्लापनं कुर्याद्द्वितीयमवसेचनम् ॥
तृतीयमुपनाहं च चतुर्थं पाटनक्रियाम् ।
पचमं शोधनं कुर्यात्पष्ट रोपणमिष्यते ॥
एते क्रमा व्रणे प्रोक्ताः सप्तमं वैकृतापहम् ।
अभ्यज्य स्वेदयित्वा तु वेणुनाड्या शनैःशनैः ॥
विमर्दयेद्धिपङ्मंदं तलेनांगुष्टकेन वा ।
रक्तावसेचनं कुर्यादादावेव विचक्षण. ॥
शोफो महति संरब्धो वेदनायाति वा व्रणः ।
यो न याति शमं लेपैः स्वेदसेकाच तर्पणैः ॥
सोपि नाशं व्रजत्याशु शोफः शोणितमोक्षणात् ।
एकतश्च क्रियाः सर्वा रक्तमोक्षणमेकत ॥
रक्तं च विक्रियां याति तद्धन्नास्ति न चातिरुक् ।
हरत्यष्टांगुलं तुंबी शृंगी च द्वादशांगुलम् ॥
शिरासर्वांगजं रक्त जलौका ग्रंथिमुद्धतम् ।
तुंबी कफोत्थे वातोत्थे शृंगी पैत्ये जलौकसम् ॥
सन्निपातोत्थिते नाड्यां बहुदोषे प्रयोजयेत् ।
मातुलिंगाग्निमंथौ च सुरदारुमहौषधम् ॥
अहिंस्रा चैव रास्ना च प्रलेपो वातशोफजित् ।

दूर्वानलकमूलं च मधुकं चंदनं तथा ॥
शीतलैश्च गणैः सर्वैः प्रलेपः पित्तशोफहा ।
न्यग्रोधोदुंबराश्वत्थप्लक्षवेतसवल्कलैः ॥
ससर्पिभिः प्रलेपः स्याच्छोफनिर्वापणः परः ।
अजगंधाश्वगंधा च काला सरलया सह ॥
एकैषिका च शृंगी च प्रलेपः सूक्ष्मशोफहृ ।।
न रात्रौ लेपनं दद्याद्दत्तं च पतितं तथा ।
न च पर्युषितं शुष्यमाणं नैव च धारयेत् ॥
सतिला सातसीबीजा दध्यम्लसक्तुपिंडकाः ।
सकिण्वकुष्ठलवणा शस्ताः स्युरुपनाहने ॥
शणमूलकशिग्रूणां फलान्यसितसर्षपाः ।
सक्तवः किण्वमुष्णानि द्रव्याण्येतानि पाचने ॥
हस्तिदंतं जले घृष्टं बिंदुमात्रप्रलेपनात् ।
अत्यर्थकाठिने वापि शोफे पाचनभेदनम् ॥
चिरबिल्वाग्निकौ दंती चित्रको हयमारकः ।
कपोतकंकगृध्राणां पुरीषाणि च दारणे ॥
यावंति क्षारद्रव्याणि क्षारो वा दारुणः परः ।
ततः प्रक्षालने क्वाथः पटोलीनिंबपत्रजः ॥
आलेपः पूतिमांसानां मांसस्थानामरोहताम् ।
कल्कः संरोहणः कार्यस्तिलानां मधुनान्वितः ॥
निंबपत्रमधुभ्यां तु युक्तः संशोधनः स्मृतः ।
निम्बपत्रं तिला दंती त्रिवृतं हयमारकम् ॥

दुष्टव्रणप्रशमनो लेप शोधनकेसरी ।
मधुयुक्ता शरपुखा सर्वव्रणविरोहणी ॥
व्रणान्संशोधयेद्वर्त्या सूक्ष्म्या संध्यास्थिमर्मगान् ।
अभयात्रिः वृतादर्तलिंगालीमधुसैंधवै ॥
सूपर्वीपत्रधत्तूरवलामोटाकुठेरका ।
पृथगेतैः प्रलेपेन गंभीरव्रणरोपणा ॥
पंचवल्कलचूर्णैर्वा शुक्तिचूर्णसमायुतै ।
धातकीरोध्रचूर्णैर्वा तथा रोहंति ते व्रणाः ॥
निंबपत्रवचाहिंगुसर्पिर्लवणसैंधवैः ।
धूपन कृमिरोगघ्न व्रणकंडूरुजापहम् ॥
अग्निदग्धे व्रणे सम्यक्प्रयुंजीत चिकित्सकः ।
पित्तविद्रधिवीसर्पशमनं लेपनादिकम् ॥
वाताभिभूतान्व्रस्तांश्च धूपयेदुग्रवेदनान् ।
यवाज्यभूर्जमदनश्रीवेष्टकसुराह्वयै ॥
करंजारिष्टनिर्गुंडीरसो हन्यात्कृमिव्रणान् ।
लशुनेनाथ वा दद्याल्लेपनं कृमिनाशनम् ॥
ये क्लेदपाकस्रुतिगधवतो व्रणा महांतः सरुज सशोफाः ।
प्रयांति ते गुग्गुलुमिश्रितेन पीतेन शांतिं त्रिफलारसेन ॥

इति त्रिफलागुग्गुलुः ।

जातीनिंबपटोलपत्रकटुकादार्वीनिशासारिवा-
मंजिष्ठाभयसिक्थतुत्थमधुकैर्नक्ताह्वबीजैः समैः ।

सर्पिः सिद्धमनेन सूक्ष्मवदना मर्माश्रिताः स्राविणो
गंभीराः सरुजो व्रणाः सगतिकाः शुष्यंति रोहंति च ॥
इति जात्याद्य घृतम् ।
मनःशिला समंजिष्ठा सलाक्षा रजनीद्वयम् ।
प्रलेपः सघृत क्षौद्रस्त्वग्विशुद्धिकरः परः ।
अयोरजः सकासीस त्रिफलाकुसुमानि च ।
प्रलेप· कुरुते कार्त्स्न्यं सद्य एव नवत्वचि ॥
कालीयकफलाम्रास्थिहेमकालारसोत्तमैः ।
लेप सगोमयरसः ससवर्णकरः पर· ॥
इति शोफव्रणचिकित्सा ॥
सद्य· कृतं व्रण वैद्य सशूलं परिषेचयेत् ।
यष्टीमधुकयुक्तेन सर्पिषा माक्षिकेण तु ॥
मत्वागतुव्रण वैद्यो घृतक्षौद्रसमन्विता ।
शीता क्रिया प्रयोक्तव्या पित्तरक्तोष्मनाशिनी ॥
आमाशयस्थे रुधिरे वमनं पथ्यमुच्यते ।
पक्वाशयस्थे देय च रेचनं च समासतः ॥
क्वाथो वृशत्वगेरडश्वदंष्ट्राश्मभिदा कृत ।
सहिंगुसैंधव पीत कोष्ठस्थं स्रावयेदसृक् ।
यवकोलकुलुत्थानां निस्नेहेन रसेन वा ।
भुंजीतान्नं यवागू वा पिबेत्सैंधवसंयुतम् ॥
इति सप्ताहिक प्रोक्त· सद्योव्रणहितो विधिः ।
सप्ताहात्परत कार्या शरीरव्रणवत्क्रिया ॥

व्रणे श्वयथुरायासात्स च रागश्च जागरात्।
तौ च रुक्च दिवास्वापात्ते च मृत्युश्च मैथुनात्॥

इति सद्योव्रणचिकित्सा।

आदौ भग्नं विदित्वा तु सेचयेच्छीतवारिणा।
पंकेनालेपनं कुर्याद्बंधनं च कुशान्वितम्॥
आलेपनार्थे मंजिष्ठा मधुकं चाम्लपेषितम्।
शतधौतघृतोन्मिश्रं शालिपिष्टं च लेपनम्॥
न्यग्रोधादिकषायं तु सुशीतं परिषेचनम्॥
पंचमूलीविपक्वं तु क्षीरं दद्यात्सवेदने॥
सुखोष्णमवचार्यं वा चुक्रतैलं विजानता।
गृष्टिक्षीरं ससर्पिष्कं मधुरौषधसाधितम्॥
संधिभग्नेऽस्थिभंगे च पिबेत्क्षीरेण वा पुनः।
मूलं सृगालविन्नाया· पीत्वा मांसरसेन तु॥
तच्चूर्णीकृत्य सप्ताहादस्थिभंगमपोहति।
आभाचूर्णं मधुयुतमस्थिभंगे त्र्यहं पिबेत्।
पीत्वा चापि भवेत्सम्यग्वज्रसारनिभं दृढम्॥
लवणं कटुकं क्षारमम्लं मैथुनपानकम्।
व्यायामं न च सेवेत भग्नो रूक्षान्नमेव च॥

इति भग्नाधिकार॥

यः शोफमाम इति पक्वमुपेक्षते यो
यो वा व्रणं प्रचुरपूयमसाधुवृत्त।
अभ्यंतरं प्रविशति प्रविदार्य तस्य

स्थानानि पूर्वविहितानि ततः सपूयः ॥
तस्यातिमात्रगमनाद्गतिरिष्यते तु
नाडीव यद्वहति तेन मता तु नाडी
नाडीनां गतिमन्विष्य शस्त्रेणोत्पाट्य कर्मवित् ।
सर्वं व्रणक्रमं कुर्याच्छोधनं रोपणादिकम् ॥
नाडीं वातकृतां साधु पाटितां लेपयेद्भिषक् ।
प्रत्यक्पुष्पीफलयुतैस्तिलैः पिष्टैः प्रलेपयेत् ॥
पैत्तिकां तिलमञ्जिष्ठानागदंतीनिशायुगैः ।
श्लैष्मिकीं तिलयष्ट्याह्वनिकुंभारिष्टसैंधवैः ॥
शल्यजां तिलमध्वाज्यैर्लेपयेच्छिन्नशोधिनीम् ।
आरग्वधनिशाकालाचूर्णाज्यक्षौद्रसंयुता ॥
सूत्रवर्तिर्व्रणे योज्या शोधिनी गतिनाशिनी ।
वर्तीकृतं माक्षिकसंप्रयुक्तं नाडीघ्नमुक्तं लवणोत्तमं च ।
दुष्टे व्रणे यद्विहितं च तैलं तत्सेव्यमानं गतिमाशु हंति ॥
जात्यर्कशम्याककरंजदंतीसिंधूत्थसौवर्चलयावशूकैः ।
वर्तिः कृता हन्त्यचिरेण नाडीं स्नुक्क्षीरपिष्टा सह सैंधवेन ॥
कृशदुर्बलभीरूणां नाडी मर्माश्रिता तु या ।
क्षारसूत्रेण तां छिंद्यान्न शस्त्रेण कदाचन ॥
गुग्गुलुस्त्रिफलाव्योषैः समांशैश्चाज्ययोजितैः ।
नाडीदुष्टव्रणं हंति भगंदरविनाशनः ॥
समूलपत्रां निर्गुंडीं पीडयित्वा रसेन तु ।
तेन सिद्धं समं तैलं नाडीदुष्टव्रणापहम् ॥
इति श्रीतोमर०वीरसिंहावलोके व्रणशोथभग्ननाडीव्रणाधिकारः ।

अथ भगंदररोगस्य ज्योतिश्शास्त्राभिप्रायेण हेतुमाह तत्प्रतीकारं च यथोक्तं जातके।

कुष्ठभगंदररोगैरभिभूतं ह्रस्वजीवितं निधनम्।
सर्वारंभविहीनं जनयति कितवं सदा दुष्टम्॥

अपरं च–

रोगभंगदराद्यैः सतप्ता बधुभिः सह विरुद्ध।
कर्कटके दिननाथे भौमेन निरीक्षिते रवेः पुत्रे॥

अन्यच्च।

कुष्ठकंडूविकारैश्च क्षयकुष्ठभगंदरैः॥
गजादिवाहनभयं भवेच्चंद्रांतगे बुधे॥

अत्र प्रथमश्लोके शनैश्चरस्य पठितत्वात्। अथाष्टमस्थानस्थशनिजनितभगंदररोगबाधोपशांतये शनिप्रीतये पूर्वोक्तमेव जपहोमादिकं स्नानं सकलमपि कुर्यात्। तथाच। कर्कटराशिस्थितभौमावलोकितरविशनिजनितभगंदररोगोपशांतये रविप्रीतये पूर्वोक्तमेव जपहोमादिकं कुर्यात्। तथाच चंद्रदशांतवर्तमानबुधजनितभगंदररोगोपशांतये चद्रस्य पूर्वोक्तमेव जपहोमादिक कुर्यात्। तेनोपशांतिर्भवति। अथ भगंदररोगस्य कर्मविपाके हेतुमाह तत्प्रतीकारं च। पूर्वजन्मनि राज्ञा धर्मनिश्चयार्थं पुरोहित· प्रहितः स द्रव्य गृहीत्वा यथावद्धर्मं न निश्चिनोति स भगंदररोगवान्भवति॥ तदुक्तमादित्यारोह·।

यो गृहीत्वा द्विजो मोहान्नियुक्तो धर्मनिश्चये ।
भगदरो भवेत्तस्य ह्यधर्मं वदतो मुखात् ॥
सहिरण्यं वस्त्रं रत्नधान्यादि भूमिं ब्राह्मणेभ्यो भोजनं च दद्यात् । ततो रोगान्मुक्तो भवति । दुष्टव्रणानामप्येवं पद्मपुराणे । 'आचार्यभार्यागमने भगंदरयुतो भवेत्' । यथाह वृद्धबोधायनो गातमश्च ।

माणिक्यं पद्मरागं च वज्रं वैडूर्यमेव च ।
मौक्तिकं पुष्यरागं च सम्यङ् मरकतं तथा ॥
हरितं च नवैतानि स्वर्णपात्रोपरि न्यसेत् ।
अथवा राजते ताम्रे ग्रहान्मन्त्रः प्रपूजयेत् ॥
नवग्रहाणां प्रीत्यर्थं ब्रह्मणा निर्मितं पुरा ।
गन्धपुष्पाक्षतैर्धूपैर्नैवेद्यैस्तान्प्रपूजयेत् ॥

स्वलिङ्गैश्चैव मन्त्रैश्च होमः कार्यश्च पूर्ववत् ।
पूर्ववत् ग्रहयज्ञोक्तमार्गेणेत्यर्थः ।

ततो ब्राह्मणमाहूय सर्वशास्त्रार्थकोविदम् ।
आदित्यादिग्रहाः सर्वे नवरत्नप्रदानतः ॥
विनाशयन्तु मे दुष्टं क्षिप्रमेव भगंदरम् ।
अनेन कर्मणा भूत यथावद्विहितेन तु ॥
नरो नैरुज्यमाप्नोति निःसंदिग्धं भगंदरी ।

इति भगंदरे नवरत्नदानविधिः ।

अथ क्रमप्राप्तस्य भगंदररोगस्य सनिदानं चिकित्सितमाह रुग्विनिश्चयात्।

गुदस्य द्व्यंगुले क्षेत्रे पार्श्वतः पिटिकार्तिकृत्।
भिन्ना भगंदरो ज्ञेयः स च पंचविधो भवेत्॥
कटीकपालनिस्तोददाहकंडूरुजादयः।
भवंति पूर्वरूपाणि भविष्यन्ति भगंदरे॥
वृषणासनयोर्मध्यप्रदेशे भग उच्यते।
तमेव दारयत्यस्माद्भगदर इति स्मृतः॥
वातमूत्रपुरीषाणि कृमयः शुक्रमेव च।
भगंदरात्स्रवंतश्च नाशयति तमातुरम्॥

अथ वृंदसंग्रहात्—

गुदस्य श्वयथुं दृष्ट्वा विशोष्यातस्तु शोधयेत्।
रक्तावसेचनं कार्यं यथापाकं न गच्छति॥
वटपत्रेष्टिकाशौंडीगुडूच्यः सपुनर्नवाः।
सुपिष्टाः पिटिकावस्थे लेपः शस्तो भगंदरे॥
पिटिकानामपक्वानामपतर्पणपूर्वकम्॥
कर्म कुर्याद्विरेकांत भिन्नानां वक्ष्यते क्रिया।
त्रिवृत्तिला नागदंती मंजिष्ठा सह सर्पिषा।
उत्सादनं भवेद्युक्तं सैंधवक्षौद्रसंयुतम्॥
रसांजनं हरिद्रे द्वे मंजिष्ठानिंबपल्लवाः।
तैलं घृतं वातपक्वभगंदरविनाशनम्॥
स्नुह्यर्कदुग्धदार्वीभिर्वर्तिं कृत्वा विचक्षणः।

भगंदरगतिं ज्ञात्वा पूरयेत्तां प्रयत्नतः ॥
दुष्टां सर्वशरीरस्थां नाडीं हन्यान्न संशयः ।
तिलाभयाकुष्ठमरिष्टपत्र निशा वचा रोध्रमगारधूमः ॥
भगंदरे नाड्युपदंशयोश्च दुष्टव्रणे शोधनरोपणोयम् ।
त्रिफलारससंयुक्त बिडालास्थिप्रलेपनम् ॥
भगंदरं निहत्याशु दुष्टव्रणहरं परम् ।
सुधावचालाङ्गलिनीं हरितालं सुवर्चिकाम् ।
ज्योतिष्मती च संहृत्य तैलं धीरो विपाचयेत् ॥
एतद्विष्यंदन नाम तैलं दद्याद्भगंदरे ।
शोधनं रोपणं चैव दुष्टनाडीं व्यपोहति ॥

इति विष्यंदन तैलम् ।

करवीरनिशादंतीलांगलीलवणाग्निभिः ।
मातुलिंगार्कपयसा पचेत्तैलं भगंदरे ॥

इति करवीराद्य तैलम् ।

व्यायामं मैथुनं युद्ध पृष्ठयानं गुरूणि च ।
संवत्सरं परिहरेदुपगूढव्रणो नर ॥

इति श्रीतोमर० वीरसिंहावलोके भगंदराधिकार. ॥

---

अथ क्रमप्राप्तयोरुपदंशशूकयोर्ज्योतिश्शास्त्राभिप्रायेण हेतुमाह तत्प्रतीकार च । यथोक्तं जातके-
अंतर्दशादशायां सितस्य शशिनो यदा भवति ।
नखदशनाशिश्नरोगै सह भवति च कामलारोगै ॥

अथ शुक्रदशावर्तमानचंद्रजनितोपदंशशूकदोषोपशांत्यै चंद्रप्रीतये पूर्वोक्तमेव जपहोमदानादिकं विधानं कुर्यात्
अथोपदंशशूकरोगयोः कर्मविपाकहेतुमाह तत्प्रतीकारं च ।

मातृगामी भवेद्यस्तु लिंगं तस्य विनश्यति ।
तस्य प्रातिक्रियां कर्तुं लिंगमुत्तरतो न्यसेत् ॥
कृष्णवस्त्रसमाच्छन्नं कृष्णमाल्यविभूषितम् ।
तस्योपरि क्षिपेत्कांस्यपात्रे देवं धनेश्वरम् ॥
सुवर्णनिष्ककर्षेण निर्मितं नरवाहनम् ।
यजेत्पुरुषसूक्तेन धनदं विष्णुरूपिणम् ॥
अथर्ववेदविप्रेण ह्यथर्वाणं समापयेत् ।
सुवर्णपुत्तिकां कृत्वा निष्कविंशतिसंख्यया ॥
दद्याद्विप्राय संपूज्य निष्कविंशमिति ब्रुवन् ।
निधीनामधिपो देवः शंकरस्य प्रियः सखा ॥
सौम्याशाधिपतिः स्वामी मम पापं व्यपोहतु ।
इमं मंत्रं समुच्चार्य आचार्याय यथाविधि ॥
दद्यादेव धनेशं तु लिंगनाशे तु सिद्धये ।

इत्युपदंशशूकरोगहरो धनददानविधिः ॥

---

अथ क्रमप्राप्तस्योपदंशरोगस्य सनिदानं चिकित्सितमाह रुग्विनिश्चयात् ।

हस्ताभिघातान्नखदंतपातादधावनादत्युपसेवनाद्वा ।
योनिप्रदोषाच्च भवंति शिश्ने पंचोपदंशाविविधोपचारैः ॥
अथ वृंदसंग्रहात्–

रिनग्घस्विन्नस्य तेष्वादौ ध्वजमध्याशिराव्ययः ।
जलौकःपातनं च स्याद्यद्राघ' शोधन तथा ॥
पाको रक्ष्यः प्रयत्नेन शिश्नक्षेपकरो हि स' ।
पटोलनिंबत्रिफलागुडूचीकाथ पिबेद्वा खदिरासनाभ्याम् ।
सगुग्गुलुं वा त्रिफलायुतं वा सर्वोपदशापहरः प्रयोग. ॥
त्रिफलायाः कषायेण भृंगराजरसेन वा ।
व्रणप्रक्षालनं कुर्यादुपदंशप्रशांतये ॥
दहेत्कटाहे त्रिफलां समांशां मधुसयुताम् ॥
उपदंशे प्रलेपोऽयं सद्यो रोहयति व्रणम् ॥
जपाजात्यश्वमारार्कशम्याकानां दलैः पृथक् ।
कृतं प्रक्षालने क्वार्थं मेढ्रपाके प्रयोजयेत् ॥
करंजनिंबार्जुनशालजंबूवटादिभि कल्ककपायसिद्धम् ।
सर्पिर्निहन्यादुपदंशदोषं सदाहपाकं स्रुतिरागयुक्तम् ॥

इति श्रीतोमरव० वीरसिंहावलोके उपदशाधिकार' ॥

अथ क्रमप्राप्तस्य शूकरोगस्य सनिदान चिकित्सितमाह रुग्विनिश्चयात् ।

अक्रमाच्छेफसो वृद्धिं योभिवांछति मूढधीः ।
व्याधयस्तस्य जायते दश चाष्टौ च शूकजा. ॥
गौरसर्षपसंस्थाना. शूकनिर्भुक्तहेतुका ॥
पिटिकाः श्लेष्मवाताभ्यां ज्ञेयाः सर्षपिकास्तु ताः ।

१ त्रिवृतायुतमित्यपि केषुचित्पुस्तकेषु ।

जले जंतुविशेषः स्याच्छूको लिंगविवृद्धिकृत्।
तद्योगादपरेऽपि स्यु प्रयोगाः शूकसंज्ञिकाः॥
हितं च सर्पिषः पानं पथ्यं वापि विरेचनम्।
हितं शोणितमोक्षश्च यथापि लघुभोजनम्॥
शूकरोगं हरेद्रक्तं पक्के शोधनरोपणम्।
त्रिकटुत्रिफलारोधैर्लेपस्तैलं च रोपणम्॥

इति श्रीतोमर० वीरसिंहावलोके शूकाधिकारः।

अथ क्रमप्राप्तस्य कुष्ठरोगस्य ज्योतिश्शास्त्राभिप्रायेण हेतुमाह तत्प्रतीकारं च। यथोक्तम्—

छिद्रस्थराहुमार्तंडौ कुष्ठरोगप्रदायकौ।
महाकुष्ठकरस्ताभ्यां संगतो मंगलः परम्॥

भौमदशायां लभते नृपाग्निचौरामयादिरिपुमंदान्।
मूर्छाशोणितदोषाः शाखाच्छेदो व्रणश्चापि॥

तथा च—

कुत्सितचरितः कुष्ठी सितार्करविसुतैः सहितैः।

अपरंच—

कुत्सितरामाभर्त्ता बहुशत्रुः क्षीणबांधवो दीनः।
भौमगृहे सितदृष्टे दिवसकरे जायते कुष्ठी॥

तथा च—

कुष्ठभगंदररोगैरभिभूतो ह्रस्वजीवितं निधनम्।
स रिभविहीनं जनयाति कितव सदा पुरुषम्॥

शनिरिति विशेष। अपरं च।

पूर्वकर्मविपाकोत्थ पार्वतीनाथ सर्वग ।
कुष्ठहा भव सर्वेश रक्ष मां पार्वतीपते ॥
इति कुष्ठहरो रौप्यवृषभदानविधिः ।

विशेषांतरमपि ।

ब्रह्महा नरकस्यांते पांडुकुष्ठी प्रजायते
प्रायश्चित्तं प्रकुर्वीत यथोक्तमृषिभाषितम् ॥

अथ श्वित्रकुष्ठस्य जातकाभिप्रायेण हेतु प्रतीकारंचाह।
शिरसो रुग्गलरोगः श्वित्रं सहसा ज्वर च शूलं च ।
तपनदशायां शुक्रे देशत्यागो भवेदरिभिः ॥

अथ आदित्यदशान्तर्वर्तमानशुक्रजनितश्वित्रिकुष्ठोपशमनाय शुक्रप्रीतये पूर्ववद्यथोक्त विधान कुर्यात् ।
अथ श्वित्रिकस्य कर्मविपाकहेतुमाह तत्प्रतीकारं च ।
वस्त्रापहारी श्वेतकुष्ठी भवति स सातपनं कुर्यात् । चित्रं देवानामितिमंत्रमयुतं जपेत् । चरुघृताभ्यामष्टोत्तरसहस्र जुहुयात् । रजतं वस्त्राणि च दद्यात् । सूर्यप्रीतये अलंकृता गामेकां श्वेतां पयस्विनीं दद्यात् ।

इति श्वित्रिप्रतीकार ॥

अथ रविदशातर्वर्तमाने बुधे पामारोगो भवति तदुपशान्तये बुधप्रीत्यै पूर्ववज्जपादिक कार्यम् ।

अथ पामारोगकर्मविपाकहेतुमाह तत्प्रतीकारं च ।
पूर्वजन्मनि परविपयमनुलोभयाति य स पामावान्भवति । तस्यागे शोणित पूयश्च स्रवति । स ' उपवासत्रयं

कृत्वा दद्याद्ब्राह्मणभोजनम्' इति वचनात्। अत्र व्याधेर्गुरुलघुभावौ द्रष्टव्यौ। प्रकारान्तरमपि लवणमधुकृष्णाजिनमहादानादि कुरुक्षेत्रादिविशिष्टदेशेषु ग्रहणादिविशिष्टकालेषु निषिद्धदातृभ्यः प्रतिगृह्णाति स्वयमपात्रीभूतो जन्मान्तरे पामाकण्डूभ्यां पीड्यमानः कासी श्वासी कृमिकुक्षिश्च भवति। तदुपशांतये महिषीं यथोक्तविधिना दद्यात्। वित्तशाठ्यं विवर्जयेत्।

तथा चोक्तम्।

काम्यं यद्दीयते दानं तत्समग्रं सुखावहम्।
असमग्रं तु दोषाय भवतीह परत्र च॥

पुरुषसूक्तं सहस्रनामस्तोत्रम् उद्यन्नद्येत्यृचो जपेत्। प्रत्यष्टोत्तरयुतं चरुघृताभ्यां जुहुयात्। पंचाशद्ब्राह्मणभोजनं कारयेत्। रक्तवासांसि दद्यात्। तदुक्तं महाभारते।

हिरण्यं रक्तवासांसि पंचाशद्विप्रभोजनम्।
सहस्रकलशस्नानं तस्य रोगस्य शांतये॥

तस्य—वासुदेवस्य। इत्येतदुक्ताशक्तौ पंचाशद्ब्राह्मणभोजनं सहस्रकलशस्नानं नामत्रयमष्टोत्तरायुतं जपेत्तेनोपशाम्यति।

इति पामाकंडूप्रतीकारः।

अथ ज्योतिश्शास्त्राभिप्रायेण दद्रुविचर्चिकापामादीनां हेतुमाह तत्प्रतीकारं च। यदुक्तं

अथ क्रमप्राप्तस्य कुष्ठरोगस्य सनिदानं चिकित्सितमाह रुग्विनिश्चयात् ।

विरोधीन्यन्नपानानि द्रवस्निग्धगुरूणि च ॥
भजतामागतांश्छर्दिवेगांश्चान्यान्प्रतिघ्नताम् ।
व्यायाममग्निसंतापं परिभुज्य निषेविणाम् ॥
शीतोष्णलङ्घनाहारान्क्रमं मुक्त्वानिषेविणाम् ।
घर्मश्रमभयार्तानां द्रुतशीतांबुसेविनाम् ॥
अजीर्णाध्यशनानां च पञ्चकर्मापचारिणाम् ।
नवान्नदधिमत्स्यादिलवणाम्लनिषेविणाम् ॥
माषमूलकपिष्टान्नतिलक्षीरगुडाशिनाम् ।
व्यवाय चाप्यजीर्णेऽन्ने निद्रां च भजतां दिवा ॥
विप्रान्गुरून्धर्षयतां पापं वा कर्म कुर्वताम् ।
वातादयस्त्रयो दोषास्त्वग्रक्तं मांसमंबु च ॥
दूषयंति सकुष्ठानां सप्तको द्रव्यसंग्रहः ।
अतः कुष्ठानि जायंते सप्त चैकादशैव तु ॥
कुष्ठानि सप्तधा दोषैः पृथग्द्वन्द्वैः समागतैः ।
सर्वेष्वपि त्रिदोषेषु व्यपदेशोऽधिकोऽन्यतः ॥
अतिश्लक्ष्णः खरस्पर्शः स्वेदस्वेदविवर्णता ।
दाहः कण्डूस्त्वचि स्वापस्तोदः कोठोन्नतिः श्रमः ।
व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरं स्थितिः ।
रूढानामपि रूक्षत्वं निमित्तेऽल्पेऽपि कोपनम् ।
रोमहर्षोऽसृजः कार्ष्ण्यं कुष्ठलक्षणमग्रजम् ।

रक्तकृष्णारुणश्वेतैर्वर्णैः कायेषु मिश्रितैः ॥
जायंतेऽङ्गानि शीर्यंते कुष्ठानि विविधानि च ।
प्रसंगाद्गात्रसंसर्गान्निवासात्सहभोजनात् ॥
एकशय्यासनाद्वापि वस्त्रमाल्यानुलेपनात् ।
कुष्ठं ज्वरश्च शोफश्च नेत्राभिस्पंद एव च ॥
औपसर्गिकरोगाश्च संक्रमंति नरान्नरम् ।

अथ वृंदसंग्रहात्–

वातोत्तरेषु सर्पिर्वमन श्लेष्मोत्तरेषु कुष्ठेषु ।
पित्तोत्तरेषु लेपः सेको रक्तस्य मोचन श्रेष्ठम् ॥
प्रच्छन्नमल्पकुष्ठे महति च शस्तं शिराव्यधनम् ।
बहुदोषः संशोध्यः कुष्ठी बहुशस्त्ररक्षिता प्राणान् ॥
दोषे ह्यतिमात्रहृते वायुर्हन्याद्द्विबलमाशु ।
दोषोत्कृष्टे हृदये वमनं कुष्ठेषु चोर्ध्वभागेषु ॥
विरेचनं प्रयोक्तव्य निवृद्दंतीफलत्रिकैः ।
एलाकुष्ठविडंगानि शताह्वा चित्रकं बला ॥
दंतीरसांजन चेति लेप कुष्ठविनाशनः ।
दूर्वाभयासैंधवचक्रमर्दकुठेरकाकांजिकतक्रपिष्टाः ।
त्रिभि· प्रलेपैः परिबद्धमूलांदद्रूच कंडूं च विनाशयंति ।
गोमूत्रवारिसंपिष्टै शिलातालांशतुत्थकैः ।
लेपः किटिभवीसर्पकुष्ठनाशाय पूजित· ॥
आरग्वधस्य पत्राणि आरनालेन पेषयेत् ।

अष्टकोयं जयेत्कुष्ठं कंडूविस्फोटकानि च ।
विसर्पपामाकिटिभरोमांतिकमसूरिकाः ॥
इति खादिराष्टकम् ।
अर्कपत्ररसे पक्कं रजनीकल्कसंयुतम् ।
कटुतैलं हरेच्चूर्ण सक्तुत्कंडूविचर्चिकाः ।
इत्यर्कतैलम् ।
मंजिष्ठात्रिफलालाक्षानिशाशालङ्गधकैः ।
चूर्णितैस्तैलमादित्यपाकं पामाहरं परम् ॥
इत्यादित्यपाकतैलम् ।
मरिचैलाशिलाब्दार्कपयोश्वारिजटात्रिवृत् ।
शकृद्रसविशालाग्निनिशायुग्दारुचंदनैः ॥
कटुतैलं पचेत्प्रस्थं ह्यक्षैर्विषफलान्वितैः ।
सगोमूत्रैस्तदभ्यंगाद्दद्रूश्वित्रविनाशनम् ॥
सर्वेष्वपि च कुष्ठेषु तैलमेतत्प्रयोजयेत् ।
इति मरिचाद्यं तैलम् ।
धात्रीखदिरयोः क्वाथं पीत्वा वल्गुजसंयुतम् ।
शंखेन्दुधवलं श्वित्रं तूर्णं हंति न संशयः ॥
मथितेन पिबेच्चूर्णं काकोदुंबर्यवल्गुजम् ।
तैलाक्तो घर्मसेवी स्यात्तक्राशी श्वित्रमुद्धरेत् ।
कुडवो वल्गुजबीजाद्धरितालचतुर्थभागसंमिश्रः
मूत्रेण गवां पिष्टः स सवर्णकरः परं श्वित्रम् ॥
असनखदिरयूषैर्भावितां सोमराजीं

दद्रूकिटिभकुष्ठानि हंति सिध्मानमेव च ॥
स्थौणेयरुद्रनिशादूर्वासततवारप्रलेपनात् ।
धत्तूररसपिष्टास्तु कंडूरसविनाशनाः ॥
कासमर्दनमूलं तु सौवीरेण प्रपेषितम् ।
दद्रूकिटिभकुष्ठानि जयेदेवं प्रलेपनात् ॥

बीजानि वा मूलकसर्षपाणां लाक्षारजन्योप्रपुनाटबीजम्
श्रीवेष्टकाव्योपविडंगकुष्ठं पीत्वा च मूत्रेण तु लेपनंस्यात्
दद्रूणिसिध्माकिटिभानिपामांकपालकुष्ठविषमंचहन्यात् ।

गंधपाषाणमिश्रेण यवक्षारेण लेपनम् ।
सिध्मानि नाशयत्याशु कटुतैलेन योजयेत् ॥
काशमर्दकबीजानि मूलकानां तथैव च ।
गंधपाषाणमिश्राणि सिध्मानां परमौषधम् ॥

धात्रीरसः सर्जरसः सुपाक्यः सौवीरपिष्टश्च तथाऽमृतश्च ।
भवंति सिध्मानि यथा न भूयस्तथेदमुद्वर्त्तनकं करोति ॥
एडगजातिलसर्षपकुष्ठं मागधिकारजनीद्वयतक्रम् ।
हंति विचर्चिकपामादद्रूर्वर्षशतादपि नश्यति कंडूः ॥

सिंदूरगुग्गुलुरसांजनासिक्थतुत्थै-
स्तुल्यांशकैः कटुकतैलमिदं विपक्वम् ।
कंडूः स्रवत्पिटकिनीमथवापि शुष्का-
मभ्यंजनेन सकृदुद्धरति प्रसह्य ॥
खादिरत्रिफलानिंबपटोलामृतवासकैः ।

अष्टकोयं जयेत्कुष्ठं कंडूविस्फोटकानि च ।
विसर्पपामाकिटिभरोमांतिकमसूरिकाः ॥

इति खादिराष्टकम् ।

अर्कपत्ररसे पक्वं रजनीकल्कसंयुतम् ।
कटुतैलं हरेच्चूर्णं सक्रुत्कंडूविचर्चिकाः ।

इत्यर्कतैलम् ।

मंजिष्ठात्रिफलालाक्षानिशाशालगंधकैः ।
चूर्णितैस्तैलमादित्यपाकं पामाहरं परम् ॥

इत्यादित्यपाकतैलम् ।

मरिचैलाशिलाब्दार्कपयोश्वारिजटात्रिवृत् ।
शकृद्रसविशालाग्निनिशायुग्दारुचंदनैः ॥
कटुतैलं पचेत्प्रस्थं ह्यक्षैर्विषफलान्वितैः ।
सगोमूत्रैस्तदभ्यंगाद्दद्रूश्वित्रविनाशनम् ॥
सर्वेष्वपि च कुष्ठेषु तैलमेतत्प्रयोजयेत् ।

इति मरिचाद्यं तैलम् ।

धात्रीखदिरयोः क्वाथं पीत्वा वल्गुजसंयुतम् ।
शंखेन्दुधवलं श्वित्रं तूर्णं हंति न संशयः ॥
मथितेन पिबेच्चूर्णं काकोदुंबर्यवल्गुजम् ।
तैलाक्तो घर्मसेवी स्यात्तक्राशी श्वित्रमुद्धरेत् ।
कुडवो वल्गुजबीजाद्धरितालचतुर्थभागसामिश्रः
मूत्रेण गवां पिष्टः स सवर्णकरः परं श्वित्रम् ॥
असनखदिरयूपैर्भाविता सोमराजी

मधुघृतशिशिपर्कैर्लोहचूर्णैरुपेताम् ।
शरदमवलिह्यानः पारिणामान्विकारान्
त्यजति हितमिताशी तद्वदाहारजातान् ॥
एरंडबीजं प्रपुनाटबीजं भल्लातकास्थित्रिफला च तुल्याः।
निरुद्धधूम च पचेत्कटाहे कृष्णायसे तत्तिलतैलमिश्रम् ॥
कृष्णो व्रणोऽनेन हि पांडुरः स्या-
द्रूक्षो निवर्णो मलिनश्च यः स्यात् ।
श्वित्रव्रणश्चैव विदह्यमान-
क्रमेण कृष्णत्वमुपैति जंतोः ॥
काले त्वग्दलसारबीजकुसुमैर्निंबस्य तुल्यांशकैः
कृत्वाचूर्णमयःकटुत्रिकानिशाधान्यक्षपथ्यायुतम्।
पंचारिष्टमिद पयोमधुघृतैरुष्णांबुना यः पुमा-
नश्नन्कासगरप्रमेहपिटिकाकुष्ठादिभिर्मुच्यते ॥
इति लघुनिम्बपंचकं चूर्णं भूनिंबांबुदेति वातरक्तोक्त महातिक्तक घृतं च ॥

इति श्रीतोमरव० वीरसिंहावलोके कुष्ठाधिकारः ।

---

अथ ज्योतिश्शास्त्राभिप्रायेण शीतपित्तोदर्दकोष्ठानां हेतुमाह तत्प्रतीकारं च त्रिग्रहयोगे ॥
आदित्यशनिदैत्येज्याः सहैकस्थानमागताः ।
जन्मकाले यदा यस्य जायते शीतपित्तवान् ॥
अथैकस्थानस्थभानुशनिशुक्रजनितशीतपित्तादिप्रतीकाराय ग्रहत्रयप्रीतये पूर्ववज्जपहोमदानानि कुर्यात् ।

अथ शीतपित्तयोः कर्मविपाके हेतावनुक्तेऽपि स्वल्पपापत्वात्कृच्छ्रमेकं तत्प्रत्याम्नायं वा कुर्याद्धिरण्यदानं च कुर्यात्। ब्राह्मणभोजनं च कारयेत् तेनोपशांतिर्भवति॥

अथ क्रमप्राप्तानां शीतपित्तोदर्दकोठानां सनिदानं चिकित्सितमाह रुग्विनिश्चयात्।

शीतमारुतसंस्पर्शात्प्रदुष्टौ कफमारुतौ॥
पित्तेन सह संभूय बहिरंतश्च सर्पतः।
पिपासारुचिहृल्लासौ देहसादांगगौरवम्॥
रक्तलोचनता तेषां पूर्वरूपस्य लक्षणम्।
वरटीदंशसंस्थानः शोफः संजायते बहिः॥
सकंडूतोदबहुलश्छर्दिज्वरविदाहवान्।
उदर्दमिति तं विद्याच्छीतपित्तमथापरे।
अभ्यज्य कटुतैलेन सेकश्चोष्णैर्जलैस्ततः।
तत्राशु वमनं कार्यं पटोलारिष्टवारिणा॥
सगुडां पिप्पलीं यस्तु खादेत्पथ्यान्नभुङ्नरः।
तस्य नश्यति सप्ताहादुदर्दाः सर्वदेहजाः॥
सिद्धार्थरजनीकल्कैः प्रपुन्नाटतिलैः सह।
कटुतैलेन संमिश्रमेतदुद्वर्त्तनं हितम्॥
दूर्वानिशायुतो लेपः कंडूपामाविनाशनः।
कृमिदद्रूहरश्चैव शीतपित्तापहः स्मृतः॥
निंबस्य पत्राणि सदा घृतेन
धात्रीविमिश्राण्यथ चोपयुंज्यात्।

विसर्पकोष्ठक्षतशीतपित्तं
कंडूस्त्रापित्तं रसकाश्च हन्यात् ॥
क्षारसिंधूत्थतैलेन गात्राभ्यंगं प्रयोजयेत् ॥
तैलोद्वर्त्तनयोगेन योज्य एलादिको गणः ।
शुष्कमूलकयूषेण कौलुत्थेन रसेन वा ॥
भोजनं सर्वदा कार्यं लावतित्तिरजेन वा ।
शीतलान्यन्नपानानि मत्वा दोषगतिं भिषक् ॥
उत्सादनानि दोषेषु शीतपित्ते प्रयोजयेत् ।
इति श्रीवी०सिं० शीतपित्तोदर्दकोष्ठचिकित्सा ॥

अथ क्रमप्राप्तस्याम्लपित्तस्य सनिदानं चिकित्सितमाह रुग्विनिश्चये ।

विरुद्धदुष्टाम्लविदाहिपित्तप्रकोपिपानान्नभुजोविदग्धम् ।
पित्तं स्वदेहोपचितं पुरा यत्तदम्लपित्तं प्रवदन्ति सतः ॥
अविपाकक्लमोत्क्लेशतिक्ताम्लोद्गारगौरवैः ।
हृत्कंठदाहारुचिभिश्चाम्लपित्तं वदेद्भिषक् ॥
सानिलं सानिलकफं सकफं तच्च लक्षयेत् ।
दोषलिंगेन मतिमान्भिषङ्मोहकरं हि तत् ॥
रोगोऽयमम्लपित्ताख्यो यत्नात्ससाध्यते न वा ।
चिरोत्थितो भवेद्याप्य कृच्छ्रसाध्यःस कस्यचित् ॥

वृंदसंग्रहात्-

वमनानंतरं तत्र विरेकं मृदु कारयेत् ॥
सम्यग्वातिविरिक्तस्य सुस्निग्धस्यानुवासनम् ।

आस्थापनं चिरोद्भूते देयं दोषाद्यपेक्षया ॥

दोषसंसर्गजा कार्या भेषजाहारकल्पना ।
ऊर्ध्वगं वमनैर्धीमानधोगं रेचनैर्हरेत् ॥
तिक्तभूयिष्ठमाहार पाचनं वापि कल्पयेत् ।
यवगोधूमविकृतीरतीक्ष्णसंस्कारवर्जिताः ॥
यथास्व लाजसक्त्वा सिता मधुयुतां पिबेत् ।
निस्तुषयवनवधात्रीक्वाथः त्रिसुगंधमधुयुतः पीतः ।
अपनयति चाम्लपित्त यदि भुंक्ते मुद्गयूषेण ।
सद्राक्षामभयां खादेत्सक्षौद्रां सगुडां च ना ॥
कटुकां सितया लिह्यात्पटोल क्षौद्रसंयुतम् ॥
रक्तयुक्तौ भिषग्युक्त्या खडकूष्माटयाजनम् ॥
पटोलत्रिफलारिष्टाशृत मधुयुतं पिबेत् ।
पित्तश्लेष्मज्वरच्छर्दिदाहशूलोपशांतये ॥
सिंहास्यामृतभंटाकीक्वाथं पीत्वा समाक्षिकम् ॥
अम्लपित्तं जयेज्जंतुः कास श्वास ज्वरं वमिम् ॥
शतावरीमूलकल्कं घृतप्रस्थ पयस्समम् ।
पचेन्मृद्वग्निना सम्यक् क्षीर दत्वा चतुर्गुणम् ॥
नाशयेदम्लपित्तं च वातपित्तोद्भवान्गदान् ।
रक्तपित्तं तृषां मूर्च्छां श्वासं संतापमेव च ॥
अम्लपित्ते प्रयोक्तव्यः कफपित्तहरो विधिः ।
गुडकूष्मांडकौ चैव तथा खडामलक्यपि ॥
गुडक्षीरकणासिद्धं सर्पिरत्रोपयोजयेत् ।

ज्वरार्त्तमिव चात्मान मन्यते योऽम्लपित्तवान् ।
तस्य संशोधनं पथ्य न शांतिः शोधनं विना ।
अचिरोत्थे चाम्लपित्ते वमनं तत्र कारयेत् ॥

इति श्रीतोमं० वीरसिंहावलोके अम्लपित्ताधिकारः ॥

अथ विसर्पविस्फोटकरोमांतिकमसूरिकादीनां जातकाभिप्रायेण हेतुमाह तत्प्रतीकारं च ।

निधनस्थे दिवानाथे भूसुतेन विलोकिते ।
विसर्पस्फोटका रोगा जायन्ते तस्य जन्मिनः ॥

अष्टमस्थानस्थितभौमावलोकितभानुजनितविसर्पादिदोषोपशांतये भानुप्रीतये यथोक्तमेव जपहोमस्नानदानादिकं कुर्यात् ॥

अथ विसर्पादिरोगाणां कर्मविपाके हेतुमाह तत्प्रतीकारं च । अमेध्यदाताविसर्पवाञ्जायते स मासं पयोव्रतमाचरेत् । बोधायनः—

सर्पस्तु यः खादयति स विसर्पी भवेन्नरः ।
दानेनोपशमः कार्यो होमेन च विशेषतः ॥
पलेन वा तदर्धेन तदर्धार्धेन वा पुनः ।
कुर्यान्नाग सुवर्णेन फणापंचकसयुतम् ॥
माणिक्यानि च देयानि प्रत्येक फणपंचके ।
रत्नं पुच्छे तथा देयं वज्रं लोचनयोस्तथा ॥
एवं नागं शुभ कृत्वा कुंकुमेनानुलेपयेत् ।
रक्तवस्त्रेण संवेष्ट्य ताम्रपात्रोपरि न्यसेत् ॥
पात्रस्य च परीमाणं पलानामष्टकं विदुः ।

उपचारैः षोडशभिरर्चयेन्नागमुत्तमम् ॥
आचार्यः सर्वशास्त्रज्ञो धर्मशास्त्रपरायणः ।
होमं चापि प्रकुर्वीत समिदाज्यतिलैः शुभैः ॥
नमोऽस्तु सर्पेभ्य इति त्रिभिर्मंत्रैर्यथाक्रमम् ।
अष्टोत्तरसहस्रं वाप्यष्टोत्तरशतं तु वा ॥
अष्टाविंशतिकं वापि परीमाण पृथक्पृथक् ।
हुत्वा चाहुतिसंपातैः पात्रे चैकीकृतं स्वयम् ॥
आचार्योऽङ्गानि चाभ्यज्य रोगिणां तु विसर्पिणाम् ।
ऋग्भिस्तुसर्पराज्ञीभिर्ऋग्भिर्भूम्यादिभिः क्रमात् ॥
स्वस्थोऽसौ यथा भवति गात्राणि चापरोगतो यथा मुक्तानि भवंति ।

गुग्गुलुं च सुगंधं च पुष्पदारु च निक्षिपेत् ।
प्रकल्प्य कलशे कुर्यादभिषेकं जलैः शुभैः ॥
नमोऽस्तु सर्पेभ्य इति सार्पैस्तल्लिंगकैरपि ।
हिरण्यवर्णाः शुचयः पवमानानुवाकतः ॥
आपोहिष्ठामय इति शन्नो वातमुदीरयेत् ।
उत्सादितागं रुचिर लिंपेदगरुचंदनैः ॥
ततः समर्चयेद्यत्नान्नागं पुष्पाक्षतादिभिः ।
सर्पदैवतमंत्रेण चाचार्योऽपि समर्चयेत् ॥
अनंत सर्पराजं तमाचार्याय निवेदयेत् ।
यो धत्ते पृथिवीं कृत्स्नां सशैलवनकाननाम् ॥
क्षीराब्धौ यस्य शय्या च वासुदेवस्य शार्ङ्गिणः ।
स्वयिदानेन नागोऽसौ सर्वव्याधि व्यपोहतु ॥

वैसर्पकविकारं च त्वग्दोषजनितं तथा ।
रक्तदोषोद्भवं वापि मातृतः पितृतोपि वा ॥
अंगप्रत्यंगसंभूतं विकारं मे व्यपोहतु ॥

इति दानमंत्रः ।

एवं दत्वा तु तं नागमाचार्याय सदक्षिणम् ।
भूमौ प्रणम्य शिरसा शनैः शतपदं व्रजेत् ॥
आचार्येणाप्यनुज्ञातः स्वगृहं प्रविशेत्ततः ।
ब्राह्मणान्भोजयित्वा तु स्वय भुंजीत बंधुभिः ॥

इति विसर्पपिटिकस्फोटादिहरनागदानविधिः ॥

अथ गुरुतल्पगो वावकीर्णो दुश्चर्मा भवति । असौ व्याधितारतम्येन गुरुतल्पाद्युदेशेन प्रायश्चित्त कुर्यात् । अथ नानास्थानविस्फोटरोगेषु हेतुमाह तत्प्रतीकारं च । अनिर्दशायाः गो' पयः पीत्वा स्फोटवान् भवति स कृच्छ्र-सांतपनं कुर्यात् हिरण्यं वासांसि गाश्च दद्यात् इति हस्तपादतलस्फोटेषु । काकखरादिमांसभक्षक' पार्श्वयोः स्फोटवान् भवति । तदा कृच्छ्रातिकृच्छ्रचांद्रायणानि कुर्यात् । तानि समस्तानि व्यस्तानि व्याधिलघुगुरुभावात्कर्तव्यानि शिवसंकल्पसूक्तमष्टोत्तरायुतं जपेत् ।

अथ क्रमप्राप्तस्य विसर्परोगस्य सनिदान चिकित्सितमाह रुग्विनिश्चयात् ॥

लवणादिकटूष्णादिसेवनाद्दोषकोपनात् ।
विसर्प सप्तधा ज्ञेयः सर्वत परिसर्पणात् ॥

पृथक्त्रयस्त्रिभिश्चैको विसर्पो द्वंद्वजास्त्रयः ।
वातिकः पैत्तिकश्चैव कफजः सांनिपातिकः ॥
चत्वार एव वीसर्पा वक्ष्यंते द्वंद्वजास्त्रयः ।
आग्नेयो वातपित्ताभ्यां ग्रंथ्याख्यः कफपित्तजः ॥
यस्तु कर्दमको घोरः स पित्तकफसंभवः ।
रक्तं लसीका त्वङ्मांसरक्तदोषास्त्रयो मताः ॥
विसर्पाणां समुत्पत्तौ विज्ञेयाः सप्त धातवः ।
सिध्यंति वातकफपित्तकृता विसर्पाः
सर्वात्मकः क्षतकृतश्च न सिद्धिमेति ।
पित्तात्मकोऽञ्जनवपुश्च भवेदसाध्यः
कृच्छ्राश्च मर्मसु भवति हि सर्व एव ॥
विरेकवमनालेपाः सेचनासृग्विमोक्षणम् ।
उपाचरेद्यथादोष विसर्पनविदाहिभिः ॥
कुष्ठं शताह्वा सुरदारु मुस्ता
वाराहिकुस्तुंबरुकृष्णगधा ।
वातेऽर्कवंशार्त्तगलाश्च योज्याः
सेकेषु लेपेषु तथा घृतेषु ॥
प्रसेकाः परिषेकाश्च शस्यंते पंचवल्कलैः ।
पद्मकोशीरमधुकैश्चंदनैर्वा प्रशस्यते ॥
पित्तजे पद्मिनीपंकपिच्छं वा शंखशैवलम् ।
मुद्रामूले तु शुक्तिर्वा गैरिकं वा घृतान्वितम् ॥

न्यग्रोधपादा गुंद्रा च कदलीगर्भ एव च ।
विषग्रंथिश्च लेपः स्याच्छतधौतघृतप्लुतः ॥
शिरीषयष्टीनतचंदनैलामांसीहरिद्राद्वयकुष्ठवालैः । लेपो दशांगः सघृतः प्रयोज्यो विसर्पदुष्टव्रणशोफहारी ॥
इति दशांगो लेपः ॥
शिरीषोदुंबरौ जंबूः सेकालेपनयोर्हिताः ॥
श्लेष्मातकत्वचो वापि प्रलेपाश्च्योतने हिताः ॥
वृषखदिरपटोलपत्रनिंबत्वगमृतकामलकाकषायकल्कैः । घृतमभिनवमेतदाशु पक्कं जयति विसर्पगदान्सकुष्ठगुल्मान् ॥
पटोलसप्तच्छदनिंबवासाफलत्रिकाच्छिन्नरुहाविपक्कम् ।
तप्तं च तिक्तं घृतमाशु हंति त्रिदोषविस्फोटविसर्पकंडूः॥
इति वीरसिंहावलोके विसर्पचिकित्सा ।

कट्वम्लतीक्ष्णोष्णविदाहिरूक्षक्षारैरजीर्णाध्यशनातपैश्च ।
तथा त्रिदोषस्य विपर्ययेण कुप्यंति दुष्टाः पवनादयस्तु॥
त्वचमाश्रित्य ते रक्तं मांसास्थीनि प्रदूष्य च ॥
घोरान्कुर्वन्ति विस्फोटान्सर्वाञ्ज्वरपुरःसरान् ।
अग्निदग्धनिभाः स्फोटाः सज्वरा रक्तपित्ततः ॥
क्वचित्सर्वत्र वा देहे विस्फोटा इति ते स्मृताः ।
किराततिक्तकारिष्टयष्ट्याह्वांबुदवासकैः ॥
पटोलपर्पटोशीरत्रिफलाकौटजान्वितैः ।
द्वादशांग तथैवैतत्सर्वविस्फोटनाशनम् ॥

खदिराह्वयुतैः क्वाथो विस्फोटज्वरशांतये ॥
शिरीषोशीरनागाह्वहिंस्राभिर्लेपनाद्रुतम् ।
विसर्पविषविस्फोटाः प्रशाम्यंति न संशयः ।
चंदनं नागपुष्पं च सारिवा तडुलीयकम् ।
शिरीषवल्कलं जातीलेपस्स्याद्दाहनाशनः ॥

इति वीरसिंहावलोके विस्फोटचिकित्सा ।

---

शाखासु कुपिता दोषाः शोफं कृत्वा विसर्पवत् ।
भित्त्वा संतोद्य तत्रैवं श्लेष्म मांसं विशोष्य च ॥
कुर्यात्तंतुनिभं सूत्रं श्वयथुं जनयत्यपि ।
व्रणद्वारे विमथ्यैतत्स्नायुरूपांकुराकृति ॥
शनैश्शनैः क्षताद्याति तच्छेदाच्छोफमावहेत् ।
तत्पाकाच्छोफशांतिःस्यात्पुनःस्थानांतरे भवेत् ।
स स्नायुक इति ख्यात क्रियोक्तात्र विसर्पवत् ॥
कुष्ठरामठशुंठीभिः कल्कं शिग्रुसमन्वितम् ।
पानालेपनयोगेन तत्तु पीडाविनाशनम् ॥
गव्यं सर्पिस्त्र्यहं पीत्वा निर्गुंडीस्वरसं त्र्यहम् ।
पिबन्स्नायुकमत्युग्रं निहंत्येव न संशयः ॥
शिग्रुमूलदलैः पिष्टैः कांजिकेन ससैंधवैः ।
लेपः स्नायुकरोगाणां शमनं परमुच्यते ॥

इति स्नायुकचिकित्सा ।

मसूराकृतिसंस्थानाः पिटकाः स्युर्मसूरिकाः ॥

आसां पूर्वं ज्वरः कंडूर्गात्रभंगोऽतिविभ्रमः ।
सर्वासां वमनं पूर्वं पटोलारिष्टवासकैः ॥
कषायैश्च वचावत्सयष्ट्याह्वफलकल्कितैः ।
सुपर्वीपत्रनिर्यासं हरिद्राचूर्णसंयुतम् ॥
रोमांतिज्वरविस्फोटमसूरीशांतये पिबेत् ।
पटोलीकुंडलीमुस्तावृषधान्ययवासकैः ॥
भूनिंबनिंबकटुकापर्पटैश्च जलं शृतम् ।
मसूरीः शमयेदामाः पक्वाश्चैव विशोधयेत् ॥
नातः परतरं किंचिद्विस्फोटज्वरशांतये ।
इति पटोलादिकल्कम् ॥
निंब पर्पटकं पाठा पटोलं कटुरोहिणी ।
वासा दुरालभा धात्री ह्युशीरं चंदनद्वयम् ॥
एष निंबादिकः क्वाथः पीतः शर्करयान्वितः ।
मसूरीं त्रिदोषजां हंति ज्वरवीसर्पसंभवाम् ॥
उत्थाय प्रविशेद्या तु पुनस्तां बाह्यतो नयेत् ।
इति निंबादिक्काथः ॥
खदिरत्रिफलारिष्टपटोलामृतवत्सकैः ।
क्वाथोऽष्टभागो जयति रोमांतिकमसूरिकाम् ॥
इति खदिराष्टकः ।
सौवीरेण तु सपिष्टं मातुलिंगस्य केसरम् ॥
प्रलेपात्पाचयेदाशु दाहं चापि नियच्छति ।
पाददाहं प्रकुरुते पिटका दाहसंभवाः ॥

तत्र सेकं प्रशंसंति बहुशस्तंडुलाम्बुना ।
लिह्याद्वादशचूर्णं वा पाचनार्थं गुडेन तु ॥
तेन चाशु विपच्यंते वातपित्तकफात्मिकाः ।
पञ्चवल्कलचूर्णेन क्लेदिनीमवचूर्णयेत् ॥
भस्मना केचिदिच्छंति केचिद्गोमयरेणुना ।
कृमिपातभयाच्चापि धूपयेत्सरलादिभिः ॥
शौचे वारि प्रयुंजंति गायत्रीसारसंभवम् ।
चैत्रासितभूतादिने रक्तपताकान्वितस्नुहीभवने ॥
धवलितकलशं न्यस्तं पादरुज दूरतो हंति ।
शिरीषोदुंबराश्वत्थशैलुन्यग्रोधवल्कलैः ॥
प्रलेपः सघृतः शीघ्रं ज्वरवीसर्पदाहजित् ।
मसूरीषु प्रयुंजंति गोराज्यं पद्मकं तथा ॥
नैम्बं शैरीषकं वापि भिषक् सर्वेषु कर्मसु ।

इतिश्रीतोमरवंशा० वीरसिंहावलोके मसूरिकाधिकारः ॥

अथ ज्योतिश्शास्त्राभिप्रायेण वल्मीकपादज्वालागर्दभपाषाणचर्मकीलगुदविकारादीनां क्षुद्ररोगाणां हेतुमाह तत्प्रतीकारं च ।

व्याधिभिररिभिर्ग्रस्तः परकलहाद्विकर्तितशरीरः ।
मंदग्रहे तिमिरारिपौ भौमेन निरीक्षिते विकलः ॥
शत्रुगृहेर्कदशायां नयनविनाशो भवेच्च कुब्जत्वम् ।
ज्वालागर्दभरोगा भवंति कृमयः पराभूतिः ॥

अथ मकरकुंभांशस्थितमंगलावलोकितभानुजनितवल्मीकपादादिक्षुद्ररोगोपशांतये रविप्रीतये पूर्ववज्जपहोमादिकं कुर्यात् । रिपुग्रहवर्तमानसूर्यदशाजनितज्वालागर्दभादिरोगाणां शांतये सूर्यप्रीतये विधिवद्विधानं पूर्वोक्तमेव कुर्यात् ॥

अथ वल्मीकपादरोगस्य कर्मविपाके हेतुमाह तत्प्रतीकारं च । देवाय दत्तवस्त्राणां मूल्यानि स्वयमुपभोक्तुं य इच्छेत्तं हस्तिपादग्रहो गृह्णाति । तेन गृहीतमात्रेण बृहद्वल्मीकपादो भवति । तिमिरचक्षुषा सर्वांगशुष्को जायते एतत्कात्यायनेनाभिहितम् । अस्य प्रायश्चित्तं निराहारी त्रिरात्रमुपवासी होमं व्याहृतिभिः । पापनाशार्थं पवमानसूक्तं जपेत् । ऋग्विधानेऽभिहितं हिरण्यदानं च कुर्यात् ( ब्रह्मांडपुराणे ) । अस्य बलिः । रत्नदधिक्षीरमूलकतिलपिष्टलाजगंधपुष्पधूपदीपवस्त्रैःसार्धं गृहीत्वा चतुष्पथे बलिं क्षिपेत् । अनेन मंत्रेण ।

प्रगृह्णीष्व बलिं चेमं हस्तिपाद महाग्रह ।
आतुरस्य सुखं सिद्धिं प्रयच्छ त्वं महाबल ॥

इति वल्मीकपादहरणविधिः ।

अथ ज्वालागर्दभादिरोगप्रतीकाराय गायत्र्ययुतं जपेत् । तिलाज्येन च जुहुयात् । गां सुवर्णं च दद्यात् । ब्राह्मणभोजनं च कारयेत् ।

इति ज्वालागर्दभपाषाणगर्दभप्रतीकारविधिः ।

अथ कीलकव्रणे हे० तत्प्र० । परव्रतभदी कालकव्रणी भवति । अस्य प्रायश्चित्त कृच्छ्र कृत्वाऽऽयस दद्यात् ।

अथ वैकृत्यरोगे हे० तत्प्र० । मूत्रपुरीषं कृत्वा शौच-मकृत्वैव यो भुंक्ते स स्रवद्बुदो भवति । तत्र दारुणापि पीडा भवति । कृच्छ्रातिकृच्छ्रचांद्रायणानि कुर्यात् । अक्षीभ्यामित्यष्टोत्तरशतसहस्रं क्षीरसर्पिर्भ्यां जुहुयात् । उद्वयमित्येति जपेत् । तथा विशेषतश्च ब्रह्मपुराणे-

पानीयं पायसं मुद्गाः शर्करा घृतसंयुता ।
इदमावश्यकं देयं सर्वरोगोपशांतये ॥

इति सर्वांगतोददाहरोगे पानीयादिदानविधिः ।

---

अथाविज्ञातरागे हेतुं तत्प्रतीकारं चाह । विषो-द्बंधनशस्त्राद्यैरात्मानं यः प्रमापयेत् जन्मजन्मांतरेऽवि-ज्ञातरागवान्भवति । वैद्यो रोगमज्ञां कर्तुमपि न शक्नोति । स तु जपहोमादि सेतुबंधरामेश्वरदर्शनं च कुर्यात् । तथा चोक्तं विष्णुना ।

जपेत्स्तोत्रादिमत्रांश्च सेतुरामेश्वरेक्षण.त् ।
श्रीपर्वतेक्षणाद्वापि गौतमास्नानतोपि वा ॥
मुक्तो भवति पंचाशद्ब्राह्मणानां च भोजनात् ।

इति वैद्याविज्ञातक्षुद्ररोगशांतिः ।

---

अथ क्रमप्राप्तानां क्षुद्ररोगाणां सनिदानं चिकित्सि-तमाह रुग्विनिश्चयात्-

क्षुद्ररोगाः समासेन चतुस्त्रिंशत्प्रकीर्तिताः ।
अथ भूयस्त्वभीत्यात्र वक्ष्याम' कियतोत्र तान् ॥
स्निग्धाः सवर्णा ग्रथिताः निरुजो मुद्गसंनिभाः ।
कफवातोत्थिता ज्ञेया बालानामजगल्लिकाः ।
अंधालजीकच्छपिकास्तटंकस्थाः स्वरूपतः ॥

ग्रीवांसकक्षाकरपाददेशे संधौ गले वा त्रिभिरेव दोषैः ।
ग्रंथिः सवल्मीकवदक्रमेण जातः क्रमेणैव गतः स वृद्धिम् ॥
मुखैरनेकैः स्रुतितोयवाद्भिर्विसर्पवत्सर्पति चोन्नताग्रैः ।
वल्मीकमाहुर्भिषजो विकारं निष्प्रत्यनीकं चिरज विशेषात् ॥

वातश्लेष्मसमुद्भूतः श्वयथुर्हनुसंधिज· ।
स्थिरो मंदरुजां स्निग्धो ज्ञेयः पाषाणगर्दभः ॥
कर्णस्थानांतरे जातां पिटिकामुग्रवेदनाम् ।
स्थितां पनसिकां तां तु विद्याद्वातकफोत्थिताम् ॥
विसर्पवत्सर्पति य· शोफस्तनुरपाकवान् ।
दाहज्वरकरः पित्तात्स ज्ञेयो ज्वालगर्दभः ॥

वृंदसग्रहात् ।

तत्राजगल्लिकामामं जलौकाभिरुपाचरेत् ॥
शुक्तिसौराष्ट्रिकाक्षारकल्कैश्चालेपयेन्मुहुः ।
श्लेष्मविद्रधिकल्केन जयेच्चातुशर्यां भिषक् ॥
विवृतामिंद्रलुप्तां च गर्दभीं ज्वालगर्दभम् ।
पैत्तिकस्य विसर्पस्य क्रियया साधयेद्भिषक् ॥

मधुरौषधसिद्धेन सर्पिषा पूरयेद्व्रणम् ।
रक्तावसेकैर्बहुभिः स्वेदनैरपतर्पणैः ॥
जयेद्विदारिकां लेपैः शिग्रुदेवद्रुमोद्भवैः ।
पनसिकां कच्छपिकामनेन विधिना जयेत् ॥
साधयेत्कठिनानन्याञ्छोफान्दोषसमुद्भवान् ॥
अंधालजीं कच्छपिकां तथा पाषाणगर्दभाम् ।
सुरदारुसुराकुष्ठैः स्वेदयित्वा प्रलेपयेत् ॥
कफमारुतशोफाग्नौ लेपः पाषाणगर्दभे ।
शस्त्रेणोत्कृत्य वल्मीकं क्षाराग्निभ्यां प्रसाधयेत् ॥
मनःशिलैलाभल्लातसूक्ष्मैलागुरुचंदनैः ।
जातीपल्लवपत्रैश्च निंबतैलं विपाचयेत् ॥
वल्मीकं नाशयेत्तद्धि बहुच्छिद्रं बहुद्रवम् ।
शिरां च पाददारिषु वेधयेत्तलशोधनीम् ॥
स्नेहस्वेदोपपन्नौ तु पादावालेपयेन्मुहुः ।
मधूच्छिष्टवसामज्जाघृतक्षीरविमिश्रितैः ।
सर्ज्जाह्वसिंधूद्भवयोश्चूर्णं मधुघृतप्लुतम् ॥
निर्मथ्य कटुतैलं हि हितं पादप्रमार्जनम् ।
करंजबीज रजनीं कासीसं मधुकं मधु ॥
रोचना हरितालं च लेपोऽयमलसे हितः ।
दहेत्कदरमुद्धृत्य तैलेन दहनेन वा ॥
चिप्यमुष्णाम्बुना स्विन्नमुत्कृत्याभ्यज्य त व्रणम् ।
दत्वा सर्जरस चूर्णं बुधो व्रणवदाचरेत् ॥

स्वरसेन हरिद्रायाः पात्रे कृष्णायसेऽभयाम् ।
घृष्ट्वा तज्जेन कल्केन लिंपेच्चिप्यं पुनःपुनः ॥
निम्बोदकेन वमनं पद्मिनीकंटके हितम् ।
निंबोदककृतं सर्पिः क्षौद्रं पाचनमिष्यते ॥
अहिपूतनके धात्र्याः पूर्वं स्तन्यं विशोधयेत् ॥
त्रिफलाखदिरक्वाथो व्रणानां पाचनं सदा ।
रसांजन विशेषेण पानलेपनयोर्हितम् ।
गुदभ्रंशे गुदं स्नेहैरभ्यज्याशु प्रवेशयेत् ॥
प्रविष्टे स्वेदयेच्चापि बद्ध गोफणया भृशम् ।
कोमलं पद्मिनीपत्रं यः खादेच्छर्करान्वितम् ॥
एवं निश्चित्य निर्दिष्टं न तस्य गुदनिर्गमः ।
मूषकाणां वसाभिर्वा गुदभ्रंशे विलेपयेत् ।
स्विन्नमूषकमांसेन मुहुर्वा स्वेदयेद्गुदम् ।
चर्मकीलं जतुमणि माषकांस्तिलकालकान् ॥
उत्कृत्य शस्त्रेण दहेत्क्षाराग्निभ्यामशेषतः ।
यौवने पिटकान्यच्छनीलिकाव्यंगशर्कराः ॥
शिरावेध. प्रलेपैश्च जयेदभ्यंजनैस्तथा ।
रोध्रधान्यवचालेपस्तारुण्यपिटिकापहः ॥
व्यंगेषु चार्जुनत्वग्वा मंजिष्ठा वा समाक्षिका ।
लेपः सनवनीतो वा श्वेताश्वखुरजा मषी ॥
रक्तचंदनमंजिष्ठाकुष्ठरोध्रप्रियंगवः ।
वटांकुरा मसूराश्च व्यंगघ्ना बहुकांतिदाः ॥

केवलान्सर्पिषा पिष्ट्वा तीक्ष्णान् शाल्मलिकंटकान् ।
आलिप्तं त्र्यहमेतेन भवेत्पद्मोपम मुखम् ॥
मातुलिंगजटा सर्पिः शिला गोशकृतो रसः ।
मुखकांतिकरो लेपः पिटकातिलकालजित् ॥
अरूंपिकायां तु विरेचसिद्धैःशिराव्यधेनाथजलौकसांवा ।
निंबांबुसिक्तैः शिरसः प्रलेपोदेयःसुवर्णोरससैन्धवाभ्याम् ॥
पुराणमथ पिण्याकं पुरीषं कुक्कुटस्य च ॥
मूत्रपिष्टप्रलेपोऽयं शीघ्रं हन्यादरूंपिकाम् ।
हरिद्राद्वयमंजिष्ठात्रिफलारिष्टचंदनैः ॥
एतत्तैलमरूंपीणां सिद्धमभ्यंजने हितम् ।
इति हरिद्राद्यं तैलम् ॥
गुंजाफलैः शृतं तैलं भृंगराजरसेन वा ।
कंडूदारुणहृत्कुष्ठकपालव्याधिनाशनम् ॥
उत्पलभृंगफलत्रयसारिलोहपुरीषसमन्वियकारि ।
तैलमिदं कठिनानिलहारि कुंचितकेशघनास्थिरकारि
इति भृंगराजतैलम् ।
इंद्रलुप्ते शिरां विध्वा शिलाकासीसतुत्थकैः ।
लेपयेत्परितः कल्कैस्तैलमभ्यंजने हितम् ॥
कुटंनटाशिखीजातीकरंजकरवीरकैः ।
अवगाढपदं वापि प्रयच्छांति पुनःपुनः ॥
गुंजाफलैश्चिरं लिंपेत्केशभूमि समंततः ।
इंद्रलुप्तापहो लेपो मधुना बृहतीरसः ॥

हस्तिदन्तमषीं कृत्वा मुख्यं चैव रसांजनम् ।
रोमाण्यनेन जायते लेपात्पाणितलेऽपि ॥
[?]णफलानीलिनीपत्रं लोहभृंगरसैः समम् ।
आविमूत्रेण संयुक्तं कृष्णीकरणमुत्तमम् ।
लोहमलामलककल्कैः सजपाकुसुमैर्नरः सदा स्नायी ।
पलितानिह न पश्यति गंगास्नायीव नरकाणि ॥
कासीसरोचनातुत्थहरीतालरसांजनैः ।
अम्लपिष्टैः प्रलेपोऽयं वृषकच्छूहिपूतयोः ॥
मधुकस्य कषायेण तैलस्य कुडवं तथा ।
कल्कैः प्रियंगुमंजिष्टाचंदनोत्पलकेसरैः ॥
कनकं नाम तत्तैलं मुखकांतिकरं परम् ।
अभ्यंगान्नीलिकाव्यंगशोधनं परमार्चितम् ॥

इति कनकतैलम् ।

मंजिष्टामधुकं लाक्षा मातुलुंगं सयष्टिकम् ।
कर्षप्रमाणैरेतैस्तु तैलस्य कुडवं तथा ॥
आजं पयस्तु द्विगुणं शनैर्मृद्वग्निना पचेत् ।
नीलिकापिटिकाव्यंगानभ्यंगादेव नश्यति ॥
मुखं प्रसन्नोपचितं नीलकव्यंगवर्जितम् ।
सप्तरात्रप्रयोगेण भवेत्कनकसन्निभम् ॥

इति श्रीतोमर० वीरसिंहावलोके क्षुद्ररोगाधिकारः ॥

अथ मुखरोगेषु ओष्ठप्रकोपक्रमिदंतमुखपाकदंतपुट-दंतहर्षगलितदंतमुखपूतिमांसांकुरद्विजिह्वादीनां रोगाणां

जातकाभिप्रायेण हेतुमाह तत्प्रतीकारं च । शुक्रदशायां सूर्यैविचरति मुखरोगो जायते। तत्प्रतीकारं च सूर्यप्रीतये प्रागुक्तं जपहोमादिकं कुर्यात् । तेनोपशाम्यति । स्वयं प्रवृत्तधर्मानुष्ठानविच्छेदी अविद्यमानदोषवादी सद्दोषसंकीर्तनशीलश्च नासासंकोचनादिना परदोषदर्शको वा सूचको वा दुर्गंधवदनो जायते । असौ चांद्रायणं कुर्यात् । स्रक्चंदनधूपादिसुगंधादीनि दद्यात् । पंचाशद्ब्राह्मणेभ्यो भोजनं दद्यात् । इति पूतिवक्त्रे । परवाग्घातार्थी मुखरोगी भवति स कृच्छ्रत्रय कुर्यात् । व्याहृतिभिराज्येन जुहुयात् । परमर्मच्छेदी मुखरोगी भवति । असौ व्रीहिहिरण्यं दद्यात् । तथा च सतत परदुःखकारी परजिह्वाच्छेदी अनृतभाषी अव्यवहारपक्षपाती वा जिह्वारोगी आस्यव्रणी भवति । अस्य प्रायश्चित्तं पराकद्वयं कूष्मांडीहोम कयानश्चित्रसूक्त जपेत्। होमं कुर्यात् । आस्यव्रणी व्रीहिदानं च कुर्यात यथाशक्ति–

अनुक्तसंख्या यत्र स्यात्तत्र शक्तिं समीक्ष्य च ।
विप्रादेश्च जपादेश्चेत्याह वै भगवान् शिवः ॥

इति वचनात् । अपरं च कूटसाक्षी मुखरोगी शोणितपित्ती वा भवति । स कृच्छ्रातिकृच्छ्रचांद्रायणानि कुर्यात् । कूष्मांडीभिर्जुहुयात् । सावित्रीं च जपेत् । व्रीहिहिरण्यं दद्यात् । अपरं च बोधायनः ।

वाग्विरोध गुरोः कृत्वा मुखरोगी भवेन्नरः ॥
अस्य दानेन विहितः प्रतीकारोयमुच्यते ।
सौवर्णं राजनं ताम्रं पलेनार्धपलेन वा ॥
कारयेत्करिणं सौम्यं यथाविभवतोपिवा ॥
तस्य शुभ्रौ च कर्त्तव्यौ दंतौ रजतकेन च ॥
लांगूलं मौक्तिकैः कुर्याद्रत्नानामाक्षिणी तथा ।
संवेष्ट्य पीतवस्त्रेण गंधपुष्पाक्षतादिभिः ॥
अर्चयेद्धान्यराशिस्थं धान्यं द्रोणाष्टकं मतम् ।
श्रुतवृत्तोपसपन्न ब्राह्मणं संयतेन्द्रियम् ।
दांतं कुलीनं धर्मिष्टमनुद्वेगकर नृणाम् ।
आहूय परया भक्त्या वस्त्रालंकारभूषणैः ।
तेनैतत्कारयेत्कर्म परितोष्य यथाविधि ॥
समिदाज्यतिलैस्तेन होम चापि प्रवर्तयेत् ।
अग्निनाग्निरनेनेन ततो हस्त्यर्चनं भवेत् ॥
स्वाहांतं कर्म कृत्वाथ प्रणीताप्रोक्षणं तथा ।
ततः शुक्लांबरधरः शुक्लमाल्यानुलेपनः ॥
तस्मै हुतवते दद्यात्करिणं तं सदक्षिणम् ।
मंत्रेणानेन विधिवत्प्राङ्मुखाय विशेषतः ॥
सुप्रतीक गजेंद्र त्व सरस्वत्याभिषेचित ।
इंद्रस्य वाहनोसि त्वं सर्वदेवैश्च पूजित ॥
दानेनानेन दत्तेन मुखरोगं विनाशय ।
इति दानमंत्रः ।

ब्राह्मणान्भोजयेत्तं च स्वयं भुंजीत बंधुभिः ॥
इति मुखरोगभगजदानविधिः ॥

अथ क्रमप्राप्तस्य मुखरोगस्य सनिदान चिकित्सित-माह रुग्विनिश्चयात्।

कर्कशौ परुषौ स्तब्धौ संप्राप्तानिलवेदनौ ।
दह्येते परिपाट्येते ओष्ठौ मारुतकोपतः ॥
चीयेते पिटिकाभिस्तु सरुजाभिः समन्ततः ।
सदाहपाकपिटकौ पीताभासौ च पित्ततः ॥
सवर्णाभिस्तु चीयेत पिटकाभिरवेदनौ ।
भवतस्तु कफादोष्ठौ पिच्छिलौ शीतलौ गुरू ॥
सानपातेन विज्ञेयावनेन पिटकाचितौ ।
रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ ॥
मांसदुष्टौ गुरुस्थूलौ मांसपिंडवदुच्छ्रितौ।
जंतवश्चात्र मूर्छंति नरस्य भयतो मुखात् ॥
शोणितं दंतवेष्टेभ्यो यस्मात्कस्मात्प्रवर्तते।
दुर्गंधीनि सुकृष्णानि प्रक्लेदीनि समततः ॥
दंतमांसानि शीर्यंते पचंति च परस्परम् ॥
शीतादो नाम स व्याधिः कफशोणितसभवः।
मारुतेनाधिकं दंतो जायते तीव्रवेदनः ।
वर्धनः स मतो व्याधिर्जातो रुक् च प्रशाम्यति॥
जिह्वाग्रजातः श्वयथुर्हि जिह्वामुन्नम्य जातः फलरक्तमूलः ।
लालाकरः पांडुयुतः सशोफः सैवात्तुजिह्वाकथिताभिषग्भिः

मुखवैरस्यदौर्गंध्यपाकक्लेदादयो गदाः
विशीर्णदंतमांसाश्च भवंत्यन्येऽपि सोल्बणाः ॥
बृंदसंग्रहात् ।
ओष्ठप्रकोपे वातोत्थे सोल्वणेनोपनाहयेत् ।
मस्तके चैव नस्ये च तैलं वातहरैः स्मृतम् ॥
श्रीवेष्टकं सर्जरसं गुग्गुलु सुरदारु च ।
यष्टीमधुकचूर्णैर्हि विदध्यात्प्रतिसारणम् ॥
वेधं शिराणां वमनं विरेक तिक्तस्य पानं मृदु भोजनं च ।
शीतान्प्रदेहान्परिषेचनं च पित्तोपसृष्टेष्वधरेषु कुर्यात् ।
शिरोविरेचनं धूमस्वेदः कवलधारणम् ।
हृतरक्ते प्रयोक्तव्यमोष्टपाके कफात्मके ॥
त्रिकटु सर्जिकाक्षारः क्षारश्च यवशुक्तिजः ।
क्षौद्रयुक्तं विधातव्यमेतच्च प्रतिसारणम् ॥
हितं च त्रिफलाचूर्णं मधुयुक्तं प्रलेपनम् ।
शीतादेर्हृतरक्ते तु लेपो नागरसर्पिषा ॥
कुष्ठ दार्वी लोध्रमब्द समंगा
पाठा तिक्ता तेजनी दीपिका च ।
चूर्णं शस्तं घर्षणं तद्द्विजानां
रक्तस्रावं हंति कंडूरुजं च ॥
चलदंतस्थिरकरं कार्यं वकुलचर्वणम् ।
दंतपुप्पुटके कार्यं तरुणे रक्तमोक्षणम्
सपचलवणक्षारं सक्षौद्रं प्रतिसारणम् ।

माक्षिकं पिप्पलीसर्पिर्मिश्रितं धारयेन्मुखे ॥
दंतशूलहरं प्रोक्तं प्रधानमिदमौषधम् ।
विस्राविते दंतवेष्टे व्रणं तु परिसारयेत् ॥
पतंगरोध्रमधुकलाक्षाचूर्णैर्मधूत्तरैः ॥
साधितो हृतरक्ते च रोध्रमुक्तारसांजनैः ।
सक्षौद्रैः शस्यते लेपो गंडूषे क्षीरिणी हिता ॥
क्रियां परिहरे कुर्याच्छीतादोक्तां विचक्षणः ।
शस्त्रेण दंतमूलानि शोधयेच्च विचक्षणः ॥
ततः क्षीरं प्रयुंजीत क्रिया सर्वास्तु शीतलाः ।
नाडीव्रणहरं कर्म दंतनाडीषु कारयेत् ॥
सुखोष्णाः स्नेहकवलाः सर्पिषा त्रिवृतस्य च ।
निर्यूहाश्चानिलघ्नानां दंतहर्षप्रमर्दकाः ॥
भद्रदार्व्यादिवर्षाभूलेपैः स्निग्धैश्च भोजनैः ।
हिंगु सोष्णं च मतिमान्कृमिदंते प्रतापयेत् ॥
फलान्यम्लानि शीताम्बु रूक्षान्नं दंतधावनम् ।
तथातिकठिनान्भक्षान्दंतरोगी विवर्जयेत् ॥
उपजिह्वां तु संलिप्य क्षारेण प्रतिसारयेत् ।
शिरोविरेकं गंडूषधूमैश्चैवमुपाचरेत् ॥
व्योषक्षाराभयावह्निचूर्णमेतत्प्रघर्षणम् ।
तालुमूले कफासृग्भ्यां जायते गलशुंडिका ॥
छित्त्वा तां व्योषसिंधूत्थोग्राक्षौद्रैः प्रतिसारयेत् ।

गलशुंडी क्षयं याति वज्रीक्षीरेण लेपिता ॥
वचामतिविषां पाठां रास्ना कटुकरोहिणीम् ।
निक्काथ्य पिचुमंदं च कवलं तत्र धारयेत् ॥
तुंडिके च ध्रुवोत्कर्णे संघाते तालुपुप्पुटे ।
एष एव विधिः कार्यो विशेषः शस्त्रकर्मणि ॥
तालुपाके तु कर्तव्य विधानं पित्तसाधनम् ।
स्नेहस्वेदौ तालुशोषे विधिश्चानिलनाशनः ॥
साध्यानां रोहिणीनां तु हितं शोणितमोक्षणम् ।
छर्दनं धूमपानं च गंडूषो नस्यकर्म च ॥
विस्राव्यकंठशालूकं साधयेत्तुडिकेरवत् ।
उपजिह्वकवच्चापि साधयेद्दंतजिह्वकम् ॥
छेदयेन्मंडलाग्रेण तीक्ष्णसंघर्षणादिभिः ।
एकवृंदं तु विश्राव्य विधिं शोधनमाचरेत् ॥
गिलायुश्चापि यो व्याधिस्तं च शस्त्रेण साधयेत् ।
कंठरोगेऽप्यसृङ्मोक्षस्तीक्ष्णैर्नस्यादिकर्म च ॥
काथपानं तु दार्वीत्वङ्निवतार्क्ष्यकलिंगजम् ।
हरीतकीकषायो वा पेयो माक्षिकसंयुत ॥
कटुकातिविषापाठादारुमुस्तकलिंगकाः ।
गोमूत्रक्वाथिता· पेयाः कंठरोगविनाशनम् ॥
गृहधूमो यवक्षार· पाठा व्योषा रसांजनम् ।
तेजोह्वा त्रिफला रोध्रं चित्रकश्चेति चूर्णितम् ॥
सक्षौद्रं धारयेदेतद्गलरोगविनाशनम् ।

कालकं नाम चूर्णं तु दंतास्यगलरोगनुत् ॥
मनःशिला यवक्षारो हरितालं ससैंधवम् ।
दारु तिक्तं च तच्चूर्णं माक्षिकेण समायुतम् ॥
मूर्छितं घृतमंडेन कंठरोगेषु धारयेत् ।
मुखरोगेषु च श्रेष्ठं पीतकं नाम कीर्तितम् ॥
इति पीतकचूर्णादिकम् ।
यवाग्रजं तेजवतीं सपाठां रसांजनं दारुनिशां च कृष्णाम्।
क्षौद्रेण कुर्याद्गुटिकां मुखेन तां धारयेत्सर्वगलामयेषु ॥
मुखपाके शिरावेधः शिरसश्च विरेचनम् ।
कार्यं च बहुधा नित्यं धात्रीचूर्णस्य घर्षणम् ॥
जातीपत्रामृताद्राक्षादेवदारुफलत्रिकैः ।
क्वाथो मधुयुतः शीतो गंडूषो मुखपाकनुत् ॥
पटोलनिंबजंब्वाम्रमालतीनवपल्लवम् ।
पंचपल्लवकः श्रेष्ठः कषायो मुखधावने ।
खदिरस्य तुलां सम्यग्जलद्रोणे विपाचयेत् ॥
शेषाष्टभागे तत्रैव प्रतिवापं प्रदापयेत् ॥
जातीकर्पूरपूगानि कक्कोलस्य फलानि च ।
इत्येषा गुटिका कार्या मुखसौभाग्यवर्धिनी ॥
दंतोष्ठमुखरोगेषु जिह्वातालामयेषु च ॥
इति खदिरगुटिका ।
बकुलस्य फलं रोध्रं वज्रवल्ली कुरंटकः ।
चतुरंगलवल्वज्रं वाजिकर्णोरिमासनम (?) ॥

एषां कल्ककषायाभ्यां तैलं पक्वं मुखे धृतम् ।
स्थैर्यं करोति चलतां दंतानां धावनेन वा ॥
इति बकुलाद्यं तैलम् ।

इति श्रीतोमर० वीरसिंहावलोके मुखरोगाधिकारः ॥

अथ क्रमप्राप्तस्य कर्णरोगस्य ज्योतिश्शास्त्राभिप्रायेण हेतुमाह तत्प्रतीकारं च यथोक्तं जातके ।

धनव्ययगतः शुक्रो भौमो वा कर्णदोषकृत् ॥
अन्यच्च व्ययगे शुक्रे कर्णपीडा । अपरं च-
दाक्षिण्यरूपगुणभोगधनैः प्रधान-
श्चन्द्रे कुलीरवृषभाजगते विलग्ने ॥
उन्मत्तनीचबधिरो विकलश्च मूक-
शेषेषु ना भवति कृष्णतनुर्विशेषात् ॥

अथ द्विद्वादशस्थशुक्रजनितकर्णदोषोपशांतये पूर्ववज्जपहोमादि शुक्रप्रीतये कुर्यात् । कर्कवृषमेषवर्ज्यम् । अन्यलग्नेषु वर्त्तमाने क्षीणे चंद्रे बाधिर्यम् । तदुपशांतये चंद्रप्रीतये तदुक्तं पूर्ववत्कुर्यात् ।

अथकर्णरोगस्य कर्मविपाके हेतुमाह तत्प्रतीकारं च । यो मातापितृभ्यां प्रवृत्तं मैथुनं शृणोति स कर्णशूली भवति पश्चाद्बधिरः किंचिदेव शृणोति वा कपालेष्वसह्यध्वनिर्भवति इति । तद्विष्णोरित्यष्टोत्तरायुतं जपेत् । पुरुषसूक्तं वा । अपामार्जनस्तोत्राभिमंत्रितं जलं पिबेत् । यथाविभवं ब्राह्मणेभ्यो भोजनं दद्यात् । महाधनी निष्कविंशतिकं दद्यात् ।

विष्णुप्रणामकृद्विद्वान् कर्णरोगप्रशांतये ।
भोजन ब्राह्मणेभ्यश्च प्रदद्यात्प्रयतो नरः ॥

तथा च । मैथुनं शृणुयात्पित्रोः कर्णशूली भवेत्तु सः । इति वाक्यात् अपरं च मातापित्रोर्दैवब्राह्मणानां गुरूणा चान्येन क्रियमाणां यो निंदां शृणोति सः कर्णशूली प्रस्रवत्पूयशोणितो भवति । तदुपशांतये हिरण्यं रक्तवाससां दानं ब्राह्मणानां च भोजनं दद्यात् । सर्वाचार विहीनः प्रेतश्राद्धभोक्ता कृमिकर्णो भवति । दद्यान्नीरुपं चान्नं कृमिकर्णो नृपोत्तम ॥

इति कर्णरोगप्रतीकारः ।

अथ क्रमप्राप्तस्य कर्णरोगस्य सनिदान चिकित्सितमाह । यथाह सुश्रुताचार्यः ।

कर्णशूलं प्रणादश्च बाधिर्यं क्ष्वेड एव च ।
कर्णस्रावः कर्णकंडूः कर्णगूथस्तथैव च ॥
कृमिकर्णः प्रतीनाहो विद्रधिर्द्विविधस्तथा ।
कर्णपाकः पूतिकर्णस्तथैवार्शश्चतुर्विधम् ॥
तथार्बुदं सप्तविध शोफश्चापि चतुर्विधः ।
एते कर्णगता रोगा अष्टाविंशतिरीरिताः ॥

रुग्विनिश्चयात् ।

समीरणःश्रोत्रगतोन्यथास्वराः
समततः शूलमतीव कर्णयोः ॥

करोति दोषैश्च यथा समावृतः
स कर्णशूलः कथितो भिषग्वरैः ॥
कर्णश्रोत्रास्थिते वाते शृणोति विविधान्स्वरान् ।
भेरीमृदंगशखानां कर्णनादः स उच्यते ॥
यदा शब्दवहो वायुः श्रोत्रमावृत्य तिष्ठति ।
शुष्कश्लेष्मान्वितो वापि बाधिर्यं तेन जायते ॥
वायुः पित्तादिभिर्युक्तो वेणुघोषोपमं स्वनम् ।
करोति कर्णयोः क्ष्वेडं कर्णक्ष्वेडः स उच्यते ॥
यदा तु मूर्च्छत्यणवोऽपि जंतवः
सृजत्यपत्यान्यथ वापि माक्षिकाः ।
तदंजितत्वाच्छ्रवणो निरुच्यते
भिषग्वराद्यैः क्रिमिकर्णको गदः ॥
कर्णविद्रधिपाकेन कर्णे वा चांबुपूरणात् ।
पूयं स्रवति यः पूति स ज्ञेयः पूतिकर्णकः ॥
इत्याद्या बहवो रोगा संत्यन्ये सूक्ष्मभेदतः ।
कपित्थमातुलिंगाम्लशृंगबेररसैः शुभैः ।
सुखोष्णैः पूरयेत्कर्णं कर्णशूलोपशांतये ॥
शृंगबेरं च मधु च सैंधवं तैलमेव च ।
कटुष्णं कर्णयोर्देयमेतद्वा वेदनापहम् ॥
लशुनार्द्रकशिग्रूणां सुराया मूलकस्य च ।
कदल्याश्च रसः श्रेष्ठः कटुष्णः कर्णपूरणे ॥
समुद्रफेनचूर्णेन युक्त्या वाप्यवचूर्णयेत् ॥

आर्द्रकसूर्यावर्त्तकसौ (शो)भांजनमूलकस्वरसः ।
मधुतैलसैंधवयुताऽन्यक्तोष्ण' कर्णशूलहरः ॥
सौ (शो) भांजनस्य निर्यासास्तिलतैलेन संयुतः ।
सुखोष्ण. पूरणः कर्णे कर्णशूलोपशांतये ॥
चूर्णं पंचकषायाणां कापित्थरससंयुतम् ।
कर्णस्रावे प्रशंसंति पूरणं मधुना सह ॥
सर्जत्वक्चूर्णसंयुक्तः कार्पासीफलजो रसः ।
मधुना संयुतः साधु कर्णस्रावे प्रशस्यते ॥
शंबूकस्य तु मांसेन कटुतैलं विपाचयेत् ॥
तस्य पूरणमात्रेण कर्णनाडी प्रशाम्यति ॥
अथ कर्णप्रतीनाहे स्नेहस्वेदौ प्रयोजयेत् ।
ततो विरिक्तः शिरसः क्रियां प्राप्तां समाचरेत् ।
क्लेदयित्वा तु तैलेन स्वेदेन प्रविलाप्य च ।
शोधयेत्कर्णपूरं तु भिषक् शुद्धशलाकया ॥
निर्गुंडीस्वरसं तैलं सिंधुधूमरजो गुडः ।
पूरण' पूतिकर्णस्य शमनो मधुसंयुतः ॥
सूर्यावर्तकसुरसं सिंदुवाररसं तथा ।
लांगलीमूलकरसं त्र्यूषणेनावचूर्णितम् ॥
पूरयेत्कृमिकर्णं तु जंतूनां नाशनं परम् ।
घृतं रसांजनं नार्याः क्षीरेण क्षौद्रसंयुतम् ॥
प्रशस्यते चिरोत्थेऽपि संस्रावे पूतिकर्णके ।
कुष्ठहिंगुवचादंतीशताह्वाविश्वसैंधवैः ॥

पूतिकर्णापहं तैलं वस्तमूत्रेण साधितम् ।
शतावरीवाजिगंधापयस्येरंडबीजकैः ।
तैलं विपक्वं सक्षीरं पाल्यां कर्णस्य पुष्टिकृत् ॥

इति श्रीतोमर० श्रीवीरसिंहावलोके कर्णरोगाधिकारः ॥

अथ नासारोगस्य ज्योतिश्शास्त्राभिप्रायेण हेतुमाह तत्प्रतीकारं च । यथोक्तं जातके-

कुजभृगुरविसुतयोगे नासारोगः प्रजायते जंतोः ।
नानाव्याधिक्लेशा रिपुजा भीतिर्भवेद्विपमा ॥

अथ त्रिग्रहजनितनासारोगोपशांतय क्रमेण पूर्ववद्विधानं कुर्यात् । तेनोपशातिर्भवति ।

अथ नासारोगस्य कर्मविपाके हेतुमाह तत्प्रतीकारं च । यथोक्तं गौतमीये । विद्यमानाविद्यमानपरदोपस्य प्रख्यापनशीलः पिशुनः दुर्गन्धनासिको भवति । किंच नासासंकोचनादिना परदोपदर्शकोवा । स तत्पापोपशान्तये कृच्छ्रद्वयं तत्प्रत्याम्नाये सुवर्णं वा दद्यात् । अपरं च क्रियानुष्ठानकाले कुक्कुटखरादीन् कामाद्य ईक्षते स नासिकाव्रणी भवति । कृच्छ्रसांतपनादि प्रागुक्तं विदध्यात् । उद्वयमित्यृचा चरुघृताभ्यां जुहुयात् । श्रीसूक्तं जपेत् । रक्षां तस्य शिरसायां दूर्वाक्षतैर्बध्नीयात् ।

इति नासारोगः ॥

अथ क्रमप्राप्तस्य नासारोगस्य सनिदानं चिकित्सितमाह सुश्रुतात् ।

आपीनसः पूतिनस्यं नासापाकस्तथैव च ॥
तथा शोणितपित्तं च पूयशोणितमेव च ।
क्षवथुर्भ्रंशथुर्दीप्तिर्नासानाहः परिस्रवः ॥
नासाशोषेण सहिता दशैकश्चेरिता गदाः ।
चत्वार्यर्शांसि चत्वारः शोफाः सप्तार्बुदानि च ॥
प्रतिश्यायाश्च ये पंच वक्ष्यन्ते सुचिकित्सिताः ।
एकात्रिंशत्सहैतैस्तु नासारोगाः प्रकीर्तिताः ॥

वृंदसंग्रहात्—

पंचमूलीशृतं क्षीरं स्याच्चित्रकहरीतकी ।
सर्पिर्गुडः षडंगश्च यूपः पीनसशांतये ॥
व्योषचित्रकतालीसतिंत्रिडीकाम्लवेतसैः ।
अजाजीचव्यतुल्यांशैरेलात्वक्पत्रपादिकैः ॥
व्योषादिकमिदं चूर्णं पुराणगुडमिश्रितम् ॥
पीनसश्वासकासघ्नं रुचिस्वरकरं परम् ॥
इति व्योषाद्य चूर्णम् ॥

व्याघ्रीदंतीवचाशिग्रुसुरसव्योषसैंधवैः ।
पाचितं नावनं तैलं पूतिनासागदं हरेत् ॥
नासापाके पित्तहृत्संविधानं कार्यं सर्वं बाह्यमाभ्यंतरं च ।
हृत्वा रक्तं क्षीरवृक्षत्वचो वा साज्याः सेके योजनीयाश्च लेपे ॥
शुंठीकृष्णाकणाबिल्वद्राक्षाकल्ककषायवत् ।
साधितं तैलमाज्यं वा नस्यं क्षवथुरुक्प्रणुत ॥

दीप्ते रोग पैत्तिके पैत्तिकं च विधिं कुर्यान्मधुरं शीतलं च।
नासादाहेस्नेहपानप्रधानं स्निग्धाधूमामूर्धवस्तिश्चनित्यम्
वातिके तु प्रतिश्याये पिबेत्सर्पिर्यथाक्रमम् ।
पंचभिर्लवणैः सिद्ध प्रथमेन गणेन वा ॥
नस्यादिषु विधिं कृत्स्नमवेक्षेतार्दितेरितम् ।
पित्तरक्तात्यये पेय सर्पिस्तु मधुरैः शृतम् ॥
परिषेकान्प्रदेहांश्च कुर्यादपि च शीतलान् ।
कफजे सर्पिषा स्निग्ध तिलमाषविपक्वया ॥
यवाग्वा वामयित्वा वा श्लेष्मघ्नं क्रममाचरेत् ।
पुटपक्वजटापत्रं सिंधुतैलसमन्वितम् ॥
प्रतिश्यायेषु च श्याये शीलितं परमौषधम् ॥
त्र्यूषणं गुडसंयुक्तं स्निग्धं दध्यम्लभोजनम् ।
प्रतिश्यायहरं चैव विशेषात्कफनाशनम् ॥
ततः पक्वं कफं ज्ञात्वा हरेच्छीर्षविरेचनैः ॥
पिप्पलीशिग्रुबीजानि विडंगं मरिचानि च ।
अवपीड प्रशस्तोऽयं प्रतिश्यायनिवारणः ॥
रक्तकरवीरपुष्पं पुष्प जात्याश्च मल्लिकायाश्च।
एतैः सम तु तैल नासार्शोनाशनं तु घृतम् ॥
इति करवीराद्य तैलं घृतं च ।
सर्पिःपानंभोजनंजांगलैश्चस्नेहस्वेदौस्नैहिकश्चापियूषः ।
शेषान्रोगान्घ्राणजान्सन्निरच्छेदुक्तंतेषांयद्यथासंविधानम्।
इति श्रीतोमर०वीरसिंहावलोके नासाधिकारः ।

अथ ज्योतिश्शास्त्राभिप्रायेण नयनामयस्य हेतुमाह तत्प्रतीकारं च । यथोक्तं जातके ॥

विकलेक्षणोऽर्कलग्ने तैमिरिकोऽजे च भे तु रात्र्यंधः ।
बुद्बुददृष्टिः कर्किणि काणो व्ययगे शशांके वा ॥

तथा च ।

नृपबंधनसंतप्तो मार्गरतो युवतिविद्वेषी ।
विकलनयनोऽष्टमस्थे सुखधनहीनोऽल्पजीवितः पुरुषः॥

अन्यच्च ।

नयनातुरः कुलीनः सुभगो वात्सल्यसंयुतो मनुजः ।
वक्रगुरुदिवसनाथैरेतत्स्थैः स्याद्विभवसंपन्नः ॥

अथार्के लग्नस्थे विकलनयनो मेषस्थे सूर्ये तिमिरदृष्टिः स्वराशौ रात्र्यंधः कर्कटस्थे बुद्बुददृष्टिः व्ययगे शशांके च काणः । अथ क्रमेणैव जातकोक्तस्थानस्थितग्रहजनितनयनामयोपशांतये विधिवत्सूर्यप्रीतये यथोक्तमेव विधानं कुर्यात् । व्ययगे शशांकेऽपि काणत्वं तदुपशांतये चन्द्रप्रीतये उक्तमेव कुर्यात् । तथा चाष्टमस्थरविजनितनयनदोषोपशातये रविप्रीतये उक्तमेव सकलं कुर्यात् । तथा च गुरुबुधसूर्ययोगेऽपि उक्तं कुर्यात् । भौमगुरुयोगेऽपि पूर्ववत् ।

अथ नयनामयस्य कर्मविपाके हेतुमाह तत्प्रतीकारं च । परदृष्टिविघातकृद्विपकू मिथ्याचारेण व्याधिकृत्

यद्वा परास्त्रियं दृष्ट्वा दृष्टिं यः प्रेरयति स नेत्ररोगी भवति, अस्य प्रायश्चित्तं चान्द्रायणं पराकं च कुर्यात् । अत्राप्य शक्तः प्रतिदिनं पंचाशद्ब्राह्मणभोजनं कारयेत् । अत्राप्य शक्तौ 'चेयः सुपर्णो सुपर्णोसि 'इति चरुघृताभ्यामष्टोत्तरसहस्रं जुहुयात् । यावद्रोगमोक्षः चक्षुर्मे देहीतीमं मंत्रं जपेत् । आज्यं सहिरण्यं दद्यात् । 'मुद्रान्नं ब्राह्मणे दद्यान्नेत्ररोगापनुत्तये' । इति ब्रह्माण्डपुराणवचनात् अथ नयनपूये जले-दंपतिभ्यां प्रवृत्तं मैथुनं यो निरीक्षते स नयनपूयवान् भवति सजलनयनश्च । स चक्षुर्मेदेहि अक्षिभ्यामिति मंत्राभ्यां जपं कुर्यात् सूर्यस्य सहस्रकलशाभिषेकं कुर्यात् कारयेद्वा । 'सहस्र-कलशस्नानं रवौ कुर्याद्द्विजोत्तमः' इति वचनात् । यथाविभवं ब्राह्मणभोजनं कारयेत् इति तत्र पूयसजलोचने । अथ मन्ददृष्टौ-यः उच्छिष्टे उद्यंतं भास्करं मध्याह्नगतं भास्वंतं वा नक्षत्राणि वा निरीक्षते स मंदभूतनेत्रदृष्टिर्भवति । स उद्यन्नद्य मित्रम. इत्यादिऋचा श्चरुघृताभ्यामष्टोत्तरसहस्रं जुहुयात् ।

घृतेन चरुणा चैव नेत्रहीनो हुताशने ॥
जुहुयादयुतं सम्यगिति शास्त्रविनिश्चयः ।

कूर्मपुराणे-

निष्कद्वादशकं दद्याद्रक्तवासांसि चैव हि ।

अपर च । यः पूर्वजन्मानि ब्राह्मणदेवमंदिरे वर्तमानं ज्वलंतं दीपं निर्वापयति सोऽन्यजन्मानि तिमिरव्याधिर्भवति । समस्तभूमिदैवतमत्रान् जपेत् । जलमभिमंत्र्य सर्वांगेषु प्रोक्षयेत् मुक्तो भवति । महादेवस्य सहस्रकलशाभिषेकं कुर्यात् ॥ दीपकं भंजयित्वा तु तिमिरव्याधिमान्भवेत् । इति वचनात् । इति तिमिरहरः ।

अथाक्षिवेदनायां—पद्मपुराणे ।

जन्मांतरेऽक्षिभेदेन जायते ह्यक्षिवेदना ।
वक्ष्यामि तत्प्रतीकारं ब्रह्मणा भाषितं पुरा ॥
पलेन कारयेद्धेम्ना गरुडं विष्णुवाहनम् ।
राजतौ च तथा पक्षौ रत्ननद्धौ सुविस्तृतौ ॥
कर्तव्यं चाक्षियुगलं माणिक्याभ्यां प्रकल्पितम् ।
ग्रैवेयकं स्वर्णमयं ग्रीवायां तस्य विन्यसेत् ॥
नासिकायां तु वैडूर्यं मौक्तिकं वा प्रकल्पयेत् ।
वस्त्रैर्नानाविधैर्बद्धमलंकृत्य शुभाकृतिम् ॥
स्थापयेत्पुरतो विष्णोः प्रीत्यर्थं च गदाभृतः ।
गंधपुष्पाक्षतैर्वस्त्रैः पूजयेद्ब्राह्मणोत्तमम् ॥
वेदवेदांगकुशलं सर्वविद्याविशारदम् ।
होमश्च तत्र कर्तव्यो मंत्रैः श्रद्धादिकैः शुभैः ॥
यद्वा गरुडगायत्र्या समिदाज्यतिलाहुतीः ।
गरुडगायत्री नयनवैकृत्यहरा यथा—

ॐ पक्षिराजाय विद्महे सुवर्णपक्षाय धीमहि ।
तन्नो गरुडः प्रचोदयात्-इति गरुडगायत्री ।
पुण्याहवाचनं कार्यं ब्राह्मणैर्वेदपारगैः ।
तस्मै हुतवते दद्याच्छौरिप्रीत्यर्थमादृतः ॥
भक्त्या सपूज्य विधिवन्नूपुरैः कटकादिभिः ।
मंत्रेणानेन विधिवत्प्राङ्मुखो नेत्ररोगवान् ॥
देवदेव जगन्नाथ लक्ष्मीप्रियपरायण ।
वाहनस्य प्रदानेन दुष्टकर्मविपाकजम् ॥
अक्षिरोगं नाशय मे नारायण जगन्मय ।
पुष्पं वा पटलं वापि आध्यं रक्तमथापि वा ॥
स्रवज्जलं वा पूयं वा रक्ताक्षं वा तथार्बुदान् ।
इति दानमन्त्रः ।
ततो विसृज्य विप्रेद्रं शिष्टैरिष्टैश्च बंधुभिः ॥

ब्रह्मांडपुराणे-

अक्षिसंभवरोगाणामाज्यं कनकसंयुतम् । इति ।
नक्तांध्यं जायते तस्य यो गवा नेत्रयोर्द्वयोः ॥
धूलिक्षेपं प्रकुरुते तस्य वक्ष्यामि निष्कृतिम् ।
विष्णोरराटं प्रतद्विष्णुर्विष्णोर्नुकमिति वा मंत्राञ्जपेत् ।
श्रीमतो गोपवेषस्य यथाशक्त्या च भक्तितः ।
सुवर्णेन प्रतिकृतिं वेणुवादनतत्परम् ।
बर्हापीडेन संयुक्तं द्विभुजं हर्षसंयुतम् ॥
कारयित्वा शुभाकारं प्रक्षाल्य शुभवारिणा ।

वस्त्रेणावेष्ट्य विधिवद्गंधमाल्यैः समर्चयेत् ॥
तडुलोपरि संस्थाप्य यथाविभवविस्तरम् ॥
पूजां च कारयेन्मंत्री शुभैः पूर्वोदितैः क्रमात् ।
होमं तत्र प्रकुर्वीत समिदाज्यतिलैः सह ॥
देवस्य दद्यान्नैवेद्यं हविः सर्वं समंत्रितम् ।
अष्टोत्तरशतं वापि मूलमंत्रेण वै शृतम् ॥
जुहुयादथ रोगार्तः प्राङ्मुखः प्रयतः शुचिः ।
शुक्लाम्बरधरः शुक्लगंधमाल्यानुलेपनः ।
सदक्षिणां पुनर्दद्यात्प्राङ्मुखो वाप्युदङ्मुखः ।
मंत्रेणानेन विधिवन्नमस्कृत्य तु भक्तितः ।
गोविंद गोपीजनवल्लभेश विध्वस्तकंस त्रिदशेंद्रवंद्य ॥
गोवर्धनाद्रिप्रवरैकहस्त सरक्षिताशेषजनप्रवीण ।
गोनेत्ररेणुक्षपणप्रभूतमांध्यं तथोग्र तिमिर क्षपाशु ॥

इति दानमंत्रः ।

एवं कृत्वा विधानं तु गोपवेषधरस्य तु ।
तत्क्षणादेव हि सुखं जायते नात्र संशयः ॥

इति रात्र्यंधहरगोपालदानविधिः ।

अथ क्रमप्राप्तस्य नेत्ररोगस्य सनिदानं चिकित्सित-माह रुग्विनिश्चयात् ।

उष्णाभितप्तस्य जलप्रवेशाद्दूरेक्षणात्स्वप्नविपर्ययाच्च ।
स्वेदाद्रजोधूमनिषेवणाद्वा छर्देर्विघाताद्वमनातियोगात् ॥
द्रवान्नपानातिनिषेवणाच्च विण्मूत्रवातक्रमनिग्रहाच्च ।
बाष्पग्रहात्सूक्ष्मनिरीक्षणाच्चनेत्रेविकाराञ्जनयन्तिदोषाः

वातात्पित्तात्कफाद्रक्तादभिष्यंदश्चतुर्विधः ।
प्रायेण जायते घोरः सर्वनेत्रभयंकरः ॥
पट्सप्ततिर्लोचनजा विकारास्तेषामभिष्यंदसमुद्भवानाम् ।
श्लेष्माश्रयत्वादतिलंघनं प्राक् प्रशस्यते शुद्धदलोदनं च ॥
नेत्रे एव मनुष्याणां सर्वत्रेह सुखावहे ।
तस्माद्यत्नेन सद्वैद्यैस्तयोः कार्यं चिकित्सितम् ॥
वृंदसंग्रहात् ।
लंघनालेपनस्वेदशिराव्यधविरेचनैः ।
उपाचरेदभिष्यदानंजनश्च्योतनादिभिः ॥
अक्षिकुक्षिभवा रोगाः प्रतिश्यायव्रणज्वराः ।
पचैते पंचरात्रेण रोगाः शाम्यंति लंघनात् ॥
स्वेदप्रलेपसिक्थान्नसेको दिनचतुष्टयम् ।
लंघनं चाक्षिरोगाणामामानां पाचनानि पट् ॥
श्रीवासातिविषालोध्रैश्चूर्णितैरल्पसैंधवैः ।
अव्यक्तेऽक्षिगदे कार्यं प्लोतस्थैर्गुंठनं बहिः ॥
अंजनं पूरणं क्वाथपानं मानेन शस्यते ।
यथाशिरोग मन्येत सरुजं व्यक्तिलक्षणम् ॥
वेदनानिग्रहार्थं च कुर्यादाश्च्योतनं तदा ।
आश्च्योतनं मारुतजे क्वाथो बिल्वादिभिर्हितः ॥
कोष्णमेरंडबृहतीतर्कारीमधुशग्रुभिः ।
एरंडपल्लवे मूले त्वचि वापि पयः शृतम् ॥
कंटकार्याश्च मूलेषु सुखोष्णं सेचने हितम् ।

ततः संप्राप्तदोषस्य प्राप्तमंजनमाचरेत् ॥
हेमंते शिशिरे चैव मध्याह्नेऽञ्जनमिष्यते ।
पूर्वाह्ने चापराह्ने च ग्रीष्मे शरदि चेष्यते ॥
वर्षास्वनभ्रे नात्युष्णे वसंते च सदैव हि ।
हरेणुमात्रां कुर्वीत वर्तिं नेत्रांजने भिषक् ॥
प्रमाणं मध्यमध्यार्धं द्विगुणं च मृदौ भवेत् ।
विडंगमात्रं त्ववरं मध्यम चोत्तमं त्रयम् ॥
रसक्रियाणां वर्त्तीना प्रमाणं परिकीर्तितम् ।
वैरेचनिकचूर्णं तु द्विशलाकं विधीयते ॥
मृदौ तु त्रिशलाक स्याच्चतस्रः स्नैहिकेंजने ।
सुवर्णरूप्यताम्रायःकांस्याश्मास्थिमयाःकृताः ॥
शलाकाश्चांजने शस्ता अष्टांगुलमिताः शुभाः ।
वर्त्तयो मुसलाकाराः कलायपरिमंडला· ॥
बृहत्यरंडमूलत्वक् शिग्रुमूलं ससैन्धवम् ।
अजाक्षीरेण पिष्ट स्याद्वर्त्तिर्वाताक्षिरोगनुत् ॥
हरिद्रे मधुकं द्राक्षां देवदारु च पेपयेत् ।
आज्येन पयसा श्रेष्ठमभिष्यंदे तदंजनम् ॥
प्रपौण्डरीकं यष्ट्याह्वं निशामलकपद्मकैः ।
शीतैर्मधुसमायुक्तैः सेक' पित्ताक्षिरोगनुत् ॥
कफजे लंघनं स्वेदो नस्यं तिक्तादिभोजनम् ।
तीक्ष्णैः प्रमथन कुर्यात्तीक्ष्णैश्चैवोपनाहकम् ॥

फणिज्जकास्फोतकपित्थविल्वधत्तूरपीलुस्तुरसार्जभृंगैः ।
स्वेदंविदध्यादथवाप्रलेपं वहिष्ठशुंठीसुरदारुकुष्ठैः ॥
शुंठीनिंवदलैः पिण्डः सुखोष्णः स्वल्पसैंधवैः ।
धार्यश्चक्षुपि सक्षेपान्नेत्रकण्डूव्यथापहः ॥
ससैन्धवं रौध्रमथाज्यभृष्टं सौवीरपिष्ट सितवस्त्रवद्धम् ।
आश्च्योतनं तन्नयनयस्यकुर्यात्कडूंचदाहच रुजंचहन्यात
सुखोष्णैर्वातजः शांतिः पित्तजो मृदुशीतलैः ॥
सुतीक्ष्णैरुष्णविशदैः प्रशाम्यति कफात्मजः ।
तिंत्रिडीत्रिफलायष्टीशर्करा भद्रमुस्तकैः ॥
पिष्टैः सीतांबुना सिक्तै रक्ताभिष्यंदनाशनम् ।
तिक्तस्य सर्पिपा पानं वहुशश्च विरेचनम् ॥
अक्ष्णोरपि समंताच्च पातनं च जलौकसाम् ।
पित्ताभिष्यदशमनो विधिश्चाय विधीयते ॥
पथ्यागैरिकसिंधूत्थदार्वीतार्क्ष्यैः समांशकैः ।
जलपिष्टैर्बहिर्लेप सर्वनेत्ररुजापहः ॥
बिल्वपत्ररसः पूतः साज्य सलवणान्वितः ।
शुल्बे वराटिकाघृष्टो धूपितो गोमयाग्निना ॥
पयसालोडितश्चाक्ष्णोः पूरणाच्छोफशूलनुत् ।
अभिष्यंदेधिमथे च स्रावे रक्ते च शस्यते ॥

इति बिल्वाञ्जनम् ।

सलवणकटुतैलं कांजिकं कांस्यपात्र
घनितमुपलघृष्टं धूपित गोमयाग्नौ ।

सपवनकफकोप छागदुग्धावसिक्तं
जयति नयनशूलं स्रावशोफ सरागम् ॥
अयमेव विधिः सर्वो मंथादिष्वपि शस्यते ॥
अशांते सर्वथा मंथे भ्रुवोरुपरि दाहयेत् ।
जलौकापातनं शस्तं नेत्रपाके विरेचनम् ॥
शिराव्यधं वा कुर्वीत सेका लेपाश्च शुक्रवत् ।
पथ्यास्तिस्रो बिभीतक्य· पट् राज्या द्वादशैव तु ।
प्रस्थार्धे सलिले क्राथमष्टभागावशेषितम् ।
पीत्वाभिष्यदमास्रावं राग वा तिमिर जयेत् ॥
आगंतुरोगे प्रसमीक्ष्य कार्यं
वक्त्रोष्मणा स्वेदनमादितस्तु ।
आश्च्योतनं स्त्रीपयसा च सद्यो
यच्चापि पित्तक्षतजेषु शस्तम् ॥
सूर्योपरागानलविद्युदादिविलोकनेनोपहतेक्षणस्य ।
संतर्पणं स्निग्धहिमादिकार्यं सायंनिषेव्यस्त्रिफलाप्रयोगः॥
शिरोहर्षेऽञ्जनं कुर्यात्फाणितं मधुसंयुतम् ।
मधुना तार्क्ष्यशैलं वा कासीसं वा समाक्षिकम् ।
वेतसाम्लं स्तन्ययुक्तं फाणित तु ससैंधवम् ॥
गव्यक्षीरोत्थित सर्पिस्तर्पणार्थं विधीयते ॥
दृष्टिप्रसादनं श्रेष्ठं तिमिरस्यापकर्षणम् ।
शंखस्य भागाश्चत्वारस्तदर्धेन मनश्शिला ॥

मनश्शिलार्धं मरिच मरिचार्धेन सैंधवम् ।
एतच्चूर्णांजन श्रेष्ठ शुक्रयोस्तिमिरेषु च ॥
वासा घनं निंबपटोलपत्रं तिक्तामृताचंदनवासकत्वक् ।
कलिंगदार्वीदहनं सशुंठीभूनिंबधात्रीविजयाविभीतिम् ॥
समं यवैः साष्टमभागशेषं क्वाथं पिबेत्तं दिनपूर्वभागे ।
पिबेत्कषाय दिवसस्य पूर्वं पथ्यान्नभुङ्नेत्रगदामयघ्नम् ।
शुक्र तथा सव्रणमव्रण च दाह सराग सरुज च हन्यात् ॥
इति वासादि क्वाथम् ।
नूनं दृष्टिविनाशाय तिमिरं समुदाहृतम् ।
ऋषिभिस्त्वरित तस्मात्तस्य कुर्याच्चिकित्सितम् ।
लिह्यात्सदा वा त्रिफलां सुचूर्णितां
घृतप्रगाढां तिमिरेऽथ पित्तजे ।
समीरजे तैलयुतां कफात्मके
मधुप्रगाढां विदधीत युक्तितः ॥
कल्क' क्वाथोऽथ वा चूर्णं त्रिफलाया निषेवितम् ।
मधुना हविषा वापि समस्ततिमिरांतकृत् ॥
यस्त्रैफल चूर्णमपथ्यवर्ज्यं सायं समश्नाति हविर्मधुभ्याम् ।
समुच्यते नेत्रगतैर्विकारैर्भृत्यैर्यथा क्षीणधनो नृपेंद्रः ॥
जाता रोगा विनश्यंति न भवंति कदाचन ।
त्रिफलाया' कषायेण प्रातर्नयनधावनात् ॥
भुक्त्वा पाणितले घृष्ट्वा चक्षुषोर्यदि दीयते ।
अचिरेणैव कालेन तिमिराणि व्यपोहति ॥

कतकस्य फलं शंखं सैंधवं त्र्यूषणं सिता ।
फेनो रसाजनं क्षौद्रं विडंगानि मनश्शिला ॥
सर्वमेतत्सम कृत्वा छागक्षीरेण पेषयेत् ।
तिमिरं पटलं काचं मंदशुक्र व्यपोहति ॥
कंडूक्लेदार्बुद हंति मलं चाशु सुखावती ।

इति सुखावतीवर्तिः ।

हरीतकी वचा कुष्टं पिप्पली मरिचानि च ।
विभीतस्य च मज्जा च शंखनाभिर्मनश्शिला ॥
सर्वमेतत्समं कृत्वा छागक्षीरेण पेषयेत् ।
नाशयेत्तिमिर कंडूं पटलान्यर्बुदानि च ॥
अंधकानि च मांसानि यश्च रात्रो न पश्यति ।
अपि द्विवार्षिकं पुष्पं मासेनैव विनाशयेत् ।
वर्तिश्चंद्रोदया नाम नृणां दृष्टिप्रासादिनी ॥

इति चद्रोदया वर्तिः ।

दिनेदिने प्रयोक्तव्यं नेत्रयोस्तीक्ष्णमजनम् ।
विरेकदुर्बलादृष्टिरादित्य प्राप्य सीदति ॥
अशीतिस्तिलपुष्पाणि षष्टिः पिप्पलितडुलाः ।
जातीकुसुमपचाशन्मरिचानि च षोडश ॥
एषा कुसुमिकावर्तिर्गतचक्षुर्निवर्तयेत् ।
एकगुणा मागधिका द्विगुणा च हरीतकी सलिलपिष्टा ॥
वर्तिरियं नयनसुखा तिमिरपटलकाचहा ।

मधुयष्टिका ।
अंजनाभिर्मनःशिला ॥
छागक्षीरेण पेषयेत् ।
वर्तिं नेत्ररोगेषु योजयेत् ।
अर्बुदं पटल काच तिमिरं रक्तराजिकम् ।
अधिमांस बल चव यत्र रात्रौ न दृश्यते ॥
वर्तिश्चंद्रप्रभा नाम रात्र्यंधमपि नाशयेत् ।
इति चंद्रप्रभावर्तिः ।
पादगैरिककर्पूरयष्टीनीलोत्पलांजनम् ।
नागकेसरसंयुक्तमशेषतिमिरांतकृत् ।
त्रिफलाभृंगमहौषधमध्वाज्यच्छागपयांसि गोमूत्रे ।
नागे सप्त निषिक्तं करोति गरुडोपमं चक्षुः ॥
कणा छागयकृन्मध्ये सत्वाभद्रकपेषिता ।
अचिराद्धाति नक्तांध्यं तद्वत्सक्षौद्रदूषणम् ॥
त्रिफलाक्वाथकल्काभ्यां सपयस्कं घृतं शृतम् ।
तिमिराण्यचिराद्धन्यात्पीतमेतन्निशामुखे ॥
इति त्रिफलाद्य घृतम् ।
पिप्पलीत्रिफलाद्राक्षालोहचूर्णं ससैंधवम् ।
भृंगराजरसे घृष्टं गुटिकांजनमिष्यते ॥
अमं सतिमिरं काच कंडू शुक्रं तथार्बुदम् ।
अनेकान्नेत्ररोगांश्च हन्यान्निरवशेषतः ॥
गैरिकं सैंधवं पथ्या पलाशतरुशोणितम् ।

क्रमवृद्धमिदं चूर्णं शुक्रार्मादिविलोपनम् ॥

पुष्पाक्षतार्क्ष्यजसितोदधिफेनशंख-
सिंधूत्थगैरिकशिलामरिचैः समांशैः ।
पिष्टैः सुमाक्षिकरसेन रसक्रियेयं
हंत्यर्मकाचतिमिरार्जुनवर्त्मरोगान् ॥

प्रवालमुक्तावैडूर्यशंखस्फाटिकचंदनम् ॥
सुवर्णरजतक्षौद्रमंजनं शुक्तिकापहम् ॥
अर्जुनेः शर्करामस्तुक्षौद्रैश्चाश्च्योतनं हितम् ।
शंखः क्षौद्रेण संयुक्तः कतकं सैन्धवेन वा ॥
सितयार्णवफेनो वा पृथगंजनमर्जुने ॥

पथ्याक्षधात्रीवलमध्यवीजैस्त्रिव्येकभागैर्विदधीत वर्तिम् ।
तया जयेद्वासृगतिप्रवृद्धमक्ष्णोर्हरेत्कष्टमपि प्रकोपम् ॥

शिलारसांजनव्योपगोपित्तैश्चक्षुरंजनम् ।
हरितालवचादारु सुरसारसपेपितम् ।
अभयारसपिष्टं वा तगरं पिल्लनाशनम् ॥

मजिष्ठामधुकोत्पलोदधिकफत्वक्शोध्यगोरोचना-
मांसीचंदनशंखपत्रगिरिमृत्तालीशपुष्पांजनैः ।
सर्वैरेव समं समांजनमिदं शस्त सदा चक्षुषोः
कंडूदाहमलाश्रुशोणितरुजापिल्लार्मशुक्रापहम् ॥

इति चूर्णांजनम् ।

तुत्थकस्य फलं श्वेतमरिचानि च विंशतिः ।
त्रिंशद्भिः कांजिकपलैः पिष्ट्वा ताम्रे निधापयेत् ॥

अंजनं श्वेतमरिचं पिप्पली मधुयष्टिका ।
विभीतकस्य मध्यं तु शंखनाभिर्मनःशिला ॥
एतानि समभागानि छागक्षीरेण पेषयेत् ।
छायाशुष्कां कृतां वर्तिं नेत्ररोगेषु योजयेत् ।
अर्बुदं पटलं काचं तिमिरं रक्तराजिकम् ।
अधिमांसं वलं चैव यच्च रात्रौ न दृश्यते ॥
वर्तिश्चन्द्रप्रभा नाम रात्र्यंधमपि नाशयेत् ।
इति चन्द्रप्रभावर्तिः ।
पादगैरिककर्पूरयष्टीनीलोत्पलांजनम् ।
नागकेसरसंयुक्तमशेषतिमिरांतकृत् ।
त्रिफलाभृंगमहौषधमध्वाज्यच्छागपयसि गोमूत्रे ।
नागं सप्त निषिक्तं करोति गरुडोपमं चक्षुः ॥
कणा छागयकृन्मध्ये सत्वाभद्रकपेषिता ।
अचिराद्धंति नक्तांध्यं तद्वत्सक्षौद्रदूषणम् ॥
त्रिफलाक्वाथकल्काभ्यां सपयस्कं घृतं शृतम् ।
तिमिराण्यचिराद्धन्यात्पीतमेतन्निशामुखे ॥
इति त्रिफलाद्यं घृतम् ।
पिप्पलीत्रिफलाद्राक्षालोहचूर्णं ससैंधवम् ।
भृंगराजरसे घृष्टं गुटिकांजनमिष्यते ॥
अर्मं सतिमिरं काचं कंडू शुक्रं तथार्बुदम् ।
अनेकान्नेत्ररोगांश्च हन्यान्निरवशेषतः ॥
गैरिकं सैंधवं पथ्या पलाशतरुशोणितम् ।

क्रमवृद्धमिदं चूर्णं शुक्रामादिविलोपनम् ॥
पुष्पाक्षतार्क्षजसितादधिफेनशङ्ख-
सिंधूत्थगैरिकशिलामरिचैः समांशैः ।
पिष्टैः सुमाक्षिकरसेन रसक्रियेयं
हन्त्यर्मकाचतिमिरार्जुनवर्त्मरोगान् ॥
प्रवालमुक्तावैडूर्यशंखस्फाटिकचंदनम् ॥
सुवर्णरजतक्षौद्रमंजनं शुक्तिकापहम् ॥
अर्जुने शर्करामस्तुक्षौद्रैश्चाश्च्योतनं हितम् ।
शंखः क्षौद्रेण संयुक्तः कतकं सैन्धवेन वा ॥
सितयार्णवफेनो वा पृथगंजनमर्जुने ॥
पथ्याक्षधात्रीवलमध्यबीजैस्त्रिद्व्येकभागैर्विदधीत वर्तिम् ।
तया जयेन्नासृगतिप्रवृद्धमक्ष्णोर्हरेत्कष्टमपि प्रकोपम् ॥
शिलारसांजनव्योषगोपित्तैश्चक्षुरंजनम् ।
हरितालवचादारु सुरसारसपेषितम् ।
अभयारसपिष्टं वा तगरं पिल्लनाशनम् ॥
मंजिष्ठामधुकोत्पलोदधिकफत्वक्कुशोध्यगोरोचना-
मांसीचंदनशंखपत्रगिरिमृत्तालीशपुष्पांजनैः ।
सर्वैरेव समं समांजनमिदं शस्तं सदा चक्षुषोः
कंडूदाहमलाश्रुशोणितरुजापिल्लार्मशुक्रापहम् ॥
इति चूर्णांजनम् ।
तुत्थकस्य फलं श्वेतमरिचानि च विंशतिः ।
त्रिंशद्भिः कांजिकपलैः पिष्ट्वा ताम्रे निधापयेत् ॥

पिल्लान्यपिल्लीकुरुते बहुवर्षस्थितान्यपि ।
तत्सेकेनोपदेहांस्तु कण्डूशोफास्तु नाशयेत् ॥
प्रवृद्धांतर्मुखं रोमासहिष्णोरुद्धरेच्छनैः ।
संदंशेनोद्धरेद्दृष्ट्वा पक्ष्मरोमाणि बुद्धिमान् ॥
रक्षन्नक्षि दहेत्पक्ष्म तप्तहेमशलाकया ।
पक्ष्मकोशे पुनर्नैव कदाचिद्रोमसंभवः ॥
मधुयष्ट्या ययाश्वगंधस्तथा मुद्रा शतावरी ।
चक्षुष्यवर्गसंक्षेप कथितोऽय भिषग्वरैः ॥
जीवंतिशाक सुनिषण्णकं च सतंडुलीयं वरवास्तुकं च ।
चिल्ली तथा मूलकपोतिकाचदृष्टेर्हिताशाकुनजांगलं च ॥
पटोलकर्कोटककारवेल्लवार्त्ताकतर्कारिकरीरजानि ।
शाकानिशिग्रार्तगलानिचैनहितानि दृष्टेर्घृतसाधितानि ॥
कट्वम्लगुरुतीक्ष्णोष्णमाषपिण्याकमैथुनम् ।
मद्य पलरनिष्पावमत्स्याम्लशाक विरूढकम् ॥
विदाहीन्यन्नपानानि नेत्ररोगी विवर्जयेत् ।
इति श्रीतोमर० वीरसिंहावलोके नेत्ररोगाधिकारः ॥

अथ क्रमप्राप्तस्य शिरोरोगस्य ज्योतिश्शास्त्राभिप्रायेण हेतुमाह तत्प्रतीकार च । यदुक्तं जातके ॥

शिरसो रुग्गलरोगः क्षिप्रं सहसा ज्वरं शूलम् ।
तपनदशायां शुक्रे देशत्यागो भवेदरिभिः ॥

अंतर्दशादशायां सितस्य शशिनो यदा भवति तदा शिरोरोगः । बुधस्यांतर्गते कुजेपि शिरोरोगः ॥ उक्त च

मस्तकशूलविरोधैर्नानाक्लेशैश्च युज्यते जंतुः ।
इंदुसुतस्य दशायां भौमस्यांतर्दशा यदा भवति॥

अथ तपनदशायां शुक्रे वर्तमाने शिरोरोगदर्शने शुक्रप्रीतये पूर्वोक्तमेव कुर्यात् । शुक्रदशान्तर्वर्तमाने चन्द्रे चन्द्रप्रीतयेपि पूर्वोक्तं कार्यम् । बुधदशायामपि प्राप्ते मंगले शिरोरोगप्रतीकाराय भौमप्रीतये पूर्वोक्तं कुर्यात् ।

अथ शिरोरोगस्य कर्मविपाके हेतुमाह तत्प्रतीकारं च । गुरूपरोधी शिरोरोगी भवति । वैद्यशास्त्रोक्तान्यौषधानि दद्यात् । अपरं च ब्रह्मचारी पूर्वजन्मनि प्रायोपवेशनेन नैष्ठिकादिव्रतत्यागी शिरोरोगी भवति । पंचाशद्ब्राह्मणान् भोजयेत् । उद्यन्नद्येत्यृच जपेत् । कुष्मांडीभिर्जुहुयात् । अपरं च ब्रह्मचारी पूर्वजन्मनि भिन्नकांस्यपात्रे भुक्त्वा एकदेशशिरोरोगी भवति । तदा अक्षिभ्यामिति सूक्तमष्टोत्तरशतं जपेत् । चरुघृताभ्यां जुहुयात् । वैद्यशास्त्रोक्तान्यौषधानि दद्यात् ।

ब्रह्मचारी यदाश्नीयाद्भिन्नपात्रे विशेषतः ।
एकदेशशिरोरोगी भवतीत्याह नारदः ॥

इति नारदीयपुराणवचनात् । द्वादशब्राह्मणान्भोजयेत् ।

इत्यर्द्धशीर्षरोगः ।

ब्राह्मणोर्द्धशिरोरोगी वायुपुराणात्—

उपवीतं हिरण्येन कार्यं तु पलसंख्यया ।
तदर्धेन तदर्धेन यथाविभवतोऽपि वा ॥

उत्तरीय च विमलं तदन्यत्संख्यया कृतम् ।
ब्राह्मणायाग्रगण्याय श्रोत्रियायोपपादयेत् ॥
मंत्रेणानेन विधिवत्पूजितायांगुलीयकैः ।
धाता विधाता जगतां परमात्मा चतुर्भुजः ॥
विनाशयतु मे क्षिप्रं रोगवेगं शिरोगतम् ॥
इति शिरोरोगहरयज्ञोपवीतदानविधिः ॥

अथ क्रमप्राप्तस्य शिरोरोगस्य सनिदानं चिकित्सितमाह सुश्रुतात् ।

शिरो रुजति मर्त्यानां वातपित्तैः कफैस्त्रिभिः ॥
सांनिपातेन रक्तेन क्षयेण कृमिभिस्तथा ॥
सूर्यावर्तानंतवातार्धावभेदकशंखकैः ॥
एकादशविधस्यास्य लक्षणं संप्रवक्ष्यते ।
यस्या निमित्तं शिरसो रुजश्च भवतितीव्रा निशि चातिमात्रम्
बंधोपतापैश्च भवेद्विशेष शिरोऽभितापस्तु समीरणेन ॥
यस्योष्णमंगारचितं यथैव भवेच्छिरो धूमवती च नासा ।
शीतेन रात्रौ च भवेद्विशेषः शिरोऽभिताप स तु पित्तकोपात् ॥
यथास्वं भावयेदन्यान्दोषैस्तैस्तैः प्रकोपनैः ।
वातिके शिरसो रोगे स्नेहस्वेदान्समाचरेत् ॥
यवान्नसुपनाहांश्च कुर्याद्वातामयापहान् ।
कुष्ठमेरंडमूलं च लेपः कांजिकपेषितः ॥
शिरोर्ति नाशयत्याशु पुष्पं वा मुचुकुंदजम् ।
पंचमूलीशृतं क्षीरं नस्यं दद्याच्छिरोगदे ॥

आशिरो व्यायतं चर्म षोडशांगुलमुच्छ्रितम्।
तेनावेष्ट्य शिरोधस्तान्माषकल्केन लेपयेत्।
निश्चलस्योपविष्टस्य तैलैरुष्णैः प्रपूरयेत्।
धारयेदारुजः शांति यामं यामार्धमेव वा॥
शिरोबस्तिर्जयत्येषा शिरोरोगं मरुद्भवम्।
हनुमन्याक्षिकर्णार्तिमर्दितं मूर्द्धकंपनम्।
तैलेनापूर्य मूर्धानं पञ्चमात्राशतानि च।
तिष्ठेच्छ्लेष्मणि पित्तेऽष्टौ दश वातशिरोगदी॥
एष एव विधिः कार्यस्तथा कर्णाक्षिपूरणे।
पित्तात्मके शिरोरोगे स्निग्धं सम्यग्विरेचनम्॥
मृद्वीकात्रिफलेक्षूणां रसैः क्षीरैर्घृतैरपि।
शर्कराक्षीरसलिलैः शिरश्च परिषेचयेत्॥
सर्पिषः शतधौतस्य शिरसा धारणं तथा।
निमज्जनं च शिरसः शीतलेऽम्भसि शस्यते॥
कुमुदोत्पलपद्मानां शीतानां चंदनांबुभिः।
स्पर्शाः सुखाश्च पवनाः सेव्या दाहार्तिशांतये॥
चंदनोशीरयष्ट्याह्वबलाव्याघ्रनखोत्पलैः।
यष्ट्याह्वचंदनानंताक्षीरसिद्धं घृतं हितम्॥
नावनं शर्कराद्राक्षामधुकैर्वापि पित्तजे।
रक्तजे पित्तवत्सर्वं भोजनालेपसेचनम्॥
शीतोष्णयोश्च विन्यासो विशेषो रक्तमोक्षणे।
कफजे लंघनं स्वेदो रूक्षोष्णैः पाचनात्मकैः॥

तीक्ष्णावपीडधूमाश्च तीक्ष्णाश्च कवला हिता ।
अच्छ च पाययेत्सर्पि· पुराण स्वेदयेन्नरः ॥
धूमकसारेण शिर· स्विन्न चास्य विरेचयेत् ।
कुष्ठाब्जशुंठीमधुकशताह्लोत्पलपाटलैः ॥
जलपिष्टैः शिरोलेपः सद्य' शूलनिवारणः ।
देवदारु नत कुष्ट नलद विश्वभेपजम् ॥
लेप· काजिकसापिष्टस्तैलयुक्तः शिरोऽर्तिजित् ।
सनिपातभवे कार्या दोपत्रयहिताः क्रिया' ॥
सर्पिष्पानं विशेपेण पुराण वा दिशति हि ।
त्रिकटुकपुष्करबीजं करंजनीराह्वतुरगगधानाम् ।
क्वाथ' शिरोऽर्तिजालं नासापीतो निवारयति ॥
नागरकल्कविमिश्रं क्षीरं नस्येन योजितं पुंसाम् ।
नानादोपोद्भूतां शिरोरुजं हंति तीव्रतराम् ॥
सूर्यावर्ते विधातव्य नस्यकर्मादिभेपजम् ।
पाययेत्सगुडं सर्पिर्घृतपूराश्च भक्षयेत् ॥
सूर्यावर्ते शिरावेधो नावन क्षीरसर्पिपा ।
हितं क्षीरघृताभ्यां च नस्यानि च विरेचनम् ।
क्षीरपिष्टैस्तिलै· स्वेदो जीवनीयैश्च शस्यते ॥
सशर्करं कुंकुममाज्यभृष्टं नस्यं विधेयं पवनासृगुत्थिते ।
भ्रूशंखकर्णाक्षिशिरोर्द्धशूले दिनाभिवृद्धिप्रभवे च रोगे ॥
जागलानि च मांसानि कारयेदुपनाहनम् ।
तेनाशु शाम्यते व्याधि सूर्यावर्त· सुदारुणः ॥

धान्यार्कपथ्याक्षनिशागुडूचभूनिंबानिंबक्वथितः षडंगः ।
भ्रशंखकर्णाक्षिशिरोर्द्धशूले सूर्योदये शंखकमूर्ध्नभेदे ॥
महौपधं ससुरसं वचापिप्पलिभिः कृतः ।
अवपीडः प्रदातव्यः सूर्यावर्तनिषूदनः ॥
एप एव विधिः कार्यः कृत्स्नश्चार्धावभेदके ।
दार्वीहरिद्रामंजिष्ठासनिंबोशीरपद्मकम् ॥
एतदालेपनं कार्यं शंखकस्य प्रशांतये ।
एष एव प्रयोक्तव्यः शिरोरोगे क्षयात्मके ।
पिबेत्सशर्करं क्षीरं क्षीरं वा नारिकेलजम् ॥
शिरावेधश्च कर्तव्योऽनंतवातप्रशांतये ।

एरंडमूलं तगरं शताह्वा जीवतिरास्नासहसैंधवेन ।
भृंग विडंगं मधुयष्टिका च विश्वौपधं कृष्णतिलस्य तैलम्॥
अजापयस्तैलविमिश्रितं च चतुर्गुणे भृंगरसे विपक्वम् ।
षड्बिंदवो नासिकया गृहीता शीघ्रं निहन्युः शिरसो विकारान् ॥ च्युतांश्च केशांश्चलितांश्च दंतान्दृढमूलान् सुदृढकिरोति ।

इति श्रीनेमर० वीरसिंहावलोके शिरोरोगाधिकारः ।

---

अथ क्रमप्राप्तस्य प्रदररोगस्य ज्योतिश्शास्त्राभिप्रायेण हेतुमाह तत्प्रतीकारं च । स्त्रीणां विवाहकालेऽष्टमस्थानस्थिते भौमे रक्तस्रावो भवति त्र्यहादूर्ध्वमपि न निवर्त्तते इति महादेवभाष्ये । तद्रोगप्रतीकाराय पूर्वोक्तमेव भौमप्रीतये विधानं कुर्यात् ।

अथ कर्मविपाके प्रदररोगस्य हेतुमाह । अथ गर्भस्रावे बोधायनः-

स्रवद्गर्भा भवेत्सा तु बालकं हंति या पुरा ॥

वायुपुराणे-

यज्ञोपवीतं कुर्वीत कांचनं तु स्वशक्तितः ॥
अत्यंतवर्णयुक्तं तद्राजंतं चोत्तरीयकम् ॥
पलार्द्धेन तदर्द्धेन तदर्द्धार्द्धेन वा पुनः ।
ग्रंथिप्रदेशे देयं तु मौक्तिकं वज्रमेव वा ॥
प्रक्षाल्य पंचगव्येन गायत्र्या ताम्रभाजने ।
यामप्रमाणं तस्मिंश्च निक्षिपेद्दधिमध्यतः ॥
आज्यस्योपरि संस्थाप्य चोपवीतं सुपूजितम् ॥
गंधपुष्पाक्षतैर्धूपैर्नैवेद्यैश्च स्वशक्तितः ।
ततो ब्राह्मणमाहूय होमं तत्र च कारयेत् ॥
तिलैराज्येन मधुना मिश्रैरष्टोत्तरं शतम् ।
तस्मै हुतवते देयं वस्त्राद्यैः पूजिताय तु ॥
मंत्रेणानेन विधिवत्प्राङ्मुखाय समंत्रकम् ।
उपवीतं परमिदं ब्रह्मणा विहितं पुरा ॥
भवते कांचनं दत्त्वा गर्भं संधारये ह्यहम् ।

इति दानमन्त्रः ।

तथान्यदपि ब्राह्मणेभ्यस्तस्मिन्काले दद्यात् ।
अनुव्रज्य तथाचार्यं प्रणिपत्य क्षमापयेत् ॥
गर्भस्रावभवाद्दोषादेवं कृत्वा विमुच्यते ।

इति गर्भस्रावे यज्ञोपवीतदानविधिः ।

अथ पूर्वजन्मनि पित्रा मात्रा गुरुणा वा सार्धं स्पर्धते सा प्रदररोगिणी भवति । सा कृच्छ्रातिकृच्छ्रं कुर्याच्चांद्रायणानि च कुर्यात् । तद्विष्णोरिति मंत्रं जपेत् । अयुतत्रयम् आज्यसहितं मधु मंडकान्नं दद्यात् । विप्रपादक्षालितोदकेन संमार्जयेत् । विप्रोच्छिष्टेनानुलिंपेत । या इत्थमाचरति तस्या अवश्य चिकित्सायां रोगो नश्यति । 'यथोक्ते तु व्रते चीर्णे यथोक्तफलभाग्भवेत् ।' इति पितामहसंहितावचनात्पुरुषस्यापि द्रष्टव्यम् ॥

इति प्रदरव्याधिहरोविधिः ।

वृश्चिकराशिस्थे शुक्रे स्त्रीणां योनिदोषो जायते स्त्रींपुंसयोर्जन्मफलतुल्यत्वात् । शुक्रजनितोपशांतये पूर्वोक्तमेव कुर्यात् ।

अथ स्त्रीणां योनिदोषे कर्मविपाके हेतुमाह तत्प्रतीकारं च ॥

मृते भर्तरि या नारी ब्रह्मचर्यविघातिनी ।
सा भवेद्व्रणदोषेण सभोगं क्षमते न तु ॥
संभोगानंतरं तीव्रवेदना पुरुषस्य तु ।
सा नीलवृषभान्दद्यान्मधुसर्पिस्तिलानपि ।

दद्यात् ।

इति योनिदोषहरोविधिः ।

अथ क्रमप्राप्तस्य प्रदररोगस्य सनिदानं चिकित्सितमाह रुग्विनिश्चयात् ।

विरुद्धमद्याद्यशनादजीर्णाद्गर्भप्रपातादतिमैथुनाच्च ।
यानाध्वशोकादतिकर्शनाच्चभाराभिघाताच्छयनाद्दिवाच
असृग्दरं भवेत्सर्वं सांगमर्दं सवेदनम् ।
तस्यातिवृद्धौ दौर्बल्यं श्रमो मूर्च्छा मदस्तृषा ॥
दाहः प्रलाप पांडुत्व तंद्रा रोगाश्च वातजाः ।
त श्लेष्मपित्तानिलसंनीपातैश्चतु प्रकार प्रदरं वदंति ।
वृंदसंग्रहात् ।
दध्ना सौवर्चलाजाजी मधुकं नीलमुत्पलम् ।
पिबेत्क्षौद्रयुतं नारी वातासृग्दरपीडिता ॥
पिबेदैणेयकं रक्त शर्करामधुसंयुतम् ।
वासकस्वरसोपेत गुडूच्या रसमेव वा ॥
रोहितकान्मूलकल्कं पांडुरेऽसृग्दरे हितम् ।
जलेनामलकाद्बीजकल्कं वा ससितामधु ॥
धातक्याश्चामलक्या वा चाक्षमात्रं मधुद्रवम् ।
काकजानुकमूलं वा मूल कार्पासमेव वा ॥
पाडुप्रदरशात्यर्थं पिबेत्तडुलवारिणा ।
अशोकवल्कलक्वाथ· शृतं दुग्धं सुशीतलम् ॥
यथाबल पिबेत्प्रातस्तीव्रासृग्दरनाशनः ।
दार्वीरसांजनकिराततृषाव्दबिल्व-
भल्लातकैरपि कृतो मधुना कषाय· ।
पीतो जयत्यतिबल प्रदरं सशूलं
पीतासितारुणविलोहितनीलशुक्लम् ॥

रसांजन तंडुलकस्यमूलं क्षौद्रान्वित तंडुलतोयपीतम् ।
असृग्दरं सर्वभवं निहाति श्वास च भार्ङ्गी सह नागरेण ॥

कुशमूल समुद्धृत्य पेपयेत्तंडुलांबुना ।
एतत्पीत्वा त्र्यहान्नारी प्रदरात्परिमुच्यते ॥
क्षौद्रयुक्तं फलरसमौडुंबरभव पिबेत् ॥
असृग्दरविनाशाय सशर्करपयोऽन्नभुक् ॥
प्रदरं हांति बलाया मूलं दुग्धेन मधुयुतं पतिम् ।
कुशवास्यालकमूल तंडुलसलिलेन रक्ताख्यम् ॥
शमयाति मदिरापान तदुभयमपि रक्तशुक्लाख्यम् ।
तरुण्याहितसेविन्यास्तदल्पोपद्रवं भिषक् ॥
रक्तपित्तविधानेन यथावत्समुपाचरेत् ।
पाठाजंम्बाम्रयोर्मध्यं शिलाभेद रसाजनम् ॥
अवष्ठकी मोचारस समंगा पद्मकेसरम् ।
वाह्लीकातिविषे मुस्त विल्वं लोध्र सगैरिकम् ॥
कट्फलं मरिचं शुंठी मृद्वीका रक्तचदनम् ।
कट्वंगवत्सकानताधातकीमधुकार्जुनम् ॥
पुष्येणोद्धृत्य तुल्यानि सूक्ष्मचूर्णानि कारयेत् ।
तानि क्षौद्रेण सयोज्य पाययेत्तडुलांबुना ॥
अर्शस्सु चातिसारेषु रक्तं यश्चोपविश्यते ।
दोषा क्रामि(जतु )कृता ये च बालानां तांश्च नाशयेत् ॥
योनिदोषं रजोदोषं श्वेतपीतं सनीलकम् ।

स्त्रीणां श्यावारुणं यच्च तत्प्रसह्य निवारयेत् ॥
चूर्णं पुष्पानुगं नाम हितमात्रेयपूजितम् ।
इति पुष्पानुग चूर्णम् ।
मुद्गमाषस्य निर्यूहो रास्नाचित्रकनागरैः ।
सिद्धं सपिप्पलीबिल्वैः सर्पिः श्रेष्ठमसृग्दरे ॥
इति मुद्गाख्यं घृतम् ।
इति श्रीतोमर० वीरसिंहावलोके असृग्दराधिकारः ।

अथ क्रमप्राप्तस्य योनिव्यापदः सनिदानं चिकित्सितमाह रुग्विनिश्चयात् ।

विंशतिर्व्यापदो योनेर्निर्दिष्टा रोगसंग्रहे ।
मिथ्याचारेण ताः स्त्रीणा प्रदुष्टेनार्तवेन च ॥
जायंते बीजदोषाच्च दैवाच्च शृणु ताः पृथक् ।
सफेनिलमुदावृत्ता रज. कृच्छ्रेण मुंचति ॥
वंध्या नष्टार्तवा ज्ञेया विप्लुता नित्यवेदना ।
परिप्लुताया भवति ग्राम्यधर्मेण रुग्भृशम् ॥
वातूला कर्कशा स्तब्धा शूलतस्तोदपीडिता ।
चतसृष्वपि चाद्यासु भवत्यनिलवेदनाः ॥
योनिव्यापत्सु भूयिष्ठं शस्यते कर्म वातजित् ।
वस्त्यंगपरिषेकश्च प्रलेप पिचुधारणम् ॥
वचोपकुंचिकाजाजीकृष्णावृषकसैंधवैः ।
अजमोदायवक्षारचित्रकं शर्करान्वितम् ॥

पिष्ट्वा प्रसन्नयालोड्य खादेत्तद्भृतभर्जितम् ।
योनिपार्श्वार्तिहृद्रोगगुल्मार्शोविनिवृत्तये ॥
रास्नाश्वदंष्ट्रावृपकैः शृतं शूलहरं पयः ।
गुडूचीत्रिफलादंतीक्वाथश्च परिषेचनम् ॥
नतवार्ताकिनीकुष्ठसैंधवामरदारुभिः ।
तैलात्प्रसाधितो धार्यः पिचुर्योनौ रुजापहः ॥
पित्तलानां तु योनीनां सेकाभ्यंगपिचुक्रियाः ।
शीताः पित्तहराः कार्याः स्नेहनार्थं घृतानि च॥
योन्या बलासदुष्टायाः सर्वं रूक्षाम्लमौषधम् ।
पिप्पल्या मरिचैर्माषैः शताह्वाकुष्ठसैंधवैः ॥
वर्तिस्तुल्या प्रदेशिन्या धार्या योनिविशोधिनी ।
पुष्योद्धृतं लक्ष्मणाया मूलं पिष्टं च कन्यया ॥
ऋतवते घृतदुग्धाभ्यां पीत्वाप्नोत्यबला सुतम् ।
मंजिष्ठा मधुकं कुष्ठं त्रिफला शर्करा बला ॥
मेदा वयस्या काकोलीमूलं चैवाश्वगंधजम् ।
अजमोदा हरिद्रे द्वे हिंगु तिक्तकरोहिणी ॥
उत्पलं कुमुदं द्राक्षाकाकोल्यौ चंदनद्वयम् ।
तथैव लक्ष्मणामूलं क्षिपेदत्र चिकित्सकः ।
एतेषां कार्षिकैर्भागैर्घृतप्रस्थं विपाचयेत् ॥
शतावरीरसं क्षीरं घृतं देयं चतुर्गुणम् ।
सर्पिरेतन्नर पीत्वा स्त्रीषु नित्यं वृषायते ॥
पुत्राञ्जनयते नारी मेधाढ्यान्प्रियदर्शनान् ।

या चैवास्थिरगर्भा स्याद्या वै जनयते मृतम् ॥
अल्पायुषं वा जनयेद्या च कन्यां प्रसूयते ।
योनिदोषे रजोदोषे परिस्रावे च शस्यते ॥
प्रजावर्धनमायुष्यं सर्वग्रहनिवारणम् ॥
नाम्ना फलघृतं ह्येतदश्विभ्यां परिकीर्तितम् ॥

इति फलघृतम् ॥

इति श्रीवीरसिंहावलोके ज्योतिश्शास्त्रोक्तकर्मविपाकायुर्वेदोक्तप्रयोगे योनिव्यापचिकित्सा ।

अथ ज्योतिश्शास्त्राभिप्रायेण गर्भिणीनामाप्रसवकालं गर्भरक्षाप्रकारमाह ॥

कलिलघनावयवास्थित्वग्रोमस्मृतिसमुद्भवाः क्रमशः ।
मासेषु शुक्रकुजजीवसूर्यचन्द्रार्किसौम्यानाम् ।
अशनोद्वेगप्रसवाः परतो लग्नेशचंद्रसूर्याणाम् ।
कलुषे पीडा पतनं निपीडितेनिर्मले पुष्टिः ॥

तत्तन्माससंबंधिकलुषनिपीडितग्रहजनितगर्भबाधोपशांतये माससंख्याधिपग्रहाणां जपहोमपूजादिकं कारयेत् तेन गर्भवेदनोपशाम्यति ।

अथ कर्मविपाकाभिप्रायेण गर्भिण्याः प्रतिमासं गर्भरक्षाप्रकारमाह । प्रथमे मासे गर्भिण्या गर्भरक्षामुद्दिश्य ब्रह्मणे बलिं दद्यात् । पायसघृतश्वेतवस्त्रचंदनच्छत्रांगुलीयककनकरत्नगर्भगंधपुष्पधूपदीपहिरण्यसहितपूर्ण-

कुंभेन वलिं क्षिपेत्। शुद्धात्मा बलिहर्ता। तस्मै दक्षिणां च दद्यात्। अनेन मंत्रेण—

एह्येहि भगवन्ब्रह्मन्प्रजाकर्तः प्रजापते।
प्रगृह्णीष्व बलिं चेमं सापत्यां रक्ष गर्भिणीम्॥

द्वितीयमासे गर्भरक्षायै अश्विभ्या बलि दद्यात्। पायसदध्यन्नलाजातिलपिण्याकवस्त्रहिरण्यजलपूर्णकुंभादिभिरलंकृत्याश्विभ्यां बलि दद्यात्। अनेन मन्त्रेण—

अश्विनौ देवदेवेशौ प्रगृह्णीतं बलिं त्विमम्।
सापत्यां गर्भिणीं चेमां रक्षत पूजयानया।

क्षीरान्नलाजश्वेतध्वजहिरण्यवस्त्रगंधादिभिरेकादशरुद्रेभ्यो जलाशये तृतीयमासगर्भरक्षायै वलि दद्यात् अनेन मंत्रेण—

रुद्राश्चैकादश प्रोक्ता प्रगृह्णन्तु बलिं त्विमम्॥
युष्माकं प्रीतये वृत्तं नित्यं रक्षत गर्भिणीम्॥

अथ चतुर्थमासि गर्भरक्षायै रक्तान्नध्वजगंधपुष्पवस्त्रहिरण्यादिभिः पूर्ववत् द्वादशादित्येभ्यो बलि दद्यात्।

आदित्या द्वादश प्रोक्ताः प्रगृह्णीध्वं बलि त्विमम्।
युष्माकं तेजसां वृद्ध्या नित्यं रक्षत गर्भिणीम्॥

अथ पंचमे मासे पक्वापक्वमांसपक्वान्नद्राक्षाफलमाध्वीपैष्टीसुराशर्करामधुमधुकेक्षुतिलपिष्टधूपलाजाहिरण्यादिभिः सहकारमूले गर्भरक्षायै गोमयेन विनायकं कृत्वा वस्त्रयुग्मादिना संवेष्ट्य संपूज्यानेन मन्त्रेण बलि दद्यात्।

विनायक गणाध्यक्ष शिवपुत्र महाबल ।
प्रगृह्णीष्व बलिं चेमं सापत्यां रक्ष गर्भिणीम् ॥

अथ षष्ठे मासे पायसघृतशर्करालाजाहरिद्रान्विशिष्टं पूर्ववदनेन मंत्रेण प्रभातसमये नदीतीरे गर्भरक्षार्थे स्कंदाय बलिं दद्यात् । अनेन मंत्रेण-

स्कंद षण्मुख देवेश पुत्रप्रीतिविवर्धन ।
प्रगृह्णीष्व बलिं चेमं सापत्यां रक्ष गर्भिणीम् ॥

अथ सप्तमे मासि पायसलाजाशर्कराघृतसहित हरिद्राघ्नजसर्वालंकारभूषितं बलिं रक्तवस्त्रद्वयवेष्टितशरीरो नदीतीरे अष्टवसुभ्यो दद्यात्-

प्रभास प्रभव· श्याम· प्रत्यूषो मारुतोनलः ।
ध्रुवो धराधरश्चैव वसवोऽष्टौ प्रकीर्तिताः ॥
प्रगृह्णीध्वं बालं चेमं नित्य रक्षंतु गर्भिणाम् ।

अष्टममासि गर्भरक्षार्थे दुर्गाय बलिं दद्यात् पूर्वोक्तेन विधानेन मातृकाभ्यो वा दध्यन्नमुद्गकृसरान्नसाज्यपक्कापक्कमत्स्यमांससुरेक्षुरसगंधकृष्णरक्तकुक्कुटगंधपुष्पधूपदीपहिरण्यसहितपूर्णकुंभेन नीलोत्पलसहितेन स्वय रक्तवस्त्रेणालंकृत्य दक्षिणस्यां दिशि बलिं क्षिपेत् ।

पितृदेवि पितृज्येष्ठे बहुपुत्रि महाबले ।
भूतश्रेष्ठे दिशावासे निवृत्ते शौनकप्रिये ॥
प्रगृह्णीष्व बलिं चेमं सापत्यां रक्ष गर्भिणीम् ।

नवमे मासे गर्भरक्षार्थे दध्यन्नमुद्गकृसरान्नविशिष्टं पूर्ववदनेन मंत्रेण प्रभातसमये बलिं दद्यात् ।

रक्षरक्ष महादेव भक्तानुग्रहकारक ।
पक्षिवाहन गोविंद सापत्यां रक्ष गर्भिणीम् ॥

अथ दशमे मासे पायसगुडापूपलाजापिष्टसक्तुभिः श्यामध्वजकृष्णगंधपुष्पधूपदीपहिरण्यसहितपूर्णकुंभेननीलोत्पलसहितेन पूर्वोक्तविधिना बलिहर्ता अलंकृत्य वासुदेवालये अभ्यर्च्य वृक्षमूले तानि क्षिपेत् अनेन मंत्रेण—

त्रिविक्रम क्रमाक्रांतभूरिभूत जगत्रय ।
गोवर्द्धनमहाशैलसमुद्धरणगर्वित ॥
हिरण्यकशिपोवक्षोविदारणनखांकुर ।
विक्रमेण सुरज्येष्ठ रक्तांगेन महोज्ज्वल ॥
बलदेवानुज ज्येष्ठ कंसचाणूरकंसन ।
गरुडध्वज दैत्यारेऽनंताच्युत चतुर्भुज ॥
विधुंतुदप्राणहर आदित्यकृतचक्रभृत् ।
भीषणाकारभुजगशयानेंदीवरच्छवे ॥
पांचजन्यप्रभाव्यक्तकौस्तुभोद्योतभास्कर ।
वाराहवपुषा पूर्वं सम्यग्धृतवसुंधर ॥
शार्ङ्गज्याघातरुचिनत्किणांकितमहाभुज ।
अनाद्यंतासुररिपो धीर पद्मालयालय ॥
प्रगृह्णीष्व बलिं चमं सापत्यां रक्ष गर्भिणीम् ।

इति गर्भरक्षाविधिः ।

अथ स्त्रीणां स्तनक्षीराभावे विवाहकाले चतुर्थस्थानस्थितशनिजनितपयोहीनत्वदोषोपशांतये प्रागुक्तं शनिविधानं पूजादिकं कुर्यात् ॥

अथ पयोहीनत्वे कर्मविपाके हेतुमाह । या पूर्वजन्मनि क्षीरं मुष्णाति तस्या जन्मांतरे स्तनौ न क्षरतः सा विप्रेभ्यः क्षीरान्नं दद्यात्। विप्रपादोदकेन स्तनावपामार्गस्तोत्रेण मार्जयेत् । विप्रोच्छिष्टेन स्तनावनुलेपयेत् । सुरामांसमधुघृतानां गंधपुष्पादिभिर्भूतेभ्यो बलिं दद्यात् । मधुना नवनीतपिण्डमालोड्य वितुन्नकेनसहभूतभव्यशक्ति भेदेन भूतानां पंचकं त्विदमिति भूतानि परिकल्पयेत् ।

क्षीरं मुष्णाति या नारी पूर्वजन्मनि सुव्रता ।
जन्मांतरे तु तस्या वै क्षीरं न क्षरतः स्तनौ ॥
क्षीरैस्सभोजयेद्विप्रान्साज्यं मधुकसंयुतम् ।
तेनैव वा चानुलिप्येदुच्छिष्टान्नेन भक्तितः ॥
विप्रपादोदकैश्चापि क्षालयेत्कुचमंडलम् ॥

इति वीरसिंहावलोके गर्भरक्षा पयोहीनत्वाधिकारः ।

अथ स्त्रीणा स्तनस्फोटरोगकर्मविपाके हेतुमाह । भर्तारमवमान्य वर्तते अन्यपतिं मनसि धत्ते तमेवानुस्मरति जन्मांतरे तस्याः स्तनयोः स्फोटा जायंते भगे च शोणितं स्रवति तद्रोगोपशांतये तामग्निवर्णामिति सूक्तं जपेत्।धने सति निष्कद्वादशकं दद्यात् शक्त्यपेक्षया वा ।

अथवा धान्यतिललवणानि दद्यात् । हरिद्रां च दद्यात् उमामहेश्वरप्रीतये पूजां च कुर्यात् । इति स्तनस्फोटे ।

अथ ज्योतिश्शास्त्राभिप्रायेण मूढगर्भत्वहेतुमाह तत्प्रतीकारं च । लग्ने शनैश्चरांशे शनैश्चरे द्यूनगे यदि निषेकः वर्षत्रयेण सूतिर्द्वादशभिः स्याच्छनिनैवम् ॥ लग्नस्वांशसप्तमभवनस्थितशनिचंद्रजनितबाधोपशमनाय पृथक् पूजादिकं कुर्यात् ।

अथ कर्मविपाकाभिप्रायेण हेतुमाह तत्प्रतीकारं च । पूर्वजन्मनि परनिक्षेपहारिणी मूढगर्भिणी भवति श्राद्धादि-पितृकर्मलोपिनी च । तदुपशांतये गां सुवर्णं च दद्यात् । पंचाशद्ब्राह्मणभोजनं च कारयेत् । पुष्करिण्यादिकं च कारयेत् । तेन प्रसूतिर्भवति ।

अथ नारीणां ज्योतिश्शास्त्राभिप्रायेण वंध्यात्वहेतुमाह । जन्मनि विवाहे वा सप्तमभवनस्थिते शनौ बुधे च वंध्या इति श्रीपतिवचनात् सप्तगे पापदृष्टे शनौ कन्यैव जरां समुपयातीति वंध्यात्वं सूचयति । तद्दोषोपशांतये बुधशनिप्रीतये पूर्वोक्तमेव क्रमेण पूजादिकं कुर्यात् ।

अथ वंध्यायाः कर्मविपाके हेतुमाह तत्प्रतीकारं च ।

चतुर्विधा तु या वंध्या भवेत्सा च वियोजनात् ।
वक्ष्ये तस्याः प्रतीकारं तत्स्वरूपं निबोध मे ॥
हिरण्येन यथाशक्त्या सवत्सां कारयेद्दृढाम् ।
धेनुं पलेन वत्सं च पादेन गुरुरब्रवीत् ॥

धेनुं रौप्यखुरां रत्नं तस्याः पुच्छे नियोजयेत् ।
घटा गले च बध्नीयात्सवत्सां प्राङ्मुखः शुचिः॥

चंदनागुरुकर्पूरैर्गंधमाल्यैः सुशोभनैः ।
उपचारैः षोडशभिर्नैवेद्य पायसं भवेत् ॥
मोदकं च तथापूपं गुड लवणमेव च ।
जीरकं च सुविस्तीर्णे शूर्पे वेणुमये दृढे ॥
धनोरेकं प्रदातव्य ब्राह्मणस्त्रीषु चैव हि ।
षडष्टौ दश वा दद्यात्तदनतरमेव च ॥
ब्राह्मणं सर्वशास्त्रज्ञं कुशल धर्मवेदिनम् ।
धेनुमत्र समुच्चार्य ततस्तं सत्कुलोद्भवम् ॥
विद्याविनयसंपन्न शात चैव यतेन्द्रियम् ॥
अलोलुपं सर्वजनप्रिय कल्मषनाशनम् ॥
आहूय भक्त्या संपूज्य वस्त्राद्यैर्गंधपुष्पकैः ।
तेनैव कारयेत्पूजां पादतो धेनुवत्सयोः ॥
होम च कारयेत्तत्र समिदाज्यचरूत्कटम् ।
सोमो धेनुरिति मंत्रं समुच्चार्य ततः पुनः ॥
प्राङ्मुखायोपविष्टाय प्रदद्यात्तामुदङ्मुखः ।
मत्रेणानेन विधिवत्पुच्छे हस्तं विधाय च ॥
धेनुर्याङ्गिरसः सत्रे विष्णोस्तु सुरभिश्च या ।
दुहिता या तथा भानोरग्नेश्च वरुणस्य च ॥
याश्च गाव प्रवर्तंते वनेषूपवनेषु च ।

प्रीणंतु ता मम सदा पुत्रपौत्रप्रदाः सुखम् ॥
प्रयच्छंतु दिवारात्रौ त्वविच्छेदं तु संततेः ।

इति दानमंत्रः ।

एवं दत्वा तु तद्दानं प्रणिपत्य विसर्जयेत् ।

इति वंध्यात्वहरः सुवर्णधेनुदानविधिः ॥

अथ योनिकंदस्य सनिदानं चिकित्सितमाह रुग्वि-निश्चयात् ।

दिवास्वप्नादतिक्रोधाद्व्यायामादतिमैथुनात् ।
क्षताच्च नखदंताद्यैर्वाताद्याः कुपिता यदा ॥
पूयशोणितसंयुक्त लकुचाकृतिसंनिभम् ।
उत्पद्यते तथा योनौ नाम्ना कन्दस्तु योनिजः ॥
मधुकं शाकबीजं च सुरस्या सुरदारु च ।
अश्मंतकः कृष्णतिलास्ताम्रवल्ली शतावरी ॥
वृक्षादनी वयस्या च तथैवोत्पलसारिवा ।
अनंता सारिवा कृष्णा पद्मं मधुकमेव च ॥
बृहतीद्वयकाश्मर्यः शृंगक्षीरित्वचो घृतम् ।
पृथक्पर्णी वचा शिग्रुः श्वदंष्टा मधुयष्टिका ॥
शृंगाटकं वृष द्राक्षा कशेरुर्मधुकं सिता ।
एतेषामौषधानां च सेवनेन गुणो भवेत् ॥

इति योनिकन्दचिकित्सा ॥

अथ क्रमं प्रयोक्तव्या गर्भस्रावे पयोयुताः ।
सक्षीरा विहिता शुंठी मधुक देवदारु च ॥
एवमाप्यायते गर्भस्तीव्रा रुक्चोपशाम्यति ।
समधुच्छागदुग्धेन कुलालकरमर्दक ॥
अवश्य स्थापयेद्गर्भ वलितं पानयोगत ॥
कुशकाशोरुबूकनां मूलं गोक्षुरकस्य च ।
श्रितं दुग्ध सितायुक्त गर्भिण्या शूलनुत्परम् ॥
कसेरुशृंगाटकजीवनीयपद्मोत्पलैरंडशतावरीभिः ।
सिद्धं पयः शर्करया विमिश्र सस्थापयेद्गर्भविदीर्णशूलम्॥
कशेरुशृगाटकपद्मकोत्पल
समुद्गपर्णीमधुक सशर्करम् ।
सशूलगर्भस्रुतिपीडितागना
पयोविमिश्र पयसान्नभुक् पिवेत् ॥
पाठासुरसासिंहास्यमयूरकुटजैः पृथक् ।
नाभिवस्तिभगालेपात्सुख नारी प्रसूयते ॥
परूपकशिफालेपः स्थिरामूलकृतोऽथवा ।
नाभिवस्तिभगाद्येषु मूढगर्भापकर्षकः ॥
मातुलुंगस्य मूलानि मधुक मधुसयुतम् ।
घृतेन सह दातव्य सुखं नारी प्रसूयते ॥
पंचमूलस्य वा क्वाथं तप्तलोहेन संगतम् ॥
सूतिकारोगनाशाय पिवेद्वा तु हितां सुराम् ।
पिप्पली पिप्पलीमूल चव्य शुंठी यवानिका ॥

जीरके द्वे हरिद्रे द्वे विडं सौवर्चलं तथा ।
एतैरेवौषधैः पिष्टैरारनालं विपाचयेत् ॥
आमवातहरं वृष्यं कफघ्नं वह्निदीपनम् ।
कांजिकं वज्रकं नाम स्त्रीणां बलविवर्धनम् ॥
सकलशूलशमन पर क्षीराभिवर्धनम् ।

इति वज्रकांजिकम् ॥

शोथं स्तनोत्थितमवेक्ष्य भिषग्विदध्या-
द्विद्रधावतिहितं बहुधा विधानम् ।
आमे विदह्यति तथैव गते च पाके
तस्याः स्तनौ सततमेव हि निगृहीतौ ॥
विशालामूललेपस्तु हंति पीडां स्तनोत्थिताम् ।

इति वीरसिंहावलोके स्त्रीरोगाधिकारः ॥

अथ ज्योतिश्शास्त्राभिप्रायेण बालकस्य रोगहेतुमाह तत्प्रतीकारं च ।

स्वोच्चे स्वकीयभवने क्षितिपालतुल्यो
लग्नेऽर्कजे भवति देशनराधिनाथः ।
शेषेषु दुःखगदपीडित एव बाल्ये
दारिद्र्यकामवशगो मलिनोऽलसश्च ॥

अपर च–

पीडितहृदयो हिबुके निर्वाहनबांधवार्थमतिसौख्यः ।
बाल्ये व्याधितदेहो नखरोमधरो भवेत्सौरिः ॥

अमुखान्वितो दरिद्रो रोगैश्चैवाभिपीडितोऽप्राज्ञः ।
जननीरहितोऽतिमृदुर्विशिष्टनिरतः सदातुरश्चापि ॥

स्वोच्चस्वांशवर्ज्य शनौ चतुर्थस्थाने वा कर्कटराशौ वा वर्तमाने बाल्ये रोगबाहुल्योपशमाय शनिप्रीतये प्रागुक्तं जपहोमादिक कुर्यात् तल्लिंगोपदर्शनात् तत्कालीनग्रहदशा विचारणीया ।

अथ कर्मविपाकप्रकारेण बालानां रोगोपशांतिमाह । गर्भस्थो निषिद्धाहारे क्रियमाणे निषिद्धाचारेण अशुभकर्मणां जन्मांतरे जन्मप्रभृत्यशौचो रोगी जायते । मातुरनुपचारकारी अशुभत्रिदोषजातरोगी जायते । एतन्नरकादिशास्त्रेऽभिहितम् । अस्य प्रायश्चित्तं कृच्छ्रातिकृच्छ्रचांद्रायण कुर्यात् । सर्वरोगोपशांत्यर्थं व्याहृतिहोम चान्नदानं च ब्रह्मांडपुराणेऽभिहितम् ।

ताडनतर्जनहासभयाद्वा निजजननीप्राकृतहितभावात् ।
स्कंदमुखा प्रमथावलिहेतोःशिशुकममगलमाशुविशति ॥

स्तब्धविलोचनशोणितगंध-
कुटिलमुखाल्परवो लुलिताक्ष ।
स्तन्यपराङ्मुखगाढविमुष्टि-
श्चकितमनाः शिशुराकुलितस्तैः ॥

तत्र पताकाविलेपनघटद्वयहमिह कुक्कुटवलिं दद्यात् ।

अथ क्रमप्राप्तस्य बालरोगस्य सनिदान चिकित्सितमाह रुग्विनिश्चयात्।

त्रिविधः कथितो बालः क्षीरान्नोभयवर्धनः।
स्वास्थ्यं ताभ्यामदुष्टाभ्यां दुष्टानां रोगसंभवः॥
धात्र्यास्तु श्लेष्मलैर्भुक्तैः श्लेष्मरुग् जायते सुतः।
वातलैः पित्तलैस्तद्वत्समधातुर्हिताशनात् ॥
अथ वृन्दसग्रहात् ।
कुष्ठं वचाभया ब्राह्मी कतक क्षौद्रसर्पिषा ।
वर्णायुःकांतिजननं लेहं बालस्य दापयेत् ॥
स्तन्याभावे पयश्छागं गव्यं वा तद्गुणं पिबेत् ।
मृत्पिंडेनाग्नितप्तेन क्षीरासिक्तेन सोष्मणा ॥
स्वेदयेदुत्थिता नाभि शोथस्तेनोपशाम्यति ॥
नाभिपाके निशालोध्रप्रियंगुमधुकैः शृतम् ।
तैलमभ्यंजने शस्तमेभिर्वाप्यवचूर्णितम् ॥
हरिद्राद्वययष्ट्याह्वसिंहीशक्रयवैः कृतम् ॥
शिशोर्ज्वरातिसारघ्नं कासश्वासवमीहरम् ॥
धातकीबिल्वधान्याकलोध्रेंद्रयववालकैः ।
लेहः क्षौद्रेण बालानां ज्वरातीसारवांतिहृत् ॥
रजनी दारुसरलश्रेयसी बृहतीद्वयम् ।
पृश्निपर्णी शताह्वा च लीढं माक्षिकसर्पिषा ॥
ग्रहिणीं दीपनं हंति मारुतार्तिं सकामलाम् ।
ज्वरातीसारपांडुघ्न बालानां सर्वरोगनुत ॥
मिशिकृष्णार्जुनैलाजाशृंगीमरिचमाक्षिकैः ।
लेहःशिशोर्विघातव्यश्छर्दिकासज्वरापहः ॥

शृङ्गी सकृष्णातिविषा विचूर्ण्य
लेहं विदध्यान्मधुना शिशूनाम् ।
कासज्वरच्छर्दिभिरर्दितानां
समाक्षिका चातिविषामथैषाम् ॥

द्विवार्ताकीफलरसं पञ्चकोलं च लेहयेत् ।
एकद्वित्राणि पत्राणि वातपित्तकफज्वरे ॥

बिल्वं च पुष्पाणि च धातकीनां
जलं सलोध्रं गजपिप्पली च ।
क्वाथावलेहौ मधुना विमिश्रौ
बालेषु योज्यावतिसारितेषु ॥

समगाधातकीलोध्रसारिवाभिः शृतं जलम् ।
दुर्धरेऽपि शिशोर्देयमतीसारे समाक्षिकम् ॥
नागरातिविषामुस्ताबालकेन्द्रयवैः शृतम् ॥
कुमारं पाययेत्प्रातः सर्वातीसारनाशनम् ॥
मोचारसः समगा च धातकी पद्मकेसरम् ।
पिष्टैरेतैर्यवागूः स्याद्रक्तातिसारनाशिनी ॥
कल्कः प्रियङ्गुकोलास्थिमज्जामुस्तरसाञ्जनैः ।
क्षौद्रालीढः कुमारस्य च्छर्दितृष्णातिसारनुत् ॥
लेहस्तैलसिताक्षौद्रतिलयष्ट्याह्वकल्कितः ।
बालस्य रुध्यान्नियतं रक्तस्रावं स योजितः ॥
लाजासयष्टीमधुकं शर्कराक्षौद्रमेव च ।
तंडुलोदकसंयुक्तं क्षिप्रं हन्ति प्रवाहिकाम् ॥

हरीतकी वचा कुष्ठ कल्क माक्षिकसंयुतम् ।
पीत्वा कुमार. स्तन्येन मुच्यते तालुकंटकात् ॥
गृहधूमनिशाकुष्ठराजिकेन्द्रयवैः शिशोः ।
लेपस्तक्रेण हंत्याशु सिध्मपामाविचर्चिकाः ॥
पंचमूलीकषायेण सघृतेन पयः शृतम् ।
सशृंगवेर सगुडं शीतं हिक्कार्दितः पिबेत् ॥
द्राक्षावसाभयाकृष्णाचूर्णं सक्षौद्रसर्पिषा ।
लीढं श्वासं निहत्याशु कास वमनकं तथा ॥
पुष्करातिविषाशृंगीमागधीधन्वयासकै. ।
चूर्णं तु मधुना लीढं शिशूनां पचकासजित् ॥
भेषजं पूर्वमुद्दिष्टं महता यज्ज्वरादिषु ॥
कार्यं गदेषु बालाना तेषु दाहादिकं विना ॥
त एव दोषा दूष्याश्च ज्वराद्या व्याधयश्च ते ।
शस्त तदेव भैषज्यं मात्रा तस्य कनीयसी ॥
सप्तच्छदाभयनिशाचंदनैश्चानुलेपनैः ।
सर्पत्वग्लशुन मूर्वा सर्षपारिष्टपल्लवा ॥
विडालविड्जालोममेषशृंगीवचा मधु ।
धूमः शिशोर्ज्वरघ्नोऽयमशेषग्रहनाशनः ॥
क्षणादुद्विजते बाल· क्षणाद्धसति रोदिति ।
नखैर्दंतैर्दारयति धात्रीमात्मानमेव च ॥
ऊर्ध्वं निरीक्षते दंतान्खादेत्कूजति जृंभति ।
भ्रुवौ क्षिपति दंतोष्टं फेन वमति चासकृत् ॥

क्षामोऽतिनिाशी जागर्ति श्लांगो भिन्नविट्स्वरम् ।
मत्स्यशोणितगंधश्च न चाश्नाति यथापुरा ॥
सामान्यग्रहदुष्टानां लक्षणं समुदाहृतम् ।
वचा कुष्ठं तथा ब्राह्मी सिद्धार्थकमथापि वा ॥
सारिवा सैन्धवं चैव पिप्पलीघृतमष्टकम् ।
मेध्यं घृतमिदं सिद्धं पातव्यं च दिनेदिने ॥
दृढस्मृति· क्षिप्रमेधाः कुमारो बुद्धिमान्भवेत् ।
न पिशाचा न रक्षांसि न भूतानि न मातरः ।
प्रवदंति कुमाराणां पिबतामष्टमगलम् ॥

इत्यष्टमंगलम् ।

पादकल्कै· स्वगंधाया· क्षारमष्टगुण पचेत् ।
घृत देयं कमाराणां पुष्टिकृद्बलवर्धनम् ॥

इत्यश्वगंधाघृतम् ।

लाक्षारससमं सिद्धं तैलं मस्तुचतुर्गुणम् ।
रास्ना चदनकुष्ठाब्जवाजिगंधानिशायुतै· ॥
शताह्वादारुयष्ट्याह्वामूर्वातिक्ताहरेणुभिः ।
बालानां ज्वररक्षोघ्नमभ्यंगाद्बलवर्णकृत् ॥

इति लाक्षादिकं तैलम् ॥

इतिश्री वीरसिंहावलोके ज्योतिश्शास्त्रे कर्मविपाकायुर्वेदोक्तप्रयोगे बालरोगचिकित्साधिकार· ॥

---

अथ विषोपद्रवहेतुमाह तत्प्रतीकार च । यथोक्त जातके

व्यालविपशस्त्रबंधनसुतीक्ष्णकूटं च धननाशम् ।
भौमदशायां लभते नृपाग्निचौराहवादिरिपुमर्दान् ॥
अन्यच्च-
भानुदशायां लभते नखौपधाध्वविषकाननैर्निधनम् ।
गिरिदंतचर्मवह्निकौर्यनरेंद्राहवाद्यैश्च ॥

अथ मंगलदशाजनितविपाद्युपशमाय मंगलप्रीतये सकलमपि विधानं विधिवत्कुर्यात् । तथा चादित्यदशायामपि विपाद्युपद्रवे आदित्यप्रीतये पूर्वोक्तमेव सकलं कुर्यात् । तदुपद्रवोपशांतिर्भवति ॥

अथ कर्मविपाके हेतुमाह तत्प्रतीकारं च ।अथ विषेण यः पराहितमाचरति सर्पादिना पर भीपयति स सर्पादिविपोपप्लुतो भवति।तत्रापामार्जनस्तोत्रजपं कुर्यात् । सर्पोपप्लवे च सौवर्णं नागं पंचम्यां दद्यात्सार्पैर्मंत्रैरग्नौ जुहुयात् । सहस्रनामस्तोत्रजपं कुर्यात् । लूतादिविपोपप्लवेऽपि अपामार्जनस्तोत्रेणैव सर्वाण्यंगानि समूलाग्रैः कुशैर्मार्जयेत् । तेनोपशाम्यति ।

अथ क्रमप्राप्तस्य विपरोगस्य सनिदानं चिकित्सितमाह रुग्विनिश्चयात् ।

स्थावरं जंगमं चैव द्विविधं विपमुच्यते ॥
मूलाद्यात्मिकमाद्यं स्यात्परं सर्पादिसंभवम् ।
स्थावरं च ज्वरं हिक्कां दंतहर्षं गलग्रहम् ।
फेनं छर्द्यरुचि श्वासं मूर्छां च कुरुते विपम् ।

निद्रां तंद्रां क्लमं दाह संपाकं लोमहर्षणम् ॥
शोथं चैवातिसारं च कुरुते जंगमं विषम् ।
इंगितज्ञो मनुष्याणां वाक्चेष्टामुखवैकृतैः ॥
जानीयाद्विषदातारमेभिर्लिंगैश्च बुद्धिमान् ।
उद्वेष्टन मूलविषैः प्रलापो मोह एव च ॥
जृंभण वेपनं श्वासो ज्ञेया पत्रविषेण तु ।
मुष्कशोफ फलविषैर्दाहोऽन्नद्वेष एव च ॥
भवेत्पुष्पविषैश्छर्दिराध्मानं श्वास एव च ।
त्वक्सारनिर्यासविषैरुपयुक्तैर्भवति हि ॥
आस्यदौर्गंध्यपारुष्यशिरोरुक्कफसंस्रवा ।
फेनागम क्षीरविषैर्विड्भेदो गुरुजिह्वता ॥
हृत्पीडन धातुविषैर्मूर्च्छा दाहश्च तालुनि ।
प्रायेण प्राणघातीनि विषाण्येतानि निर्दिशेत् ॥

सद्य क्षतं पच्यते यस्य जंतो स्रवेद्रक्तं पूयरूपं त्वभीक्ष्णम् । कृष्णीभूतं क्लिन्नमप्यर्थपूति क्षतान्मांसं शीर्यते यस्य चापि ॥

तृष्णा मूर्च्छा ज्वरदाहौ च यस्य
दिग्धमुग्धं तं मनुष्यं व्यवस्येत् ।
लिंगान्येतान्येव कुर्यादमित्रै-
र्व्रणे विषं यस्य दत्तं प्रमादात् ॥

वातपित्तकफात्मानो भोगिमंडलराजिलाः ।
यथाक्रमं समाख्याता द्व्यंतरा द्वंद्वरूपिणः ॥
अश्वत्थदेवायतनश्मशानवल्मीकसंध्यासु चतुष्पथेषु ।
याम्ये च पित्र्ये परिवर्जनीयाऋक्षे नरा मर्मसु ये च दष्टाः॥
दर्वीकराणां विषमाशुघाति सर्वाणि चोष्णे द्विगुणीभवंति
वृंदसग्रहात्-
मूलं तण्डुलवारिणा पिबति यः प्रत्यगिरासंभवं
निष्पिष्ट शुचिभद्रयोगदिवसे तस्याहिभीतिः कुतः ।
दर्पादेव फणी यदा दशति तं मोहान्वितो मूलपं
स्थाने तत्र तदैव याति नियत वक्रं यमस्याचिरात् ॥
मसूरं निबपत्राभ्यां खादेन्मेषगते रवौ ।
अब्दमेकं न भीतिः स्याद्विपार्तस्य न संशयः ॥
शिरीषपुष्पस्य रसे सप्ताहं मरिच सितम् ।
भावितं सर्पदंष्ट्राणां पाने नस्येंजने हितम् ॥
दंशस्योपरि बध्नीयात्तक्षणाच्चतुरङ्गुले ।
क्षौमादिभिर्वेणिकया सिद्धैर्मन्त्रैश्च मन्त्रवित् ॥
अबुवत्सेतुबधेन बंधेन स्तभ्यते विषम् ।
न वहति शिराश्चास्य समं संधिगता अपि ॥
न जायते विषोद्वेगो बीजनाशादिवांकुरः ।
सत्त्वमालम्ब्य दष्टस्यस्तत्क्षणादुरगो रिपुः ॥
कोमल व यदन्यच्च पेय शीत घृत गवाम् ।
वाच्यो वा नीलकंठोहं ध्येया वा गारुडी तनुः ॥

शून्यताध्यानमात्रेण शून्यतां याति तद्विषम् ।
नक्तमालफलव्योपाविल्वमूलनिशाद्वयम् ।
सौरसं पुष्पमाजं वा मूत्रं बोधनमंजनम् ॥
वंध्याकर्कोटक मूलं छागमूत्रेण भावितम् ।
नस्यं कांजिकसंपिष्टं विषोपहृतचेतसः ॥
त्रिवृद्विशाले मधुकं हरिद्रे मजिष्ठचक्रं लवणं च सर्वम् ।
कटुत्रिकं चैव विचूर्णितानि शृंगेण दद्यान्मधुसंयुतानि ॥
एषोऽगदो हंति विषं प्रयुक्तः पानांजनाभ्यजननस्ययोगैः ।
अवार्यवीर्यो विषवेगहंता महागदो नाम महाप्रभावः ॥
अगारधूममंजिष्ठारजनीलवणोत्तमैः ।
लेपो जयत्याशु विषं कर्णिकायाश्च पानतः ॥
यः कासमर्दं नेत्रे वदने निक्षिप्य कर्णफूत्कारम् ।
मनुजो ददाति शीघ्रं जयति विषं वृश्चिकाणां सः ॥
पारावतशकृच्छुंठीमातुलिंगरसैः समैः ।
पथ्याकार्पाससमिश्रैर्वृश्चिकस्य विषं जयेत् ॥
कुठेरकस्य बीजं तु क्षीरेणार्कस्य भावितम् ।
लेपमात्रे विषं हंति वृश्चिकस्य न संशयः ॥
रजनीसैंधवक्षौद्रसंयुक्तं घृतमुत्तमम् ।
पानं मूलविषार्तस्य दिग्धवृद्धस्य चेष्यते ॥
चतुष्पाद्भिर्द्विपद्भिर्वा नखदंतक्षतं तु यत् ।
भूयते पच्यते रागरुजास्रावज्वरान्वितम् ॥
सोमकल्कोऽश्वकर्णश्च गोजिह्वा हंसपद्यपि ।

रजन्यौ गैरिकं लेपो नखदंतविषापहः ॥
वचाहिंगुविडंगानि सधवं गजपिप्पली ।
पाठा चातिविषा व्योषं काश्यपेन विनिर्मितम् ॥
दशांगमगदं पीत्वा सर्वकीटविषं जयेत् ॥
कीटदष्टक्रियाः सर्वाः शमना स्युर्जलौकसः ॥
छत्रीझर्झरपाणिश्च चरेद्रात्रौ तथा दिवा ।
तच्छायाशब्दवित्रस्ताः प्रणश्यंतीह पन्नगाः ॥
सोत्कंपः पुलकावृतः प्रतिमुहुर्वक्रं समालोकते
दंतेनाधरपल्लवं दशति चेच्छोकान्वितं कूजति ।
दस्तापं जडता च याति नितरां दष्टः स उत्कंठितो
रंतुं त्वस्थिमितामलांबरवतीं रौद्रां श्मशानस्थलीम्॥
श्लेष्मणः कर्णगूथस्य वामानामिकया कृतः ।
लेपो हन्याद्विषं घोरं नृमूत्रासेचनं तथा ॥
पिंडीतगरकनेत्रं पुष्येणोत्पाट्य योजितं दशे ।
मृतमपि दष्टं पुरुषं चालयति हि तदैव नात्र तच्चित्रम्॥
विरुद्धाध्यशनक्रोधक्षुद्भयासनमैथुनम् ।
वर्जयेद्विषमुक्तोऽपि दिवास्वप्नं विशेषतः ॥

इति श्रीतोमर० वीरसिंहावलोके ज्योतिःशास्त्रकर्मविपा-
कायुर्वेदोक्तप्रयोगे विषाधिकारः ॥

अथाकालपलितस्य जातकाभिप्रायेण हेतुमाह तत्प्रतीकारं च । यथोक्तं जातके–

दोषैर्विविधैः ख्यातं दिनकरदृष्टं नरं प्रमाणस्थम् ।
सौरेण दृष्टमूर्त्तिर्वलीयुतांगं तिरस्कृतं नीचम् ॥

चन्द्रः करोतीति शेष । शनिचंद्रप्रीतये यथोक्तमेव जपहोमादिकं कुर्यात् । मकरांशस्थे भौमेप्येवम् । 'आश्रयशौचविहीना वृद्धाकार' इत्यादि वचनात् ।

अथाकालपलितस्य कर्मविप क हेतुमाह । स्वकर्मनिर्देशको जन्मांतरे युवैव शुक्लकेशो भवति । स गायत्र्ययुतं जपेत् । तनूपाग्नेसीतीमं मंत्र जपेत् । तिलैराज्येन जुहुयात् । स्वकृतं सुकृत न कीर्तयेत् । सुवर्णमन्नमाज्यं दद्यात् ।

इत्यकालपलितस्य प्रतीकारविधि ।

अथ पलितचिकित्सा ।

पीताश्वगंधा पयसा द्विमासं घृतेन युक्तं रसभृंगराजम् ।
ये भक्षयेयुर्मनुजाः क्रमेण ते कृष्णकेशा विमलेंद्रियाश्च ॥

असिततिलविमिश्रान्पल्लवान्भक्षयेद्यः
सततसुपयआशी भृगराजस्य मासम् ॥
भवति च चिराजिवी व्याधिभिर्विप्रमुक्तो
भ्रमरसदृशकेश' कामचारी मनुष्य. ॥

इति पलितचिकित्सा ।

ज्वराद्यकालपलितांतानां रोगाणां क्रमेण ज्योतिःशास्त्र-कर्मविपाकायुर्वेदोक्तमार्गेण चिकित्सितमुक्त्वा रसायनाधिकारमाह ॥

वृंदसंग्रहात्—

यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम् ।
पूर्वे वयसि मध्ये वा शुद्धकायः समाचरेत् ॥
नाविशुद्धशरीरस्य युक्तो रासायनो विधिः ।
न भाति वाससि क्लिष्टे रंगयोग इवार्पितः ॥
सिंधूत्थशर्कराशुंठीकणामधुगुडैः क्रमात् ।
वर्षादिष्वभयाभास्यारसायनगुणैषिणा ॥
त्रैफलेनायसी पात्री कल्केनालेपयेन्नवाम् ।
तमहोरात्रिकं लेपं पिबेत्क्षौद्रोदकाप्लुतम् ॥
प्रभूतस्नेहशमनं जीर्णे तस्मिन्प्रयोजयेत् ।
अजरोऽरुक्समभ्यासाज्जीवेत्ता स समाः शतम् ॥

मंडूकपर्ण्याः स्वरसः प्रयोज्य
क्षीरेण यष्टीमधुकस्य चूर्णम् ।
रसो गुडूच्यास्तु समूलपुष्पः
कल्कः प्रयोज्यः खलु शंखपुष्प्याः ॥

आयुःप्रदान्यामयनाशनानि बलाग्निवर्णस्वरवर्द्धनानि ।
मेध्यानिचैतानिरसायनानिमेध्या विशेषेण च शंखपुष्पी ।
ये मासमेकं स्वरसं पिबंति दिनोदिने भृंगरज समुत्थम् ।
क्षीराशिनस्तेबलवर्णयुक्ताः समा शतं जीवितमाप्नुवंति ॥

असिततिलविमिश्रान्पल्लवान्भक्षयेद्य
सततसुपयआशी भृंगराजस्य मासम् ।

२०

भवति च चिरजीवी व्याधिभिर्विप्रमुक्तो
भ्रमरसदृशकेशः कामचारी मनुष्यः ॥
पीताश्वगधा पयसार्द्धमास घृतेन तैलेन सुखांबुना वा ।
कृशस्य पुष्टिं वपुषोविभर्ति बालस्य सस्यस्य यथांबुवृष्टिः
धात्रीतिलान्भृंगरसे विमिश्रान्ये भक्षयेयुर्मनुजा क्रमेण ।
तेकृष्णकेशाविमलेंद्रियाश्चनिर्व्याधयोऽप्यामरणाद्भवेयुः ।
मासं वचामप्युपसेव्यमानाः क्षीरेण तैलेन घृतेन वापि ।
भवन्ति रक्षोभिरदृष्टरूपा मेधाविनो निर्मलदृष्टिवाचः ।
वृद्धदारुकमूलानि सूक्ष्मचूर्णानि कारयेत् ।
शतावर्या रसेनैव सप्तवाराश्च भावयेत् ॥
अक्षमात्रं तु तच्चूर्णं सर्पिषा सह योजयेत् ।
मासमात्रोपयोगेन मतिमाञ्जायते नरः ॥
मेधावी स्मृतिमांश्चैव वलीपलितवर्जितः ॥
हस्तिकर्णरज खादेत्प्रातरुत्थाय सर्पिषा ॥
य श्रेष्ठाहारचारोऽपि सहस्रायुर्भवेन्नरः ।
मेधावी बलवान्कामी स्त्रीशतानि जयत्यसौ ॥
मधुना तस्य स्नेह स्याद्बलिष्ठ स्त्रीसहस्रगः ।
अथ मत्र प्रयोक्तव्यो भिषजा चाभिमंत्रणे ॥
ओं नमो महाविनायकाय अमृतं रक्ष रक्ष मे फल-
सिद्धिं देहि देहि रुद्रवचनेन स्वाहा ॥
पुनर्नवस्यार्द्धपल नवस्य पिष्टं पिबेद्य पयसार्धमासम् ।
मासद्वय तद्द्विगुण समं वा जीर्णोपि भूयःस पुनर्नवःस्यात् ।

धात्रीचूर्णस्य कंस स्वरसपरिमितं क्षौद्रसर्पिः समांशं
कृष्णामानीसिताष्टप्रसृतिमधुयुत स्थापितं भस्मराशौ ।
वर्षाण्येतत्समश्नन्भवति विपलितो रूपवर्णप्रभावै-
र्निर्व्याधिर्बुद्धिमेधास्मृतिवचनबलस्थैर्यसत्त्वैरुपेतः ॥

गुडूच्यपामार्गविडङ्गशङ्खिनी
वचाभया शुण्ठिशतावरी समा ।
घृतेन लीढा प्रकरोति मानवं
त्रिभिर्दिनैः श्लोकसहस्रधारिणम् ॥

ब्राह्मी वचाभया वासा पिप्पली मधु सैंधवम् ।
अस्य प्रयोगात्सप्ताहात्किन्नरैः सह गायति ॥

हंत्यम्लपित्तवमनारुचिदाहमोह-
खालित्यमेहतिमिरव्रणशुक्रदोषान् ।
भुक्त्वा नर सततमामलकीरसेन
वृद्धोऽप्यनेन च भवेत्तरुणी रिरंसुः ॥

तीव्रेण कुष्ठेन परीतदेहो य सोमराजीं नियमेन खादेत् ।
संवत्सरं कृष्णतिलद्वितीयां स सोमराजी वपुषातिशेते ॥

पंच भल्लातकांश्छित्वा साधयेद्विधिवज्जले ।
कषायं तं पिबेच्छीतं घृतेनाक्तोष्ठतालुकः ॥
पंचभल्लातकं यावत्सप्तति ह्रासयेत्ततः ।
जीर्णेऽद्यादोदन शीत घृतक्षीरोपसंहृतम् ॥
एतद्रसायन श्रेष्ठं वलीपलितनाशनम् ।

१ 'सर्पि' रित्येकस्मिन्पुस्तके ।

कुष्ठार्शःक्रिमिदोषघ्नं दुष्टशुक्रविनाशनम् ॥
तैलं भल्लातकानां च पिबेन्मास यथाबलम् ।
सर्वोपतापनिर्मुक्तो जीवेद्वर्षशतं दृढः ॥
कासश्वासातिसारज्वरपिटककटीकुष्ठकोष्ठप्रकारान्
मूत्राघातोदरार्शःश्वयथुगलशिरःकर्णशखाक्षिरोगान् ।
ये चान्ये वातपित्तश्रमजकफभवा व्याधयः संति केचित्
तांस्तानभ्यासयोगादपनयति पयः पीतमन्ते निशायाः ॥
अंभसः प्रसृतीरष्टौ रवावनुदिते पिबेत् ।
वातपित्तकफ जित्वा जीवेद्वर्षशतं दृढम् ॥
व्यंगवलीपलितघ्नं पीनसवैस्वर्यकासश्वासघ्नम् ।
रजनीक्षयेऽम्बुनस्यं रसायनं दृष्टिजननं च ॥
प्रसृतित्रयं तु पातव्यं नासाया नाधिकं मतम् ।
न केवलं दीर्घमिहायुरश्नुते रसायनं यो विधिवन्निषेवेत् ।
गतिं सदेवर्षिनिषेविताशुभाप्रपद्यतेब्रह्मतथैवचाक्षयम् ॥

इति श्रीतोमर० वीरसिंहावलोके रसायनाधिकारः ॥

अथ ज्योतिश्शास्त्राभिप्रायेण पंढत्वहेतुमाह तत्प्रतीकारं च । यथोक्तं जातके ।

क्लीबाचारो द्वेष्यः सर्वजितो बंधुभिः परित्यक्तः ।
सौरादित्येंदुसुतैरेकस्थैर्जायते पुरुषः ॥
अन्यच्च ।
ज्ञो नीचं रविभवने दुःखांतं वीक्षितागमसुरूपम् ।
अनुचरशीलमकांतं नपुंसकं भौमसंदृष्टः ॥

करोतीति शेषः । तथा च ।

क्लीबो विपन्नदुष्टः परार्थचेष्टः सुदुःखितो मूढः ।
मकरे दानवपूज्ये क्लेशसहो जायते पुरुषः ॥

अथ शनिरविबुधयोगे पढत्वं सम्भवेत् । तत्प्रतीकारार्थं ग्रहत्रयप्रीतये यथोक्तमेव पूर्ववत्कुर्यात् । रविग्रहस्थितभौमदृष्टबुधजनितनपुंसकत्वप्रतीकाराय बुधप्रीतये यथोक्तमेव कुर्यात् । मकरांशवर्तमानशुक्रजनितनपुंसकत्वप्रतीकाराय शुक्रप्रीतये यथोक्तमेव कुर्यात् । तेनोपशांतिर्भवति ॥

अथ नपुंसकत्वे कर्मविपाकहेतुमाह तत्प्रतीकार च । स्त्रीपण्योपजीवी पंढः चाडालव्यवकीर्णी पंढः कन्यादूषक पंढ अंगुल्यादियोनिविदारणेन तु संभोगे पढः स्यात् । अस्य प्रायश्चित्त उक्तमेव कुर्यात् । तत्पापोपशांतये चांद्रायणद्वय कुर्यात् । गा सुवर्णं च दद्यात् ।
रसायनमुक्त्वा वाजीकरणमाह वृंदसंग्रहात् ।

तैस्तैर्भावैरहृद्यैस्तु रिरंसोर्मनसि क्षते ।
ध्वज. पतत्यतो नृणां क्लैब्यं समुपजायते ॥
अन्यैरम्लोष्णलवणैरतिमात्रोपसेवितैः ।
सौम्यधातुक्षयो दृष्ट. क्लैब्य तदपरं स्मृतम् ॥
अतिव्यवायशीलो यो न च वाजिक्रियारत ।
ध्वजभंगमवाप्नोति सशुक्रक्षयहेतुकम् ॥
असाध्यं सहज क्लैब्यं मर्मच्छेदाच्च यद्भवेत् ।

साध्यानामविशिष्टानां कार्यो वाजीकरो विधिः।
पिप्पलीलवणोपेतौ वस्तांडौ क्षीरसर्पिषा।
साधितौ भक्षयेद्यस्तु स गच्छेत्प्रमदाशतम् ॥
वस्तांडसिद्धे पयसि भावितानसकृत्तिलान्।
यः खादेत्स पुमान्गच्छेत्स्त्रीणां शतमपूर्ववत् ॥
चूर्णं विदार्याः सुकृतं स्वरसेनैव भावितम् ॥
सर्पिः क्षीरयुतं लीढ्वा दश गच्छेन्नरोऽङ्गनाः ॥
एवमामलकं चूर्णं स्वरसेनैव भावितम् ॥
शर्करामधुसर्पिर्भिर्युक्तं लीढ्वा पयः पिबेत्।
एतेनाशीतिवर्षोऽपि युवेव परिहृष्यति ॥
विदारीकदचूर्णं तु घृतेन पयसा नरः।
उदुंबरसमं खादेद्वृद्धोऽपि तरुणायते ॥
स्वयगुप्तेक्षुरकयोर्बीजचूर्णं सशर्करम्।
धारोष्णेन नरः पीत्वा पयसा न क्षयं व्रजेत् ॥
उच्चटाचूर्णमप्येवं क्षीरेणोत्तममुच्यते।
शतावर्युच्चटाचूर्णं पेयमेवं सुखार्थिना ॥
कर्षं मधुकचूर्णस्य घृतक्षौद्रसमान्वितम्।
पयोऽनुपानं यो लिह्यान्नित्यवेगः स ना भवेत् ॥
गोक्षुरकः क्षुरकः शतमूली वानरिनागबलातिबला च।
चूर्णमिदं पयसा निशि देयं यस्य गृहे प्रमदाशतमस्ति ॥
कटुकविदारीनिस्तुषतिलबहुपत्रीरजश्चतु प्रस्थम्।
भल्लातकप्रस्थयुतं तत्समसत्त्वं गुडूच्याश्च ॥

पंचत्रिंशन्मधुनो व्योम्नश्चाष्टौ पलानि दश वह्नेः।
तद्द्विगुणा वाराही सप्तगुणा शर्करा दहनात्।
मध्वर्द्धघृतं चैतत्परिमृज्य स्निग्धभाजने निहितम्।
अद्याद्यथाग्नि हंतुं रोगानीकं क्षयं कासम्॥
अश्मर्युदरभगंदरकुष्ठवलीपीनसश्वासम्।
नरसिंहसदशविक्रममपत्यमपि वांछित लभते॥
बलवर्णस्वरकांतिस्मृतिवृद्ध्युत्साहसंयुक्तम्।
उपयुज्य चूर्णमब्दं शुद्धतनु' स्यान्नृसिंहाख्यम्॥
वाराहमूर्धवत्कंदो वाराहीकंदसंज्ञितः।
भिषजां तदलाभे तु चर्मकारालुको मत॥

इति नारसिंहाख्यं चूर्णम्।

घृतं शतावरीगर्भं क्षीरे दशगुणे पचेत्।
शर्करापिप्पलीक्षौद्रयुक्तं तद्वृष्यमुच्यते॥

इति शतावरीघृतम्।

कर्पूरागुरुचोचबोलनलिकालाक्षाशठीधातकी-
पुष्पैः सप्तदलैलवालुसुरसाशैलेयमांसीप्लवैः।
एलाकुंकुमरोचनादमनकश्रीवासजातीफलै
कक्कोलक्रमुकैर्जटामदमुराकातालवंगामयैः॥
तैलोशीरहरेणुकामलयजस्थौणेयचंडानखै-
र्जातीकुष्ठकुलीरपद्मकनतैः सूक्ष्मान्वितैः पालिकैः।
लाक्षायोजनवल्लिलोध्रसलिलैस्तैलं विपाच्याढकं
तेनाभ्यज्य तनुर्जरन्नपि भवेत्स्त्रीणां परं वल्लभः॥

शुक्राढ्यो द्युतिमाननल्पतनय पंढोऽपि रत्युत्सुको
वंध्या गर्भवती भवेदपि तथा वृद्धापि सूते सुतम् ।
कंडूस्वेदविचर्चिकामलहरं दौर्गन्ध्यकुष्ठापहम्
अश्विभ्या परिकीर्तितं सुखकरं तैलं सुगंधं महत् ॥

इति महासुगंधतैलम् ।

यत्किंचिन्मधुरं स्निग्धं बृंहण जीवनं गुरु ।
हर्षण मनसश्चैव सर्वं तद्वृष्यमुच्यते ॥
सुरूपा यौवनस्था च लक्षणैर्या विभूपिता ।
वयस्या शिक्षिता या च सा स्त्री वृष्यतमा मता ॥
न पूर्वं षोडशाद्वर्षात्सप्तत्या परतो न च ।
आयु कामो नर स्त्रीभि संयोगं गन्तुमर्हति ॥
भोजनानि विचित्राणि पानानि विविधानि च ।
वाचः श्रोत्रानुगामिन्यस्त्वक्सुखस्पर्शनानि च ॥
गधा मनोज्ञा रूपाणि चित्राण्युपवनानि च ।
मनसश्चाप्रतीघातो वाजीकुर्वंति मानवम् ॥

इति श्रीतोमर० वीरसिंहावलोके वाजीकरणाधिकारः ।

अथ स्नेहाधिकार । वृंदसंग्रहात् ।

यथादोप यथाव्याधि यथाकालं यथाबलम् ।
स्नेहं पक्वमपक्वं वा पातुं युंज्याच्चिकित्सक ॥
केवलं पैत्तिके सर्पिर्वातिके लवणान्वितम् ।
देयं बहुकफे तैल व्योपक्षारसमायुतम् ॥
स्नेहसात्म्य क्लेशसहो दृढ काले च शीतले ।

अच्छमेव पिबेत्स्नेहमहष्टाना हि शोभनम् ॥
उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैश्च मध्यमा ।
जघन्यस्य पलार्धेन स्नेहक्काथौषधेषु च ॥
पिबेत्र्यहं चतुरह पचाह पडहानि च ।
सप्तरात्रात्पर स्नेहः सात्म्यभावाय कल्प्यते ॥
स्नेहं कृश कृशान्वृद्धान्सुकुमारान् शिशूनपि ।
तृष्णालुं चोष्णकाले च सह भक्तेन पाययेत् ॥
पिप्पल्यो लवणं स्नेहाश्चत्वारो दधिमस्तुकम् ।
पीतमेष्यकमेताद्धि सद्य· स्नेहनमुच्यते ॥
सर्पिष्मतो वहुतिलां यवागूं स्वल्पतदुलाम् ।
पिवेत्सुखोष्ण मनुजः सद्यो रौक्ष्यात्प्रमुच्यते ॥
विवर्जयेत्स्नेहपानमजीर्णी तरुणज्वरी ।
दुर्बलोरोचकोऽस्थूलो मूर्छार्तो,मदपीडित' ॥
छर्द्याभिभूतस्तृपितः श्रांतः पानक्लमान्वितः ॥
दत्तवस्तिर्विरक्तश्च वांतो यश्चापि मानवः ।
अकालेऽपि प्रसूता स्त्री स्नेहपान विवर्जयेत् ॥
दीप्तांतराग्निः परिशुद्धकोष्टः प्रत्यग्रधातुर्बलवर्णयुक्तः ।
दृढेंद्रियो मदजर' शतायुः स्नेहोपसेवी भवतीह मर्त्यः ॥
इति श्रीतोमर०वीरसिहावलोके स्नेहाधिकार' ।

अथ स्वेदाधिकारः प्रारभ्यते।

तप्तै' सैकतपाणिकांस्यवसनैः स्वेदोऽथवांगारकै-
र्लेपैर्वातहरै सहाम्ललवणै' स्नेहै सुखोष्णैर्भवेत् ।

एव ततपयोम्बुवातशमनैः क्राथादिसेवादिभि-
स्ततैस्तोयनिपेचनोद्गतमरुद्वाप्पै' शिलाद्यैःक्रमात् ॥
येषा नस्यं विधातव्य वस्तिश्चापि हि देहिनाम्॥
शोधनयाश्च ये केचित्पूर्वं स्नेद्याश्च ते मताः ॥
पश्चात्स्वेद्यो हृते शल्ये मूढगर्भैरुपद्रुताः ।
सम्यक्प्रजाता काले च पश्चात्स्वेद्यैव जानता ॥

स्नेहाक्लिन्नाधातुसस्थाश्च दोषा·
स्वस्था ये वा ये च मार्गेषु लीना·।
सम्यक्स्वेदैर्योजितास्ते द्रवत्वं
प्राता· कोष्ठशोधनैर्याति शेषा' ॥

अग्नेर्दीप्तिं मार्दवं त्वक्प्रसादं भक्तश्रद्धा श्रोतसा निर्मलत्वम् । कुर्यात्स्वेदस्तंद्रनिद्रे च हन्यात्संधींस्तब्धां-श्चेष्टयेदाशु युक्त' ।

शीतशूलव्युपरमे स्तंभनिग्रहगौरवे ।
सजाते मार्दवे वक्रे स्वेदनाद्विरतिर्मता ॥
पांडी मेही रक्तपित्ती तृषार्त' क्षतक्षीणोदुर्बलो जीर्णभक्तः ।
वृकोदरीगर्भिणीपानकृच्च नैते स्वेद्यायश्चमत्योऽतिसारी॥
स्नेहव्यक्तशरीरस्य शीतैराच्छाद्य चक्षुषी ।
हृदय वृषणौ हृष्टी स्वेदयेन्मृदुना न वा ॥

इति श्रीतोमर०वीरसिंहावलोके स्वेदाधिकार. ॥

---

वमनं रेचनं नस्य निरूहश्चानुवासनम् ।

ज्ञेयं पंचविधं कर्म विधानं तस्य कथ्यते ॥
दोषाः कदाचित्कुप्यंति जिता लंघनपाचनैः ।
ये तु संशोधनैः शुद्धा न तेषां पुनरुद्भवः ॥
कफजे वमनं शस्तं रेचनं पित्तजे गदे ।
बस्तिर्वातगदे कार्या आमजे पाचनादिकम् ॥
स्निग्धं स्विन्नं नरं सम्यग्जानुमात्रासनस्थितम् ।
कंठमेरंडनालेन स्पृशान्निर्वामयेद्भिषक् ।
कृष्णेंद्रयवसिन्धूत्थं रास्नाकल्कयुतं पिबेत् ॥
यष्टीकषायं सक्षौद्रं तेन साधु वमत्यलम् ।
आटरूषं वचा निंबं पटोलं फलिनीत्वचम् ।
क्राथयित्वा पिबेत्तोयं वांतिकृन्मदनान्वितम् ॥
कफं च कटुतीक्ष्णोष्णैः पित्तं स्वादुहितैर्वमेत् ।
सुस्वादुलवणाम्लेन ससृष्ट वायुना कफम् ॥

पित्ते कफस्यानुसुखं प्रवृत्ते शुद्धेषु हृत्कंठशिरःसुचापि ।
लघौ च देहे कफसंस्रवे च स्थिते सुवांतं पुरुषं व्यवस्येत्
कफः प्रसेकः स्वरभेदनिद्रातंद्रास्यदौर्गंध्यविषोपसर्गाः ।
गुरुत्वकंडूग्रहण विकारं नश्यंति जंतोर्वमतः सुखेन ॥
छिन्ने तरौ पुष्पफलप्ररोहा यथा विनाशं सहसा व्रजंति ।
तथाहृते श्लेष्मणि छर्दनेन तज्जा विकारा विलयं व्रजंति
न वामयेत्तैमिरिके न गुल्मे नैवोदरे नैव च पांडुरोगे ।
स्थूलक्षतक्षीणकृशातिवृद्धानर्शोर्दिताक्षेपकपीडितांश्च ॥

रूक्षप्रमेहे तिमिरं च गर्भे गच्छत्ययोर्ध्वं रुधिरे च तीव्रे।
दुष्टे च कोष्ठे क्रिमिभिर्मनुष्यं न वामयेदर्शसि चातिवृद्धे।
अतिवातं घृताभ्यक्तमवगाह्य हिमे जले।
उपाचरेत्सता क्षौद्रमिश्रैर्लेहैश्चिकित्सकः॥
वमनेऽतिप्रवृत्ते च हृद्यं कार्यं विरेचनम्।

इति वमनाधिकारः॥

स्निग्धस्विन्नाय वांताय दातव्यं हि विरेचनम्।
अन्यथा योजनं पुंसां ग्रहणीरोगकृन्मतम्॥
पित्तेन स्यान्मृदुः कोष्ठः क्रूरो वातकफाश्रयात्।
मध्यमः समदोषत्वान्मात्रा योज्यानुरूपतः॥
शर्कराक्षौद्रसयुक्तं त्रिवृच्चूर्णं सुचूर्णितम्।
रेचनं सुकुमाराणां त्वक्पत्रमरिचान्वितम्।
अभयापिप्पलीमूलं मरीच विश्वभेषजम्।
त्वक्पत्रपिप्पलीमुस्तविडङ्गामलकानि च॥
एतानि समभागानि दंती च त्रिगुणा भवेत्।
त्रिवृदष्टगुणा ज्ञेया षड्गुणा चात्र शर्करा॥
मधुना मोदकं कृत्वा वल्लमात्रप्रमाणतः।
एकैकं भक्षयेत्प्रातः शीतं चानु जलं पिबेत्॥
तावद्विरिच्यते जंतुर्यावदुष्णं न सेव्यते।
पानाहारविहारेषु भवेन्नियंत्रणः सदा॥
पाण्डुत्वकासविषमज्वरवह्निसादान्

जंघोरुपृष्ठजघनोदरपार्श्वशूलान् ।
दुर्नामकुण्डलिभगंदरशोथगुल्मान्
यक्ष्मोदरभ्रमविदाहकमूत्रकृच्छ्रान् ॥
प्लीहाक्षिरोगपवनाश्मरिकुष्ठमेहान्
हन्याद्रसायनमिदं भिषजा प्रयुक्तम् ।
अल्पव्यय बहुफलं सततोपसेव्य-
मायुष्करं पलितनाशनमश्विदृष्टम् ॥

इत्यभयाद्यो मोदक ।

विडगसारामलकाभयानां पलंपल स्यात्त्रिवृतात्रयं च ।
गुडस्य च द्वादशभागयुक्ता मासेन त्रिशद्गुटिका निषेव्याः ।
विचारिणा य वरेण सृष्ट
स माणिभद्र किल शाक्यभिक्षवे ।
अय हि कासक्षयकुष्ठनाशनो
भगदरप्लीहजलोदरार्शसाम् ॥
बुद्धेः प्रसादंबलमिंद्रियाणांधातुस्थिरत्वंज्वलनस्यदीप्तिम्
चिराच्च पाकं वयस. करोति विरेचन सम्यगुपास्यमानम्

इति माणिभद्रो मोदक ।

क्षीणास्तथा रूक्षितबालवृद्धा
दीनोथ शोषी भयशोकतप्त ।
श्रांतस्तृषार्त. परिजीर्णभुक्तो
गर्भिण्यथो गच्छति यस्य चासृक् ॥

नवप्रतिश्यायपरीतदेहो
नरज्वरी या च नवप्रसूता ।
शल्यार्दिताश्चाप्यविरेचनीयाः
स्नेहादिभिर्ये त्वनुपसृताश्च ॥
पद्मकोशीरनागाह्वचंदनानि प्रयोजयेत् ।
अतियोगे विरेकस्य पानलेपनसेचनैः ॥
विरेचनानां सर्वेषां दध्यम्लं स्तंभने हितम् ।
आमांते च प्रदातव्यमन्यथा मुद्गयूषकम् ॥

इति वीरसिंहावलोके विरेकाधिकारः ॥

वस्तिर्वाते च पित्ते च कफे रक्ते च शस्यते ।
संसर्गे संनिपाते च वस्तिरेव सदा हितः ॥
विरेचनात्सप्तरात्रे गते जाते मलक्षये ।
कृताहाराय सायाह्ने वस्तिर्देयोऽनुवासनः ॥
उत्सृष्टानिलविण्मूत्रे नरे वस्तिं विधापयेत् ।
अन्यथोपहितो वस्तिर्नैवांतः सम्प्रपद्यते ॥
एकांतरोपयोगेन धान्यशुंठीजलं पिबेत् ।
तेनास्य दीप्यते वह्निर्भक्तकांक्षा च जायते ॥
मधुकामगधाभयाबिल्ववचा
मिसिपुष्करमूलशठीशिखिभिः ।
मदनामरदारुयुतैर्विपचेत्
पयसा गुदवर्तिषु तैलमिदम् ॥

उरुजानुगुल्फगुदगुह्यकटीजठरांतरेषु पवनस्य रुजः ।
विनिहंतिगुल्ममतिसारगदान्ग्रहणीविकारमनुवासनतः ।
इति वीरसिंहावलोकेऽनुवासनाधिकारः ।

अनुवासितमभ्यक्तं स्विन्नदेहं निरूहयेत् ।
अभुक्ते पीडयेद्वस्तिमतूर्णमविलंबितम् ॥
स्नेह गुडं मांसरस पयश्च ह्यम्लानि मूत्र मधु सेंधवं च ।
एतान्यनुक्तान्यपि दापयेत्तु निरूहयोगे मदनात्फलं (?) च
गुडतिंतिडीककुडवस्तु भवेदपि चात्र मूत्रकुडवाद्वितयम् ।
मिसिरामठमाठकसिंधुयुतंनृतिरूहणहि विहितंमुनिभिः॥
मूलसेकाद्यथा वृक्षा· स्निग्धशाद्वलपल्लवाः ॥
तथा वस्तिप्रदानात्स्युर्नराः कांतिबलान्विताः॥
इति वीरसिंहावलोके निरूहाधिकारः ।

प्रायोगिकः कासहरश्च धूमो वैरेचन· स्नेहनवामनीयौ।
एलादिना कुष्ठनवोद्धृतेन क्षौमं प्रलिप्यांगुलिकाप्रमानम्॥
प्रायोगिकेवर्तिरियं तु नेत्रमष्टांगुल पड्गुणकं प्रशस्तम्॥
बृहत्यौ त्र्यूषणं शृंगी चेंगुदी त्वङ्मनःशिला ।
एषा कासहरा वर्तिर्नेत्रं च षोडशांगुलम् ॥
धूमोपयोगात्पुरुष प्रसन्नेंद्रियवाङ्मना· ।
प्रगाढ मानमिच्छति धूममास्येन तद्विदः ॥
उर कंठाश्रये रोगे मुखेनैव पिबेन्नर· ।
इति धूमाधिकारः ।

अथ नस्याधिकार' ।

प्रतिहर्षोऽवपीडश्च नस्यं प्रधमनं तथा ।
शिरोविरेचनं पंच नस्यभेदा॰ प्रकीर्तिताः ॥

औषधमौषधसिद्धो वा स्नेहो वा नासिकाभ्यां दीयते तन्नस्यम् ।

शृगाटकमभिप्राव्य स्थापयेच्च गले धृतम् ।
कफोत्क्लेशभय चैव निष्ठीवेदविधारयन् ॥
स्वेदयेच्च कपोलादि तत॰ ष्ठीवेत्पुन पुन' ।
भोजयेदनभिष्यदी जनमुक्तं च शीलयेत ॥
रजो धूमं मनस्तापस्नानक्रोधादि वर्जयेत् ।
लाघवं शिरसो योगे सुखस्वप्नप्रबोधनम्
विकारोपशम' शुद्धिरिंद्रियाणा मनःसुखम् ।
लाघवं मलसशुद्धि स्रोतसां व्याधिसंक्षय' ॥
विनेंद्रियप्रसादश्च शिरस शुद्धिलक्षणम् ।
ईषदुच्छिङ्कनात्स्नेहो यथावक्रं प्रपद्यते ॥
नस्ये निषिक्त तं विद्यात्प्रतिमर्श॰ प्रमाणतः ।
उच्छिष्ट न पिबेच्चैतन्निष्ठीवेन्मुखमागतम् ॥
तेन रोगाः प्रशाम्यंति नराणामूर्ध्वजत्रुजाः ।
इंद्रियाणा च वैमल्य कुर्यादास्यं सुगंधि च ॥
हनुदंतशिरोग्रीवात्रिकबाहूरसां बलम् ।
वलीपलितखालित्यव्यंगाना चाप्यसंभव ॥
तैलं कफे सवाते च केवले पवने वसाम् ।

दद्यात्सर्पिः सदा पित्ते मज्जानं च समारुते ॥
चतुर्विधस्य स्नेहस्य विधिरेष प्रदर्शितः ।
श्लेष्मस्थानविरोधित्वात्तेषु तैलं प्रशस्यते ॥
विषाभिघाते सन्यासे मूर्च्छामोहापतंत्रके ।
मदापस्मारशोकार्तिचिंताक्रोधभयादिषु ॥
मानसेषु च रोगेषु मूढव्याकुलचेतसाम् ।
संज्ञाप्रबोधहेत्वर्थमवपीडं च दापयेत् ॥
नस्ये प्रबोधहेत्वर्थमवपीडं च दापयेत् ।
नस्ये प्रधमने चूर्णं त्रिवेलं यत्कृतं पुटम् ॥
षडंगुलाद्विमुखया नाड्या विषादिमूर्छितः ॥
प्रसन्नदृष्टिर्दृढदंतकेशः शशांकवक्त्र पलितैर्विहीनः ॥
पिकाभकंठःकमलास्यगंधो नस्योपसेवी भवतीह मर्त्यः॥
इति श्रीतोमर० वीरसिंहावलोके नस्याधिकारः ॥

---

अतः परं प्रवक्ष्यामि कवलग्रहणे विधिम् ।
चतुर्धा कवलः स्नेही प्रसादी शोधिरोपणी ॥
स्निग्धोष्णैः स्नेहिको वाते स्वादुशीतैः प्रसादनः।
पित्ते कट्वम्ललवणै रूक्षोष्णैः शोधनः कफे ॥
कषायतिक्तमधुरैः कटूष्णैः रोपणी व्रणे ।
चतुर्विधस्य चैवास्य विशेषोऽयं प्रकीर्तितः ॥
तत्र त्रिकटुकवचासर्षपहरीतकीकल्कमालोड्य तैल-
शुक्तसुरामूत्रक्षारमधूनामन्यतमेन सलवणमभिप्रतप्तमुप-
स्विन्नमृदितगलकपोलललाटप्रदेशो धारयेत् ।

सुखं संचार्यते या तु मात्रा सा कवले स्मृता ।
असंचार्या तु या मात्रा गंडूपे सा प्रकीर्तिता ॥

"तावच्च धारयितव्योऽनन्यमनसोन्नतदेहेन यावद्दोषपरिपूर्णकपोलत्वं नासास्रोतनयनपरिस्रावश्च भवति तदा विमोक्तव्यः पुनश्चान्यो गृहीतव्य इति ।"

एवं स्नेहपय· क्षौद्ररसमूत्राम्लसम्भृताः ।
कपायोष्णोदकाभ्यां च कवला दोषतो हिताः ॥
व्याधेरपचयस्तुष्टिर्वैशद्यं वक्त्रलाघवम् ।
इन्द्रियाणां प्रसादश्च कवले शुद्धिलक्षणम् ॥
हीने जाड्यकफोत्क्लेशावरसज्ञानमेव च ।
अतियोगान्मुखे पाकः शोषतृष्णारुचिक्लमाः ॥
शोधनीयविशेषेण भवन्त्येव न संशयः ।
तिला नीलोत्पलं सर्पि· शर्करा क्षीरमेव च ॥
सक्षौद्रो दग्धवक्त्रस्य गण्डूषो दाहनाशनः ।
कवलस्य विधिर्ह्येष समासेन प्रकीर्तित· ॥
विभज्य भेषजं बुद्ध्या कुर्वीत प्रतिसारणम् ।
कल्को रसक्रिया क्षौद्रं चूर्णं चेति चतुर्विधम् ॥
अङ्गुल्यग्रप्रणीतं तु यथास्वं मुखरोगिणाम् ।
तस्मिन्योगमयोगं च कवलोक्तं विभावयेत् ॥
तानेव शमयेव्याधीन् कवलो यानपोहति ।
दोषघ्नमनभिष्यन्दि भोजयेच्च तथा नरम् ॥

इति श्रीतोमर० वीरसिंहावलोके कवलाधिकारः ॥

अथ मिश्रकः ।

मुस्तापर्पटकं ज्वरे तृषि जलं मृद्भ्रष्टलोष्टोद्भवं
लाजाश्छर्दिषु वस्तिजेषु गिरिजो मेहेषु धात्रीनिशे ।
पांडौ श्रेष्ठमथाभयाऽनिलकफे प्लीहामये पिप्पली
सधानं कृमिजे विषे शुकतरुर्मेदस्यथो गुग्गुलुः ॥
वृषास्रपित्ते कुटजोतिसारे भल्लातमर्शस्सु गदेषु हेमा।शूलेषु
तार्क्ष्यं च कृमौकृमिघ्न शोषे सुराच्छागपयोऽथ मांसम् ॥
अक्षामयेषु त्रिफलागुडूची वातास्त्ररोगे मथितं ग्रहण्याम् ।
कुष्ठेषु सेव्यःखदिरस्य सारःसर्वेषु रोगेषु शिलाह्वय च॥
उन्मादं घृतमनवं मद्यं शोकं व्यपस्मृति ब्राह्मी ।
निद्रानाशं क्षीर जयति रसाला प्रतिश्यायम् ॥
मांस कार्श्यं लशुनः प्रभंजनं स्तब्धगात्रतांस्वेदः ।
गुडयजान्याश्च पुरो नस्यं स्कंधांसबाहुषु रुजः(?) ॥
नवनीतसंडमर्दितमौष्ट्रं मूत्र पयश्च हंत्युदरम् ।
नस्यंचोर्ध्वविकारान्विद्रधिमचिरोत्थमस्रविस्रावम् ॥
नस्यं कवल मुखगलगदांश्च नस्यांजनादिनेत्ररुजः ।
वृद्धत्व क्षीरघृते मूर्च्छां शीताम्बुमारुतच्छायाः ॥
सहयुक्ताद्रकमात्रा मंदे वह्नौ श्रमे सुरापानम् ।
दुःखसहत्वं स्थौल्ये व्यायामे गोक्षुरो हितः कृच्छ्रे ॥
कासे निदिग्धकायाः क्वाथः शूलेषु पुष्कर पयसा ।
सस्थापने च धात्रा त्रिफलाया गुग्गुलुर्व्रणे शस्तः ॥
वस्तिर्वातविकारे पित्ते रेकः कफोद्भवे वमनम् ।

क्षौद्रं जयति बलासं वस्तिः पित्तं समीरणं तैलम् ॥
इत्येताद्धि प्रोक्तं रोगाणामौषध समं कालम् ॥
तद्देशकालबलतो विवेचनीय यथायोगम् ॥
खदिर निंबपत्राणि मसूरविदलै• सह ।
पिष्टांभसा कृतो लेपः शीतपित्त व्यपोहति ॥
पलंपल समादाय सर्जनिर्याससर्पिपो ।
तयोस्तुल्यं गुड दत्वा सम्यग्दृपदि पेपयेत् ॥
अर्कदुग्धपलार्धं तु क्षिप्त्वा लेपं प्रलेपयेत् ॥
तेनैव लेपितौ पादौ भवतोऽब्जदलप्रभौ ॥
सर्जशिग्रुकसिंधूत्थघृतगुग्गुलुगैरिकैः ।
गुडक्षौद्रयुतो लेप पादस्फुटितनाशन• ॥
घृताक्तैः सक्तुभि• श्लक्ष्णैरजाक्षीरसमन्वितैः ।
मुच्यते चरणौ क्षिप्र परितापात्सुदारुणात् ॥
सैंधवचूर्णोपहित दल कुमार्या द्विधाकृत बद्धम् ।
गलगंडगंडमाला ग्रथि चैवार्बुद शमयेत् ॥
हरीतकी च सपिष्य गात्रमुद्वर्त्तयेन्नरः ।
पश्चात्स्नान प्रकुर्वीत देहस्वेदप्रशांतये ।
बबूलस्य फले सम्यग्वारिणा परिपेपितः ।
गात्रमुद्वर्त्तयित्वा तु हरीतक्या सुपिष्टया ॥
भूयश्चोद्वर्त्तन कृत्वा यथास्नान प्रकल्पयेत् ।
प्रस्वेदान्मुच्यते क्षिप्रमतस्स्वेद समाचरेत् ॥
मोचं तु घृतसमिश्र मुख्यं वर्णकर परम् ॥

भोजयेत्प्रातरुत्थाय जीर्णे मधुरभोजनम् ॥
गोमूत्रे तु समालोड्य माहिषं शकृदुत्तमम् ।
तेनैव लेपनं कुर्याद्देहवैगंध्यनाशनम् ॥
अश्वगधा तथालाव्रु चंदन चैव पेपयेत् ॥
सर्पपाणां हित कल्क वर्णवर्धनमुत्तमम् ।
माहिप क्वथितं क्षीरमेतेनोद्वर्त्तनं परम् ॥
सुवर्णकरणं स्त्रीणां तिलकानां च नाशनम् ।
उदुबर गवां मूत्रे शनैर्मृद्वाग्निना पचेत् ॥
तैलं मसूरसंयुक्तं तिलकानां विनाशनम् ।
प्रियंगवश्चंदनलोध्रमिश्र कालेयकं पांडुवटस्य पत्रम् ।
तोयेनपिष्टानिविलासिनीनांकुर्वंतिवक्त्राणिशशिप्रभाणि॥
केवला पयसा पिष्टास्तीक्ष्णशाल्मलिकंटकाः ।
त्र्यहमेतेनावालिप्त भवेत्पद्मोपमं मुखम् ॥
पिष्ट्वा जंबीरबीजं च क्षौद्रेण च गुडेन च ।
व्यगानामौषध श्रेष्ठ शशस्य रुधिरं तथा॥
सुरा सैधवसंमिश्रा मदं मद्यसमुद्भवम् ।
क्षिप्रमेव हरेत्पुसां पानतः संप्रयोजनात् ॥
ताबूलमदनाशाय तत्क्षण शीतवारिणा ।
सपिवेत्पुरुपः स्त्री वा चुलुकानि प्रयत्नतः ॥
तांबूलचूर्णदग्धस्तु काजिकस्य तु धारयेत् ।
सम्यग्लवणमिश्रस्य मधुकं दाहशातये ॥
ताबूलचूर्णदग्धस्तु धारयेत्त प्रयत्नतः ।

गंडूप तिलतैलस्य पुरुपः सुसरांछ्या ॥
प्रातरुत्थाय कोष्णेन वारिणा परिचूर्णितम् ।
मंदाग्नेर्दीपन मुख्यं संपिवेद्विश्वभेपजम् ॥
शुठीचूर्णसमायुक्तं यवक्षार समालिहन् ।
सर्पिषा प्रातरुत्थाय नरो वह्निं प्रदीपयेत् ।
शुंठीमागधिकाचूर्णं प्रातरुष्णांवुना पिबेत् ।
वातश्लेष्महर श्रेष्टमग्नेर्दीप्तिकरं परम् ॥
वातशूले विवधे च सामदोपेऽग्निमार्दवे ।
नागराम्बु सदा पथ्यं जीर्णाजीर्णविशंकिनाम् ॥
पिप्पली मधुसयुक्ता मेद'कफविनाशिनी ।
श्वासकासज्वरहरा पाडुप्लीहोदरापहा ॥
कासाजीर्णाऽरुचिश्वासहृत्पांडुकृमिरोगिणाम् ।
मंदाग्निविपमाग्नीना शस्यते गुडपिप्पली ॥
छर्द्यरोचकहृल्लासकडूकोठाम्लपित्तिनाम् ।
कफपित्तवता सेव्या विजया मधुना सह ॥
कामलापाडुहृद्रोगदुर्नामोदरगुल्मिषु ।
शोफानाहविवंधघ्नी प्रयोज्य सगुडाभया ॥
मदेऽनले रुचिकरं वातवधेऽर्शसा हितम् ।
गुडनागरक हंति कासश्वासमरोचकम् ॥
गुडार्द्रक वातहरं रुचिकृद्बलवर्द्धनम् ।
अग्निसदीपन हृद्यं वर्चोभेदकफापहम् ॥
विकाशी विशद. लंघी रोचनो दीपनो मतः ।

स्तंभाटोपानिलध्वंसकर्षणो लवणार्द्रकः ॥
मंदाग्नित्वं प्रतिश्याय पांडुतां विषमज्वरम् ।
नान्नाभिलापं कासं च हन्यात्तु मधुनार्द्रकम् ॥

मन्याहनुश्रवणलोचननासिकास्य-
भ्रूभागतालुगलशंखशिरोविकारान् ।
कृष्णा निहंति दशमूलकषायपीता
क्वाथोथवा सहकृतात्रिफलोद्भवश्च ॥

मानमाह—

गुंजाभिः सप्तभिर्माषः शाणो माषचतुष्टयम् ।
शाणौ द्वौ वटकः कोलस्तौ द्वौ कर्ष उदुंबरः ॥
अक्ष पाणितलं ज्ञेय सुवर्ण कवलग्रहः ।
पिचुर्बिडालपदकं शुक्तिः पाणितलद्वयम् ॥
तद्वयेन पल मुष्टि प्रकुंचो बिल्व उच्यते ।
द्वे पले प्रसृति विद्यात्तद्वय कुडवोंजालिः ॥
माणिकाष्टपलं ते द्वे प्रस्थमस्य चतुर्गुणम् ।
आढक कंसपात्रे तु चतुर्भिर्द्रोण उच्यते ॥
तत्पर्यायघटो मानं नल्वणार्मणशूर्पकाः ।
तुला पलशत ताभिर्विंशत्या भार उच्यते ॥
शुष्कद्रव्येष्विदं मानं द्विगुणं च द्रवार्द्रयोः ॥
ज्ञातव्यं कुडवादूर्ध्वं प्रस्थादिष्वपि मानतः ॥
द्विगुणेन तुलामानादिति मानविदो विदुः ॥

[illegible] प्रस्थ कुडवश्च पल पिचुः

शाणको माषकश्चैव यथापूर्वं चतुर्गुणम् ॥
सम्यक्प्रयोगात्सर्वेषां सिद्धिमाख्याति कर्मणाम् ॥
सिद्धिमाख्याति सर्वेषां गुणैर्युक्तो भिषग्वर ॥

इति मिश्रकाधिकारः ।

अथ उपसंहारः ।

यः श्रेष्ठस्तरणिप्रभावजनितो वंशः समालोक्यते
रामाद्याः पृथिवीश्वराः समभवन्यत्र प्रभावोन्नताः ।
नो वा यत्र युधिष्ठिरप्रभृतयो भूपा अभूवंस्ततः
सृष्टस्तोमरवंश एष विधिना सत्कर्मसंसेविना ॥
तत्राभवत्कमलसिंह इति प्रसिद्धः
सर्वागमाचरणसेवितदेवसिद्धः ।
तस्मादभूत्सुगतिभूपतिदेववर्मा
विद्याविनोदमतिराप्तपुण्यकर्मा ॥
श्रीदेववर्मात्मज एष धीरः स्वशस्त्रसंतापितशत्रुवीरः ।
श्रीवीरसिंहः क्षितिपालसिंह शास्त्रत्रयाद्ग्रंथमिमं व्यधत्त ॥

इति श्रीतोमरवंशावतंसरिपुभूलभैरवश्रीवीरसिंहदेवविरचिते ज्योतिश्शास्त्रकर्मविपाकायुर्वेदोक्तप्रयोगे वीरसिंहावलोकः ॥

समाप्तोऽयं वीरसिंहावलोकः ।